तिरुमल - तिरुपति देवस्थानम, प्रचूरण;

श्रीमद्वैखानसे - भगवच्छास्त्रे

# ॥ काश्यपज्ञानकाण्डः ॥

[ काश्यपसंहिता ]

आकुलमन्नाडुग्रामाभिजनैः वैयाकरणपञ्चाननाद्युपाधिसमलङ्कृतैः

पण्डित रॉ. भ. पार्थसारथिभट्टाचार्यैः

संशोधितः




१९६०

प्रकाशितम्

तिरुमल - तिरुपति देवस्थानम्, तिरुपति.

SGDF
Sri Gargeshwari Digital Foundation

Price] [Rs. 6/-

तिरुमल - तिरुपति देवस्थानम, प्रचूरण ;

SA 93

श्रीमद्वैखानसे भगवच्छास्त्रे

# ॥ काश्यपज्ञानकाण्डः ॥

( काश्यपसंहिता )

आकुलमन्नाडुग्रामाभिजनैः वैयाकरणपञ्चाननाद्युपाधिसमलङ्कृतैः
पण्डित रों. भ. पार्थसारथिभट्टाचार्यैः
संशोधितः




१९६०
प्रकाशितम्
तिरुमल - तिरुपति देवस्थानम्, तिरुपति.

SGDF
Sri Gargeshwari Digital Foundation

[ मूल्यम् रू. ६-०-०.

## श्रीमद्विखनोमुनि पञ्चश्लोकी



नाहः न क्षणदा न खं न धरणिः न ध्वान्तमासीद्यदा
न ज्योतिः न च वस्तु लभ्यमपरं श्रोत्रादिबुद्ध्या यदा ।
यन्निर्विक्रियमच्छमक्षरमनन्याधोनमेकाकृति
स्वैरं सत्रिगुणं सपूरुषमभूद्वैखानसाख्यं महः ॥ १ ॥

संज्ञामूर्तिसिसृक्षया स्वविहितस्वानुप्रविष्टात्मक-
स्वस्वध्यापितवेदजातधनिना येमार्थवान् श्रीपतिः ।
निर्माता सपरिच्छदत्रिजगतामाम्नायवक्त्रः स्वराट्
आस्तेऽसौ विखना मुनिः नियमितः स्फाराधिराज्ये पितुः ॥ २ ॥

औत्सुक्यादवधार्य मूर्धनि निजे मालामिवाज्ञां गुरोः
अभ्यार्चीदवतीर्य नैमिशवने यः शास्त्रसिद्धाध्वना ।
वेदानां व्यसनादिव स्वविहिते प्राचीनतां शिक्षितुं
सूत्रे वक्तृविपर्ययान्मुनिवरो देद्योत्ति वैखानसः ॥ ३ ॥

यो भृग्वत्रिमरीचिकश्यपमुखां शास्त्रप्रतिष्ठापिकां
लक्ष्यीकृत्य परम्परामचकथत् लक्ष्मीशपूजाविधिम् ।
प्राणैषीच्च हरेः समूर्तयजनव्याख्यानगर्भाः कृतीः
निर्वाणैकनिकेतनं विजयते योगी स वैखानसः ॥ ४ ॥

सिद्धान्तान्तरनाटकैः सदसदाकल्पावबद्धैः मुहुः
तत्त्वे बाढमुपप्लुप्ते जगति तत् सन्धुक्षयन् योऽश्वयीत् ।
तस्याचार्यवराध्वरीन्द्रनृहरिश्रीनिवासमुख्यात्मना
वैभाजितमुपास्महे विखनसो वाल्लभ्यनिघ्नं विभोः ॥ ५ ॥

पार्थसारथिः

SGDF
Sri Gargeshwari Digital Foundation

श्रीः

# काश्यपज्ञानकण्डस्थ विषयसूचिका



SGDF
Sri Gangadharan Digital Foundation

SGDF
Sri Gargeshwari Digital Foundation

SGDF
Sri Gargeshwari Digital Foundation

SGDF
Sri Gargeshwari Digital Foundation

SGDF
Sri Gangeshwari Digital Foundation

SGDF
Sri Gangeshwari Digital Foundation

SGDF
Sri Gangeshwari Digital Foundation



SGDF
Sri Gargeshwari Digital Foundation

श्रीः

# प्रथममुद्रणे - ग्रन्थपरिचयः

श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥

येन वेदार्थविज्ञेन लोकानुग्रहकाम्यया ।
प्रणीतं सूत्रमौखेयं तस्मै विखनसे नमः ॥

श्रीवैखानसभगवच्छास्त्रसंहितास्वन्यतमायाः अस्याः ज्ञानकाण्डसंहितायाः निर्माता 'कश्यपः पश्यको भवति, यत्सर्वं परिपश्यतीति सौक्ष्म्यात्' इति निगमनिरुक्तनिजमहिमविशेषः तत्र भवान् कश्यपः परमर्षिरिति, स च भगवतो विखनसः चतुर्षु शिष्येषु भृगुमरीच्यत्रिकश्यपेष्वन्यतम इति च तदीयग्रन्थसन्दर्भैरवसीयते । अस्यैव महर्षेः कृत्यन्तरे सत्यकाण्डतर्ककाण्डौ ग्रन्थगणनाध्याये भगवता मरीचिना परिगणितौ साम्प्रतमस्माभिर्नोपलभ्येते । शास्त्रमेतदधिकृत्य इतरैरस्य सतीर्थ्यैः भृगुमरीच्यत्रिभिः बह्व्यः संहिताः प्राणायिषत ।

आसाञ्चाप्तोपदेशमूलकत्वकथनाय शास्त्रावतारप्रकारो भगवता मरीचिना उपवर्णितः । यथा 'वैखानसं महाशास्त्रं सर्ववेदार्थसारभूतमप्रतर्क्यमनिन्दितं वैदिकैरुपसेवितं विष्णोराराधनं सर्वभूतहितार्थाय शाब्दं प्रमाणमवलम्ब्य विष्णुना विखनसे उक्तम् । विखनसा भृग्वादीनामुक्त'मिति (१०१ पटले) । यथा वा कश्यपेन 'तस्मादेवं विदित्वा लोकक्षयोद्भवपुण्यपापफलाधारसुखदुःखप्रवर्तन पत्न्यपत्यधनादीनामसारताञ्च परिज्ञाय ऐहिकामुष्मिकज्ञानहेतुकमनश्वरमप्रमेयमनादिमध्यान्तमार्षं शाब्दं प्रमाणमवलम्ब्य तत्सारभूतं सर्वार्थसाधकं भुक्तिमुक्तिफलप्रदमप्रतर्क्यमनवद्यमघौघघ्नं वैखानसमिदं शास्त्र'मित्यादि (२० अध्याये)

संहितास्वेतासु प्रतिपादिता अंशाः चरितक्रियाज्ञानयोगाख्यचतुर्विधविभाजकोपाधिमन्तः सन्दृश्यन्ते । यथाऽऽह मरीचिः विमानार्चनाकल्पे 'अथातो

SGDF
Sri Gargeshwari Digital Foundation

मरीचिं मुनयः प्रणम्य चरितक्रियाज्ञानयोगेषु चतुर्षु पूजामार्गेषु चरितं भगवता विखनस सूत्रे विस्तरेण प्रणीतमन्यत् सङ्क्षेपेणोक्तम् । तदुपन्यासो बहुप्रयोगक्रमेण क्रियामार्गस्त्वया प्रणीतः । भगवन्! तत्त्वज्ञानं योगञ्च श्रोतुमिच्छाम इत्ययाचन्त' इति । ( ८५. पटले )

तत्र चरितं नाम 'गार्भैः होमैः जातकर्मचूडामौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकञ्चैनो द्विजानामपमृज्यते ।

स्वाध्यायेन व्रतैः होमैः त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' । (मनुः २. ८)

इत्युक्तश्रौतस्मार्तधर्मानुष्ठानमुच्यते । क्रियेति श्रीमतो नारायणस्य दिव्यमङ्गलविग्रहसपर्योच्यते । तथा श्रीभागवते ।

'क्रियायोगं समाचक्ष्व भवदाराधनं विभो ।
पुत्रेभ्यो भृगुमुख्येभ्यो यथाऽऽह भगवानजः' । इत्यारभ्य
(स्कं. ११-२७-१)

'एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।
अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम्' ।
(स्कं. ११-२७-४९)

इत्यन्तेन ग्रन्थेन विखनसा भृगुमरीच्यादिभ्यः उपदिष्टं भगवदाराधनमेव प्रपञ्चितम् । ज्ञानयोगौ प्रसिद्धौ ।

तत्र चरितं विस्तरेण श्रीवैखानसकल्पसूत्रे उक्तमिति ज्ञानापेक्षया योगापेक्षया च अभ्यर्हितत्वेन आसु संहितासु क्रियायोगप्रपञ्चस्यैव विस्तरेणोपन्यासः क्रियते । अभ्यर्हितत्वञ्चास्याभिधीयिते 'तेष्वर्चनं सर्वार्थसाधनं स्यात्' इत्यारभ्य 'एवं सदा ध्यातुमशक्यत्वात् प्रतिमादिषु पञ्चमूर्तिनामभेदैः समावाह्याभ्यर्चयेत् । एतत्समूर्तार्चनस्य सर्वसिद्धिप्रदत्वात् गृहे देवायतने वा समूर्तार्चनमेव कारयेत् ।

SGDF Sri Gangeshwari Digital Foundation

अन्यथा न परमं पदमवाप्नोति' (मरीचिः ९६ पटले) इत्यन्वयमुखेन व्यतिरेकमुखेनापि ।

किञ्च क्रियावतो ब्रह्मविद्वरिष्ठत्वबोधनेन अस्यैव क्रियायोगस्य अभ्यर्हितत्वख्यापनं उपनिषत्स्वपि दृश्यते । यथा मुण्डके 'आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः' (मुं. ३-१-४) इति । अत्र क्रिया भगवदाराधनमेव । उपनिषदुपक्रमे तादृशक्रियायोगस्योपदेशपरम्पराप्रसङ्गे तत्प्रत्यभिज्ञापकसामग्रीलाभात् । यथा 'ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रधानामथर्वाय ज्येष्ठपुत्राय प्राह' (मुं. १-१-१) इति । अयमर्थः—'ब्रह्मा विखनाः ज्येष्ठपुत्राय अथर्वाय भृगवे सर्वविद्याप्रधानां ब्रह्मविद्यां भगवदाराधनरूपां प्राहे' ति गुरूपदेशपरम्परा पठिता । तथा श्रुतिरियमुपबृंहिता च श्रीशास्त्रे ।

'ततः परं चतुर्वक्त्रो जटाकाषायदण्डभृत् ।
नैमिशारण्यमासाद्य मुनिबृन्दनिषेवितम् ।
तपस्तप्त्वा चिरं कालं ध्यायंस्तेजस्तु वैष्णवम् ।
पश्चादपश्यद्विष्णूक्तमागमं विस्तरात्तदा ।
सङ्क्षिप्य सारमादाय शाणोल्लिखितरत्नवत् ।
धाता विखनसो नाम्ना मरीच्यादिसुतान्मुनीन् ।
अबोधयदिदं शास्त्रं सार्धकोटिप्रमाणक' मिति ।

(तात्पर्यचिन्तामणौ)

किञ्च पूर्वोक्तश्रुतिभ्योऽप्याराधनमेव ब्रह्मविद्येत्यपि लभ्यते । तदेवोक्तं भगवता बादरायणेन 'अपि संराधने प्रत्यक्षानुमानाभ्या' मित्याराधनस्य ब्रह्मविद्यात्वम् ।

भगवदाराधनस्य यथा उत्तमब्रह्मविद्यात्वं तथा विस्तरः भगवच्छ्रीनिवासमखिवेदान्तदेशिकैरनुगृहीतोत्तमब्रह्मविद्याग्रन्थे द्रष्टव्यः ।

SGDF
Sri Gargeshwari Digital Foundation

तादृशमाराधनं भगवद्दिव्यमङ्गलविग्रहसन्निधिमन्तरा न सेत्स्यति । यथाऽऽह भगवान् मरीचिः 'अथ भगवतः समाश्रयणं चतुर्विधं भवति । जपहुतार्चनध्यानानीति । सावित्रीपूर्वं वैष्णवीमृचमष्टाक्षरं भगवन्तं ध्यात्वाऽभ्यसेत् स जपः । अग्निहोत्रादिहोमो हुतम् । गृहे देवायतने वा वैदिकेन मार्गेण प्रतिमादिषु पूजयेत् तदर्चनम् । निष्कलसकलविभागञ्च ज्ञात्वा अष्टाङ्गयोगमार्गेण परमात्मानं जीवात्मना चिन्तयेत् तत् ध्यान'मिति । तेष्वर्चनं सर्वार्थसाधनं स्या'दिति (९६ पटले)

ततः तदर्चनप्रतियोगिदिव्यमङ्गलविग्रहस्वरूपं तत्र भगवतः सान्निध्यसङ्क्रमप्रकारः भक्तितत्पर्वविशेषाणामर्चनाङ्गत्वञ्च प्रतिपाद्यते । यथा 'सोऽव्ययः सर्वव्याप्याकाशोपमः निष्कलः परमात्मा ज्ञानेन भक्त्या च युक्तस्यान्तः सन्निहितो भवति । 'आत्मा गुहायां निहितोऽस्य जन्तोः' इति श्रुतिः । तस्माच्छक्तिमता तेन सकलं सङ्कल्प्य भक्त्या मन्त्रैश्च प्रतिष्ठापिते बिम्बे भक्तानुकम्पया सकलः तद्बिम्बे समाविष्टः देवः सन्निहितो भवेत् । अव्यक्तं शाश्वतमनादिमध्यान्तमतीन्द्रियं देवैरप्यनभिलक्ष्यं यद्वैष्णवं पदं तत्प्राप्तिफलं तदर्चन'मिति (काश्यप ६९ अध्याये)।

अन्यत्र च 'ब्रह्मादयोऽपि तद्रूपलक्षणनिश्चयं ज्ञातुमशक्ताः चित्तभित्तौ तद्रूपं भक्तितूलिकया सङ्कल्प्य वर्णैरावेष्ट्य आलोकयन्ति । तस्माद्भक्तिरेव कारणम् । अभीक्ष्णदर्शनयोग्यं तद्भगवद्रूपं कल्पये'दिति' (काश्यप. ५१ अध्याये)।

अन्यत्र च 'अथातो भगवतो नारायणस्याकृतिलक्षणं व्याख्यास्यामः । यस्यास्यमग्निः द्यौर्मूर्धा खं नाभिः भूः पादं चक्षुषी अर्कनिशाकरौ दिक् श्रोत्रे ज्योतींष्याभरणानि उदधयोऽम्बरं भूतानीन्द्रियाणि अस्याऽऽकृतेः प्रमाणत्वं कल्पितं भृग्वादिभिः । तद्धेतुभिर्नावमन्तव्यममीमांस्यमाज्ञासिद्धमिति ज्ञात्वा तदुक्तविधिना कारयेत्' इति । (काश्यप ५० अध्याये)

'समूर्तार्चनमेव कारये'दिति पूर्वं विहितमर्थमेव व्यतिरेकमुखेन समर्थयति श्रुतिः । यथा मुण्डके 'नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात्' (मुं. ३-२-४) इति । अलिङ्गादिति प्रतिमारहितादित्येव स्वारसिकोऽर्थः । सा च विष्णुप्रतिमेति च । यथोपबृंहितः कश्यपेन श्रुतेरस्या अर्थः ।

SGDF
Sri Gargeshwari Digital Foundation

'विष्णुपूजाविहीने देशे विप्रो न जात्वपि वसेत्' इति । (काश्यप. १७ अध्याये) तथा 'तस्मात् सर्वप्रयत्नेन देवीभ्यां सार्धं विष्णुं भगवन्तं सुवर्णरजतताम्रादीनामन्यतमेन षडङ्गुलादहीनमुपकल्प्य यथाविभवमाराध्य तत्प्रमुखे विधानेन हुत्वैवाश्नीयात् । अन्यथा आत्मघाती भवति । विष्णुपूजाविहीनं यद्वेश्म तत्पक्कणैः समम् । तद्विप्रमुख्यैः न प्रवेश्यम्, तदधिपेन नासितव्यम्, न सम्भाष्य'मित्यादि (काश्यप १९ अध्याये)

यथा वा 'गृहं श्मशानं तव बिम्बवर्जित' मित्यादि भागवतवचनम् ।

तथाच 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु' । (९-३४)

'सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते' ॥ (९-१४)

इत्यादीनां श्रीगीतावचनानामर्चनाविधायकत्व एव स्वारसिकनिर्वाहसिद्धिः । भक्त्या उपासत इति भक्तियुक्तोऽर्चयेदिति ।

किञ्च 'प्रवः पान्तमन्धसो धियायते महे शूराय विष्णवे चार्च' तेति (ऋग्वेदसंहिता, मं १ सू. १५५ मं १) श्रुतिप्रयोगरूपं 'अथाग्नौ नित्यहोमान्ते विष्णोर्नित्यार्चा' इत्यारभ्य 'भगवन्तं नारायणमर्चयेत्तद्विष्णोः परमं पदं गच्छ'तीति श्रीवैखानससूत्रं (प्रश्न ४-१३) उपनिषत्कृत्य प्रवृत्तेऽस्मिञ्छास्त्रे प्रकृतार्चनानुबन्धिकृत्स्नप्रमेयजातस्य व्याख्याकरणं नान्तरीयकं सम्पद्यते । ततः अर्चनार्थमर्चनीयदिव्यमङ्गलविग्रहस्य सन्निधापने तस्य उपादानद्रव्यभेदेन निर्माणे प्रकारभेदः चित्रचित्रार्धचित्राभासभेदेन तन्निर्माणे प्रकारान्तरेण भेदः दिव्यमङ्गलविग्रहस्य आभिरूप्यसम्पादनाय तन्निर्माणोपयोगिदशतालादिमानकथनं तादृशविग्रहरक्षणाय देवायतनमण्डपगोपुरप्राकारादिनिर्माणं तेषां दीर्घस्थित्युपकारकवृत्तिकल्पनं आलयाश्रयग्रामाग्रहारादिनिर्माणमित्यादयः प्रथमोपस्थिता विषया भवन्ति । अतश्च तादृशदिव्यमङ्गलविग्रहस्य श्रीशास्त्रसिद्धं प्रतिष्ठापनं नित्यार्चनं त्रिविध उत्सवः नवविधं स्नपनं तथात्र स्खलितेषु प्रायश्चित्तमित्यादयः अनन्तरमुपतिष्ठन्ति ।

SGDF
Sri Gargeshwari Digital Foundation

अन्तरा च प्रसङ्गात् काम्यकल्पाः अद्भुतसम्भवनच्छान्त्यादयः प्रकृता भवन्तीति उक्तविषयविभागेन संहिता व्याख्याताः ।

किञ्च श्रीसूत्रे ' विष्णोर्नित्यार्चे ' त्यत्रत्यविष्णुशब्दं विवृणुते काश्यपः । यथा ' अथ विश्वतश्चक्षुः विश्वतोमुखं विश्वतोहस्तं विश्वात्मकं विश्वगर्भं विश्ववेत्तारं विश्वेन्द्रियगुणाभासं विश्वेन्द्रियविवर्जितमनादिनिधनं व्योमाभं यद् ज्ञातृ ज्ञेयं ज्ञानविहीनं ज्ञानघनं तदेव जाग्रत्स्वप्नसुषुप्तितुर्यावस्थानगं बहिःप्रज्ञान्तःप्रज्ञप्राज्ञावस्थं वैश्वानरतैजसहृदयाकाशरूपेण स्थूलं प्रविभक्तमानन्दं भुञ्जानं ब्रह्म तुर्यं चतुष्पादमामनन्ति । तदेव ब्रह्म सत्त्वोत्कर्षनिकर्षाभ्यां प्राणिषु चतुर्धा भिद्यते सत्त्वतः पादतोऽर्धतः त्रिपादात्केवलात् । धर्मज्ञानैश्वर्यवैराग्यविषयाश्चतस्रो मूर्तयस्त्विमा भवन्ति । आसु मूर्तिषु कूटस्थः सूक्ष्ममूर्तिः सत्तामात्रः सोऽत्र परं ब्रह्म विष्ण्वाख्यः ' इति (काश्यप २५ अध्याये) विष्णुः सर्ववेदान्तसिद्धं ब्रह्मेत्युक्तम् ।

स च विष्णुः श्रीसहाय एवार्चनीय इति तत्रैवोच्यते । यथा 'प्रकृतिपुरुषावुभावनादी ताभ्यां लोकप्रवर्तनम् । विकारगुणास्सर्वे प्रकृतिसमुद्भूताः कार्यकारणकर्तृत्वे हेतुः प्रकृतिः सा प्रकृतिः श्रीरिति व्याख्याता ' इति (काश्यप ३८ अध्याये) । तथा ' मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वर ' मिति तत्क्लेशसंश्लेषाल्लोकयात्रामूलादेवी । तस्मात्तमनयैव सह देवेशमर्चयन्ति परमर्षयः । सा देवी श्रीरिति प्रोक्ता । सा प्रकृतिः । सा शक्तिः । तदभिन्नाः स्त्रियः सर्वाः पुरुषास्तदभिन्नाः सर्वे । ताभ्यां स्थितिः । तस्मात्सहैवार्चये ' दिति (काश्यप २५ अध्याये)

' विष्णोर्नित्यार्चा सर्वदेवार्चा भव ' तीति श्रीवैखानसं सूत्रम् । तत्र विहितमर्चनं साकल्यमेव । ' षडङ्गुलादहीनं तद्रूपं कल्पयि ' त्वेत्युक्तत्वात् । उक्तञ्च ' मानसी होमपूजा च बेरपूजेति सा त्रिधा ' इति त्रेधा ' अमूर्तं समूर्त ' मिति द्वेधा चार्चनम् । समूर्तमिति बिम्बार्चनमुच्यते । तथा चोक्तम् ' अर्चनं द्विविधममूर्तं समूर्तञ्चेति । अग्नौ हुतममूर्तं समूर्तं तद्बिम्बेऽर्चनम् । समूर्ते चक्षुर्मनसोः प्रीतिः सदा संस्थितिश्च ' इति । (काश्यप १ अध्याये)

SGDF
Sri Gargeshwari Digital Foundation

'भक्त्या भगवन्तं नारायणमर्चये' दिति श्रीसूत्रे भक्तेरर्चनस्य सन्निहितोपकारकत्वबोधनात् भक्तिप्रशंसा बहुशः तत्र कृता दृश्यते। यथा 'तपोभिः कर्मभिः पुण्यैर्वाऽन्यैः नाप्नुयाद्वैष्णवं पदं, भक्त्यैव निनयेन्नान्यैः। भक्तिरेव परा पुण्या भक्तिरेव शुभप्रदा। तृष्णावैतरणीयानं संवर्तकातिवृष्टिरक्षा कामहालाहलाग्न्यमृतधारा सङ्कल्पबीजहा देहबन्धमोक्षप्रदायिनी सङ्कल्पकण्टकाविद्धविशल्यकरणी योगर्ध्यङ्कुरवर्धनी अस्मिकक्रचऽछेदरोपसञ्जीविनी दुःखत्रयजालभेदिनी सुखचिन्तामणिप्रदा सर्तॄणां भक्तिः' इति। (काश्यप २० अध्याये)

'परमं पदं गच्छ' तीत्यस्य विवरणञ्च। यथा 'सर्वदेवमयस्य देवेशस्यार्चनं सर्वशान्तिकरं वेदानां वैदिकानामप्यभिबृंहणम्। एतदेवं यत्नेनापि भक्त्या यः कुर्यात् स पुत्रदारक्षेत्रमित्रस्वकुलपशुभृत्यवाहनादिसमृद्धिं सुवर्णरत्नधान्यादिसर्वसम्पदं व्याध्याद्यशुभनाशनञ्च लब्ध्वा अभीष्टानि सर्वाणि सुखानि इह लोके चिरमनुभूय तदव्ययं शाश्वतं देवैरप्यनभिलक्ष्यमतीन्द्रियं वैष्णवं परमं पदं गच्छति। तस्यैकविंशतिपितरः पूर्वजाश्च एकविंशत्यपरजाताश्च विष्णुलोके महीयन्ते' (काश्यप ६८ अध्याये)' इत्यर्चकस्य सर्वोत्तरमैहिकभोगानुभवमुक्त्वा भगवत्पदप्राप्तिरप्युदिता। तथा महाप्रतिष्ठान्ते च 'समाप्ते वैष्णवयागे भोगैश्वर्यं प्रतिष्ठितेत्यक्त्वा कलेबरं सद्यः शङ्खचक्रधरः श्यामलाङ्गश्चतुर्भुजः श्रीवत्सवक्षाः भूत्वा वैनतेयभुजमारूढः सर्वदेवनमस्कृतः सर्वान् लोकानतीत्यासौ विष्णोः सायुज्यमाप्नुयात्। अन्यलोकगताः सर्वे पुनरावर्तिनः विष्णुलोकगतानां नास्त्यावृत्तिः' इति (काश्यप २० अध्याये) परमपदस्यापुनरावृत्तिलक्षणत्वञ्च प्रतिपादितम्।

तथोक्तं गीतासु 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इति। (८-१६)

'मामुपेत्य तु कौन्तेय दुःखालयमशाश्वतम्।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः' इति च। (८-१६)

SGDF
Sri Gargeshwari Digital Foundation

'गृहे देवाऽयतने वा' इति सूत्रादिदमर्चनं गृहार्चनमालयार्चनमिति द्वेधा अनुष्ठीयते। गृहेषु गृहिभिः आलयेषु तदधिकारिभिश्च। तद्विस्तरस्तु व्याख्यातः

यथा 'आत्मार्थं वा परार्थं वा गृहे देवाऽलयेऽपि वा।
अर्चनं वासुदेवस्य लक्षकोटिगुणं भवेत्।
उत्कृष्टः परशब्दोऽयं परार्थो मोक्षवाचकः।
मुमुक्षूणां मोक्षदानात् परार्थ इति कथ्यते।
स्वार्थं गृहार्चनं प्रोक्तं परार्थं त्वालयार्चनम्।
परार्थं स्याज्जगच्चक्षुः स्वार्थं स्यात् गृहदीपिका' इति।

(अर्चनानवनीते २ पुटे)

गृहार्चनन्तु चरितानुगृहीतत्वेन आलयार्चनमेवात्र संहितासु प्रपञ्चयते। इदं पुनरर्चनं द्वेधा त्रेधा वा विभक्तं परिदृश्यते। 'वैखानसं पाञ्चरात्र' मित्याद्ये वैखानसं पाञ्चरात्रं भागवतमिति द्वितीये च स विभागो ज्ञेयः। यथा काश्यपीये 'वैखानसं पाञ्चरात्रमिति विधानद्वयं विष्णोस्तन्त्रम्। वैखानसं सौम्यमाग्नेयं पाञ्चरात्रम्' इति। (१०५ अध्याये) यथा वा मरीचिसंहितायां विमानार्चनाकल्पे 'वैखानसं वैदिकं वैदिकैरर्चितमैहिकामुष्मिकफलप्रदं पाञ्चरात्र-माग्नेयमवैदिकमामुष्मिकफलप्रदम्। सौम्यं सर्वत्र सम्पूज्य' मिति (७७ पटले)

तथा क्रियाधिकारे भृगुः।

'वैखानसं पाञ्चरात्रं तथा भागवताभिध' मिति।

तथा श्रीभागवते

'वैदिकः तान्त्रिको मिश्र इति मे त्रिविधो मखः।
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत्'(११-२७-१०.)

इत्यारभ्य एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः।
अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिता' मित्यन्तम्॥

SGDF
Sri Gangeshwari Digital Foundation

'वैदिक' मित्यनेन बुभुक्षूणां मुमुक्षूणाञ्च श्रौताग्निहोत्रफलसाधनत्वमपि वैखानसार्चनस्य निरूप्यते सूत्रकारैरेव । 'यज्ञेषु विहीनं तत्सम्पूर्णं भव' तीति (प्र. ४-१३.) । तथा कश्यपेनापि 'अतस्तद्ग्रामवासिनां यजमानस्य राष्ट्रस्य च सामान्यमग्निहोत्र' मिति (काश्यप २५ अध्याये)। तथा तेनैवान्यत्र 'तस्मादालये विधिना विष्णोः नित्यार्चनमनाहिताग्नीनामग्निहोत्रसमादेतच्चाग्निहोत्रफलं ददाति । आहिताग्नीनामप्येतत्सर्वप्रायश्चित्तहेतुकं सर्वकामावाप्त्यर्थञ्च द्वितीयं भवति । यतो यजमानमरणेऽप्यालयार्चनं भूम्यामन्यैरविच्छिन्नं प्रवर्त्यते । ततः शाश्वतं तिष्ठेत् । एतन्नित्यं परमं पुण्यं भक्त्या यत्नतः कुर्यात् । ग्रामादिषु चैतद्वास्तुनिवासिनां सामान्यमग्निहोत्रं सर्वसम्पत्करमिति ब्रह्मा चाऽशंसत्' इति । ( काश्यप १ अध्याये )

'वैदिकै' रिति वैखानससूत्रोक्तवैदिकसकलसंस्कारशालिभिरित्युक्तं भवति । उक्तञ्च वैखानसान् प्रस्तुत्य श्रीमद्वेङ्कटनाथवेदान्तदेशिकेन 'दृश्यन्ते ह्येते वंश-परम्परया वेदमधीयानाः वैखानससूत्रोक्तवैदिकसकलसंस्कारशालिनः वर्णाश्रमधर्म-कर्मठाः भगवदेकान्ताः ब्राह्मणाः' इति ( न्यायपरिशुद्धौ शब्दखण्डे १ आह्निके १९६ पुटे श्रीरङ्गमुद्रणे ).

किञ्च वैखानसपाञ्चरात्रशास्त्रयोः प्रक्रियाभेद इव 'वैदिकैः दीक्षितैः' इति प्रतिनियताधिरिकत्वस्यापि सिद्धत्वात् वैदिकशब्दो दीक्षितेतरत्वमभिदधाति । एवञ्च पाञ्चरात्रशास्त्रस्य असाधारण्येन पञ्चसंस्कारदीक्षाया विहितत्वेन पाञ्चरात्र-शास्त्रोक्तताद्दशदीक्षाविरहितैरित्यर्थान्तरञ्च 'वैदिकै' रित्यनेन सिद्ध्यति । उक्तञ्च निगमान्तमहादेशिकेनान्यत्र ।

'त्वां पाञ्चरात्रिकनयेन पृथग्विधेन वैखानसेन च पथा नियताधिकाराः ।
संज्ञाविशेषनियमेन समर्चयन्तः प्रीत्या नयन्ति फलवन्ति दिनानि धन्याः'

इति ( शरणागतिदीपिका श्लो. ३२. )

उक्तञ्च श्रीमद्भिः गोष्ठीपुराभिजनैः — 'विष्णुतन्त्रविभाग-प्रकरणे वैखानसाद्भेदकत्वेन दीक्षायोग उक्तः । दीक्षा पञ्चसंस्कार-



SGDF
Sri Gargeshwari Digital Foundation

रूपाऽपीति । अत्र ईश्वरसंहिताश्रीप्रश्नसंहितादिषु व्यक्तम् ।

आनन्दसम्हितायाम् :—

'वैखानसकुले जातः पाञ्चरात्रेण दीक्षितः ।
न दीक्षितो न जातो वै स वै देवलकः स्मृतः ।
पाञ्चरात्रविधानज्ञो दीक्षाविरहितोऽर्चकः ।
कल्पदेवलक' इति दीक्षारहितपाञ्चरात्रोक्ताराधनस्य निषेधात्

श्रीनित्योक्ताराधनस्य पाञ्चरात्रमूलकत्वेनोक्तत्वात् तदर्थं पञ्चसंस्कारस्यैव सर्वै-रप्यङ्गीकारात् तस्य दीक्षात्वमवश्याश्रयणीयम् ।

दीक्षाशब्दस्थाने 'शङ्खचक्राङ्कितभुजान् गृह्णीयादन्यसूत्रिण' इति शङ्खचक्राङ्कनकथनाच्च तदभावः स्पष्टमवसीयते । तापविधायकानां पञ्चसंस्कारान्तर्गततापपरत्वेन तदतिरिक्तकेवलतापविधिः तत्प्रयोगविधिरित्यादिकं नास्ति । दीक्षाशब्दस्य सङ्कोचे प्रमाणाभावः । सामान्ये पक्षपातात् । एतेषु नाविश्वसितव्यम् । वहुष्वद्यापि दर्शनात् । न्यायपरिशुद्धिश्रीपाञ्चरात्ररक्षादिषूदाहरणाच्च । एतद्विरोधिवचनानि पूर्वापराप्रदर्शनात् कुत्राप्यनुदाहरणात् सच्चरित्ररक्षायामधिकारान्तरयोरिव सुदर्शनादिधारणविधानाधिकारे अनुपन्यासाच्च शङ्कास्पदानि । सामान्यप्रवृत्तवचनानि च उत्सर्गापवादन्यायात् 'सात्त्वतं विधि' मिति विशेषवचनदर्शनाच्च सङ्कुचितानि । वचनाभावेऽपि विशेषविषय आचार एव सच्चरित्ररक्षोक्तन्यायेन शान्तविरोधः स्वविषयं व्यवस्थापयति । नित्यत्वमर्चनाङ्गत्वञ्च अधिकारिभेदप्रयोगभेदनियतमिति न हानिः । मुमुक्ष्वधिकृतानि पञ्चसंस्कारवचनानि उभयप्रधानान् वैखानसान् नाधिकुर्वते' इति ।

अतश्च वैदिकाधिकारिण्यस्त्वेताः संहिताः भवन्ति ।

संहितानामासां विद्यास्थानेषु कुत्र वा अनुप्रवेश इत्याशङ्क्य स्मृतित्वेन प्रामाण्यं निरधारि न्यायपरिशुद्धौ । यथा 'ननु च भार्गवादीनि न तावत् कल्पसूत्राणि तथाऽनभ्युपगमात् अप्रसिद्धेः अयुक्तेश्च । न स्मृत्यन्तराणि । मन्वादिष्वपाठात् तद्वत्प्रसिध्यभावाच्च । न च स्वतन्त्रतन्त्रान्तराणि । साङ्ख्य-

SGDF
Sri Gargeshwari Digital Foundation

योगादिसहपाठादर्शनात् । वैखानसानुवर्तनाच्च । तत्कतमां विधामवलम्ब्यामीषां प्रामाण्यमुच्यते ? मन्वत्रिभार्गवादिवत् नारदीयादिवच्च धर्मशास्त्रतयैव तेषामपि प्रामाण्यम् । अष्टादशपरिगणनस्योपलक्षणतायाः प्रामाणिकैरभ्युपगमात् । स्मृत्यन्तरेषु देवोत्सवादिप्रपञ्चनं नास्तीति चेत् । मा भूत् प्रपञ्चनम् । स्वरूपं तावदनुज्ञातं तत्प्रपञ्चनपराणा ' मिति । ( १९५ पुटे )

विशेषतश्चास्मिन् ज्ञानकाण्डे ।

१. वास्तुविधानव्याख्यावसरे ' तत्र वैष्णवं ब्राह्मं रौद्रं गारुडं भौतिकमासुरं राक्षसं पैशाचमिति नवविधो देशः । तत्र रूढतरुजन्तुगन्धरसैः परीक्ष्याहरेत् ' ( ११ अध्याये ) इत्यध्यायेनोक्तं वस्तु अपूर्वमतिमनोहरमुपलभ्यते । प्रकारान्तरेण सवादस्त्वस्य चतुर्धा देशविभागः ' तोल्काप्पिय ' ( தொல்காப்பியம் ) मिति द्राविडलक्षणग्रन्थे दृश्यते ।

२. आलयं निर्मित्सुः यथा स्वं रिक्थं विभजेत तत्प्रकार उपदिश्यते । ' स्वार्थं त्रिभागं कृत्वा एकं कुटुम्बभरणार्थमाहृत्य द्विभागं दत्वा तेनैव विधानेन विमानमुपक ' ल्प्येत्यादि ( २१ अध्याये )

३. अनाढ्यस्यापि परहस्तैः याच्ञालब्धार्थैश्च भगवन्मन्दिरनिर्माणे अनुमतिर्दीयते । यथा ' अशक्तश्चेत् स्वयं सम्पादयितुं राज्ञा आढ्यैः ग्राममुख्यैः वणिग्भिरनुलोमैश्च कारये ' दिति ( २१ अध्याये ) । तथा ' पूर्वमेव सुपर्याप्तं भोगं कृत्वा बालागारे भगवन्तं प्रतिष्ठाप्यारम्भणं यत्तत्सामृतं बालागारं विना विमानमात्रमेव कृत्वा स्वार्थैः याच्ञालब्धार्थैश्च कृत्वा बेरादीन् कल्पयेदेतद्धारकमित्येतयोरेकमालम्ब्यारभेत ' इति ( २१ अध्याये )

अयमेव हारकपक्षः श्रीभागवते । ' मदर्चां सम्प्रतिष्ठाप्य मन्दिरं कारयेत् दृढम् ' (स्कं ११ – १७-५०) इत्यत्र परामृश्यते । इदञ्च रहस्यमद्यावधि व्याख्यातृभिः न परामृष्टमिव भाति । यतोऽत्र काचन व्याख्या " मन्दिरं कार-

SGDF
Sri Gurgeshwari Digital Foundation

यित्वा मदर्चां सम्प्रतिष्ठापये' दिति वाच्ये वैपरीत्योक्तिः मन्दिरे अवश्यार्चा-प्रतिष्ठाज्ञापनाय 'भवापवर्गो भ्रमतो यथा भवे' दितिव" दिति ।

( दीपिकादीपिनी टिप्पणी-क्रमसन्दर्भश्च )

४. आलयरक्षणार्थं विविधवृत्तिकल्पनप्रकारः उपदिश्यते । यथा 'तत्र बहुशः तूष्णीं कर्षयित्वा बीजानुप्त्वा पुरतस्तत्क्रममार्गेण भोगैश्वर्यवशादर्चन-स्नपनोत्सवबल्यर्थमेतावत् पुष्पगन्धानुलेपनार्थमेतावत् विष्णुपञ्चदिनपूजार्थमर्चन-दक्षिणार्थमेतावत् शुश्रूषाकारिणामेतावत् वादित्रजीविनां भक्तानामतिथीनामेतावत् शिष्याणामध्येतॄणामेतावत् अप्सरसां गायकनर्तकशब्दकानां विपञ्चीरववादिनां मर्दलकानामेतावत् खण्डस्फुटितनिवृत्त्यर्थं नवकर्मक्रियां प्रत्युपकारिणां दानार्थ-मेतावदिति निश्चित्य तं सर्वं पूर्ववत्ताम्रपत्रे अर्पयित्वा सीमाविनिर्णयं कृत्वा आचार्यमर्चकं वा वस्त्राङ्गुलीयककुण्डलादिभिरलङ्कृत्य तद्धस्ते सोदकं दद्यात् । एतत्सर्वेषामेव भव' तीति (२१ अध्याये) । अयमेव विषयः पुनर्दार्ढ्यायोपन्यस्यते अन्यत्र । यथा 'प्रतिष्ठान्तप्रभृति नित्यमहीनमविच्छिन्नं समग्रं चिरकालार्चनं यथा गच्छेत् तथा दीर्घस्थितिमविरोधात् समवेक्ष्य नानाविधभूमिभोगान् अत्यन्तपुष्क-लान् यत्नेन भगवत्पूजनार्थं तत्पूजकानामाचार्यादीनां नित्यदक्षिणार्थञ्च कल्पयित्वा देवस्य परिच्छदांश्च दत्वा तथैव चिरकालं नित्यार्चनं कारयेत् । चिरकालार्चनेन अभीष्टान् सर्वान् कामान् चिरमवाप्नोति । तथा भोगम् । अज्ञानादर्थलोभाद्वा न कुर्यात् चेत् महादोषो भवेत् । देवार्थं कल्पितं हिरण्यपशुभूम्यादि सर्वमन्यत् द्रव्यञ्च विष्णोरिदमिति सञ्चिन्त्य आचार्यहस्ते अर्चकहस्ते वा जलेनैव दद्यात् । तत्सर्वं विष्णोर्दत्तमेव भवेत्' इति । (६८ अध्याये)

५. विप्रेभ्यो ग्रामगृहादिदानप्रकारोपदेशो यथाः— 'सर्वदेवमयं तेजो वैष्णवं तद्विप्ररूप' मितीत्यारभ्य 'सुप्रसन्नान् वैष्णवान् विप्रानाहूय देववत्ता-नभ्यर्च्य तेभ्यो नृपाज्ञया ग्रामादिप्रान्तानभिज्ञाप्य अनुमान्य स्थलवल्मीकाङ्घ्रि-पारामतटाकह्रदनद्युपकुल्यादिभिः सीमां विनिश्चित्य तत्र तुषाङ्गारशर्करायो-मलसिकतादीन् खनित्वाऽर्पयित्वा करेणुनाऽवयुत्य च विख्याप्य राज्ञः साम्रा-

SGDF
Sri Gargeshwari Digital Foundation

ज्याब्दाश्रयनामविप्रनामादिकं ताम्रपत्रतले लिखित्वाऽर्पयित्वा ददे ' दिति ( १४ अध्याये )

६. दत्तापहारनिन्दा यथा:— 'सुरविप्रक्षेत्रं गोष्पदं वापि यो हन्यात् त्रिसप्तनरकान् घोरान् गत्वा भूयः तिरश्चां गतिसहस्रमवाप्नुयात्। तस्मात् सर्वप्रयत्नेन विषवह्निसमं राजा सुरब्राह्मणदत्तं परिहरेदिति विज्ञायते ' इति। ( १७ अध्याये )

७. दत्तस्य नाशापहारादिषु पालने फलविशेषकथनं यथा:— 'यत्नादप्येतत्पालनमुपर्यधिकवर्धनं वा यः कुर्यात् सोऽपि प्रथमेष्टकादि सर्वकर्मफलं लभते ' इति। (६८ अध्याये)।

८. भगवतो विभवावतारनिमित्तोपदेशो यथा:— 'यदा ग्लानिः धर्मस्य परिपालनाय नारायणाद्भगवतः प्रत्यंशरूपाणि युगे युगे प्रजातानि भवन्ति। तानि रूपाणि संस्थाप्यार्चये ' दिति। ( ३६ अध्यायें )

९. महर्षेः सहजवाङ्माधुरी यथा:— 'इन्दिरेशस्य मन्दिरं सुन्दरं कृत्वा ' इति 'बालकैः वालुकाकल्पितमप्यघौघध्वंसकृत् ' इत्यादि। (२० अध्याये)

१०. ग्रन्थान्तरसंवादो यथा:— 'श्रुतिः, श्रुतयो वदन्ति, इति ब्राह्मणम्, केचित्, अन्ये, इति भृगुः, इत्यङ्गिराः, इत्यात्रेयः, इति भृग्वत्रिमरीच्यादयः, ब्रह्मवादिनो वदन्ति, ब्रह्मा चाशंसत् ' इत्यादयः सन्दृश्यन्ते। तद्विवरणन्तु ग्रन्थविस्तरभिया नात्र विलिख्यते।

११. पिष्टपशुसाध्यः विष्णुयागोऽत्र प्रसिद्धः ( २९ अध्याये )। तथा काम्यकल्पेषु सर्वार्थसाधनः पौण्डरीककल्प उपदिष्टः ( ५-८ अध्यायेषु )। तथा श्रीमदष्टाक्षरमहामन्त्रकल्पश्च। ( १०६ – १०८ अध्यायेषु )।

अत्रोक्तप्रकारस्यैव भगवतो नित्यार्चनस्य वैखानसमहाजनेषु वर्तते स्फारः प्रचारः।

SGDF
Sri Gangeshwari Digital Foundation

यित्वा मदर्चां सम्प्रतिष्ठापये' दिति वाच्ये वैपरीत्योक्तिः मन्दिरे अवश्यार्चा-प्रतिष्ठाज्ञापनाय 'भवापवर्गो भ्रमतो यथा भवे' दितिव" दिति ।

( दीपिकादीपिनी टिप्पणी-क्रमसन्दर्भश्च )

४. आलयरक्षणार्थं विविधवृत्तिकल्पनप्रकारः उपदिश्यते । यथा 'तत्र बहुशः तूर्ष्णीं कर्षयित्वा बीजानुप्त्वा पुरतस्तत्क्रममार्गेण भोगैश्वर्यवशादर्चन-स्नपनोत्सवबल्यर्थमेतावत् पुष्पगन्धानुलेपनार्थमेतावत् विष्णुपञ्चदिनपूजार्थमर्चन-दक्षिणार्थमेतावत् शुश्रूषाकारिणामेतावत् वादित्रजीविनां भक्तानामतिथीनामेतावत्त शिष्याणामध्येतॄणामेतावत् अप्सरसां गायकनर्तकशब्दनकानां विपञ्चीरववादिनां मर्दलकानामेतावत् खण्डस्फुटितनिवृत्त्यर्थं नवकर्मक्रियां प्रत्युपकारिणां दानार्थ-मेतावदिति निश्चित्य तं सर्वं पूर्ववत्ताम्रपत्रे अर्पयित्वा सीमाविनिर्णयं कृत्वा आचार्यमर्चकं वा वस्त्राङ्गुलीयककुण्डलादिभिरलङ्कृत्य तद्धस्ते सोदकं दद्यात् । एतत्सर्वेषामेव भव' तीति (२१ अध्याये) । अयमेव विषयः पुनर्दार्ढ्यायोपन्यस्यते अन्यत्र । यथा 'प्रतिष्ठान्तप्रभृति नित्यमहीनमविच्छिन्नं समग्रं चिरकालार्चनं यथा गच्छेत तथा दीर्घस्थितिमविरोधात् समवेक्ष्य नानाविधभूमिभोगान् अत्यन्तपुष्क-लान् यत्नेन भगवत्पूजनार्थं तत्पूजकानामाचार्यादीनां नित्यदक्षिणार्थञ्च कल्पयित्वा देवस्य परिच्छदांश्च दत्वा तथैव चिरकालं नित्यार्चनं कारयेत् । चिरकालार्चनेन अभीष्टान् सर्वान् कामान् चिरमवाप्नोति । तथा भोगम् । अज्ञानादर्थलोभाद्वा न कुर्यात् चेत् महादोषो भवेत् । देवार्थं कल्पितं हिरण्यपशुभूम्यादि सर्वमन्यत् द्रव्यञ्च विष्णोरिदमिति सञ्चिन्त्य आचार्यहस्ते अर्चकहस्ते वा जलेनैव दद्यात् । तत्सर्वं विष्णोर्दत्तमेव भवेत्' इति । (६८ अध्याये)

५. विप्रेभ्यो ग्रामगृहादिदानप्रकारोपदेशो यथाः—'सर्वदेवमयं तेजो वैष्णवं तद्द्विजरूप' मितीत्यारभ्य 'सुप्रसन्नान् वैष्णवान् विप्रानाहूय देववत्ता-नभ्यर्च्य तेभ्यो नृपाज्ञया ग्रामादिप्रान्तानभिज्ञाप्य अनुमान्य स्थलवल्मीकाङ्घ्रि-पारामतटाकह्रदनद्युपकुल्यादिभिः सीमां विनिश्चित्य तत्र तुषाङ्गारशर्करायो-मलसिकतादीन् खनित्वाऽर्पयित्वा करेणुनाऽवयुत्य च विख्याप्य राज्ञः साम्रा-

SGDF
Sri Gargeshwari Digital Foundation

ज्याब्दाश्रयनामविप्रनामादिकं ताम्रपत्रतले लिखित्वाऽर्पयित्वा दद्' दिति (१४ अध्याये)

६. दत्तापहारनिन्दा यथाः— 'सुरविप्रक्षेत्रं गोष्पदं वापि यो हन्यात् त्रिसप्तनरकान् घोरान् गत्वा भूयः तिरश्चां गतिसहस्रमवाप्नुयात्। तस्मात् सर्वप्रयत्नेन विषवह्निसमं राजा सुरब्राह्मणदत्तं परिहरेदिति विज्ञायते' इति। (१७ अध्याये)

७. दत्तस्य नाशापहारादिषु पालने फलविशेषकथनं यथाः— 'यत्नादप्येतत्पालनमुपर्यधिकवर्धनं वा यः कुर्यात् सोऽपि प्रथमेष्टकादि सर्वकर्मफलं लभते' इति। (६८ अध्याये)।

८. भगवतो विभवावतारनिमित्तोपदेशो यथाः— 'यदा ग्लानिः धर्मस्य परिपालनाय नारायणाद्भगवतः प्रत्यंशरूपाणि युगे युगे प्रजातानि भवन्ति। तानि रूपाणि संस्थाप्यार्चये' दिति। (३६ अध्याये)

९. महर्षेः सहजवाङ्माधुरी यथाः— 'इन्दिरेशस्य मन्दिरं सुन्दरं कृत्वा' इति 'बालकैः वालुकाकल्पितमप्यघौघध्वंसकृत्' इत्यादि। (२० अध्याये)

१०. ग्रन्थान्तरसंवादो यथाः— 'श्रुतिः, श्रुतयो वदन्ति, इति ब्राह्मणम्, केचित्, अन्ये, इति भृगुः, इत्यङ्गिराः, इत्यात्रेयः, इति भृग्वत्रिमरीच्यादयः, ब्रह्मवादिनो वदन्ति, ब्रह्मा चाशंसत्' इत्यादयः सन्दृश्यन्ते। तद्विवरणन्तु ग्रन्थविस्तरभिया नात्र विलिख्यते।

११. पिष्टपशुसाध्यः विष्णुयागोऽत्र प्रसिद्धः (२९ अध्याये)। तथा काम्यकल्पेषु सर्वार्थसाधनः पौण्डरीककल्प उपदिष्टः (५-८ अध्यायेषु)। तथा श्रीमदष्टाक्षरमहामन्त्रकल्पश्च। (१०६ – १०८ अध्यायेषु)।

अत्रोक्तप्रकारस्यैव भगवतो नित्यार्चनस्य वैखानसमहाजनेषु वर्तते स्फारः प्रचारः।

SGDF
Sri Gargeshwari Digital Foundation

संहितान्तराणीवेयमपि संहिता मन्त्रपाठक्रमं नानुरुन्धे । तथाऽत्र मन्त्रप्रतीका अपि तत्र तत्र भिन्नानुपूर्वीवन्तश्च दृश्यन्ते । तद्विचारस्त्वस्माभिः मन्त्रभाष्यमुद्रणावसरे परामृश्य निरूपयिष्यते ।

अत्रायं सङ्ग्रहः —

अभ्यर्हिता ह्यारादुपकारकक्रिया सन्निपत्योपकारकक्रियात इत्यत्र न विसंवादः । बहूकुरुते ह्यवधिस्थानापन्नां क्रियां संसिद्धिसम्पादकतया शास्त्रम् । तदा ह्यभ्यर्हितां क्रियामलङ्कुरुते कैमुतिकन्यायोऽपि । असति बाधके समानाधारविषयकज्ञानक्रिययोः भवत्यविनाभावः । सोऽपि दरीदृश्यते ह्यन्वयतो व्यतिरेकतश्च । अद्वारकत्वसद्वारकत्वाभ्यां हि विशेषः । स च व्यक्तीभवति चरमकाष्ठायाम् । अनुभूयते च रागद्वसनादिषु तथा । अतश्चरमपर्वतापन्नं ज्ञानं नान्तरा स्थास्यति । क्रियायोगेन नानैकान्तिकता अत्र । सैव परिपूर्ण-शेषवृत्तिः । तथैव भाष्यकारः । अतस्तदत्रैव परिसमाप्यते । तथैवानुगृह्णाति भगवान् श्रीविखना महर्षिः । इत्थं ज्ञानस्य क्रियायोगे परिसमाप्तौ तात्पर्या-दन्वर्थता ज्ञानकाण्ड इत्याख्याया इति साधारण्येन सङ्गृहीतो ग्रन्थपरिचयः विद्वद्भ्यः उपायनीक्रियते ।

किञ्च 'अरायि काणे विकटे गिरिं गच्छ सदान्वे शिरिम्बिठस्य सत्त्वभिः । तेभिष्ट्वा चातयामसि' (ऋक् संहिता मं. १०. सू १५५ मं १.) इत्यादिश्रुत्युपगीयमानवैभवस्य श्रीमदखिलाण्डकोटिब्रह्माण्डनायकस्य श्रियःपत्युः परब्रह्मणः परमपुरुषस्य श्रीवेङ्कटाद्रिशिखरशेखरायमाणस्य वैखानसमुनिश्रेष्ठ-पूजिताङ्घ्रियुगस्य श्रीश्रीनिवासस्य अर्चावतारस्य आराधनादिकमिदमेव शास्त्र-मनुसृत्य सदा प्रचलतीत्यतः शास्त्रस्यास्य महिमातिशयप्रकटने प्रमाणान्तरं नापेक्ष्यते । ऋगियञ्च महद्भिर्व्याख्यायते यथाः— वेदपुरुषः पुरुषार्थ-कामुकमुद्दिश्यात्र हितमुपदिशति । हे पुरुषार्थकामुक! अत्र सन्दर्भानुरोधात् त्वयीति शेषः । त्वयि अरायि रैशब्दः ऐश्वर्यवाची ऐहिकैश्वर्यरहिते आमुष्मिकैश्वर्यरहिते वा । काणे बाह्यदृष्टिशून्ये आन्तरदृष्टिशून्ये वा । विकटे

SGDF
Sri Gargeshwari Digital Foundation

विशिष्टतापत्रयशालिनि । 'सर्वपापानि वें प्राहुः कटस्तद्दाह उच्यते' इति वेङ्कटपदनिर्वचनानुरोधेन कटशब्दस्य दाहपरत्वादयमेवार्थः । सदान्वे दानवैः सहिते दानवशब्दस्य दान्व इति व्यत्ययः छान्दसः । दानवैः ऐहिकपुरुषार्थ-विरोधिभिः आमुष्मिकपुरुषार्थविरोधिभिर्वा सहिते सति । शिरिम्बिठस्य श्रीपीठस्य श्रीनिवासस्येति यावत् । अत्र शिरिमिति बिठस्येति च व्यत्ययः छान्दसः । गिरिं वेङ्कटाचलं गच्छ । उक्तसर्वानर्थपरिहाराय गच्छेत्यर्थः । तत्र गमनमात्रेण कथं तत्परिहार इत्याशङ्कायामाह । शिरिम्बिठस्य श्रीनिवासस्य सत्त्वभिः पुरुषैः सर्वोपचारक्रियानिरतैः पुरुषैः सदा सन्निधानवर्तिभिः परमै-कान्तिभिः अन्तरङ्गपुरुषैरिति यावत् । शिरिम्बिठस्येत्युभयत्रान्वयः । सत्त्वभिरिति व्यत्ययः छान्दसः । तेभिः तैः तथात्वेन लोकशास्त्रयोः प्रसिद्धैः तदीयैरित्यर्थः । अत्रापि व्यत्ययः छान्दसः । त्वा त्वां चातयामसि अनिष्टनिवारणं याचन्तं कारयामः । भगवतः श्रीनिवासस्य सन्निधौ तदीयैः अनिष्टनिवारणप्रार्थनां कारयितुमिच्छाम इति यावत् । चते, चदे, याचने' (भ्वादिः पर.) इति धातोः ण्यन्तात् लडुत्तमपुरुषबहुवचनम् । 'इदन्तो म'सीति (पाणिनि७-१-४६) इकारः छान्दसः । 'अत्रानादिसंसारप्रवाहसमापतितानिष्टनिवारणकामुकाः पुरुषाः श्रीवेङ्कटाचलं गत्वा तन्निवासरसिकस्य भगवतः श्रीनिवासस्य सन्निधौ सर्वोपचारक्रियानिरतान् सदा सन्निधानवर्तिनः परमैकान्तिनः अन्तरङ्गपुरुषान् तदीयान् भगवतः श्रीनिवासस्य सन्निधौ मदीयामनिष्टनिवारणप्रार्थनां श्रावय तेति प्रार्थयन्ते । ते च महाभागाः तथा तस्य भगवतः श्रीनिवासस्य सन्निधौ एकान्तसेवाद्यवसरे च आपन्नानामापन्निवारणप्रार्थनां श्रावयन्ते । स च परमदयालुः भगवानन्तरङ्गपुरुषमुखात् तां श्रुत्वा अनिष्टनिवारणं भक्तानामनुपदमेव करोतीति सम्प्रदायः । अत्र 'त्वं वेङ्कटाचलं गत्वा भगवन्तं तदीयानाराधकमहाभागान् श्रीवैखानसान् द्वारीकृत्य अनिष्टनिवारणं या' चेति विधिर्विवक्षितः । अत्र 'अरायि काणे विकटे गिरिं गच्छेति तं विदुः, एवं वेदमयः साक्षाद्गिरीन्द्रः पन्नगाचलः' इति भविष्यपुराणान्तर्गतश्रीवेङ्कटाचलमाहात्म्यपरभागः अयं मन्त्रः श्रीवेङ्कटाचलपर इत्युपबृंहयति । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।

SGDF
Sri Gurgeshwari Digital Foundation

विभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्य ' तीति । अतस्तन्निवासरसिकस्य भगवतः श्रीनिवासस्यार्चावतारस्य महिमानमवबोधयतीयं श्रुतिरिति स्पष्टमवसीयते । एवञ्च तापत्रयाभिभूतैरमृतत्वाय श्रीमहाविष्णुरेवाराध्य इत्यादि सिद्धम् ।

अत्र श्रीमद्भिः परवस्तु वेङ्कटरामानुजस्वामिभिः मान्य - डैरेक्टर् - महाभागैः श्रीवैखानसवाङ्मयसामान्यविमर्शरूपा काचन समग्रसामग्रीसंवलिता कृतिः आंग्लभाषामयी निर्मिता अचिरादेव मुद्राप्य प्रकटीकरिष्यत इति महदिदं हर्षस्थानम् । ततो विशेषाः केचन अवसेयाः ।

यावदुपलब्धि सम्पादितेषु यथामति परामृष्टेष्वपि बहुषु मातृकाकोशेषु प्रायः सर्वत्र ग्रामालयबिम्बनिर्माणकल्पकशिल्पभागेषु विशेषतश्च शुद्धपाठसाधने सम्भृतो महान् क्लेशः । कथञ्चिन्निर्वृत्तेऽपि मुद्रणे तत्र बाढमकृतार्थ एव अवशिष्ये इत्यनुवर्तत एव क्लेशः । तत्रोपयुक्तमातृकाकोशविवरणञ्चान्यत्र निरूप्यते ।

अस्य ग्रन्थस्य संस्करणे परमकृपया मातृकाकोशदानेनोपकृतवतां ग्रन्थाधिकारिणां श्रीश्रीनिवासदिव्यकोशागारद्रव्यदापनेनोपकृतवतामालयाधिकारिणां ग्रन्थपरिशोधनाय सर्वविधावकाशदानेनोपकृतवतां पूर्वोक्त डैरेक्टर् - महाशयानां अतिमनोहराकारेण मुद्रणकार्यनिर्वाहकाणां मुद्रणालयाधिकारिणाञ्च अत्यन्तं भवामि कृतज्ञताभाजनम् ।

मानुषिकाज्ञानजनितानानवधानजनितांश्च दोषानत्र मर्षयन्तु सहृदयाः इति प्रार्थये ।

सर्वजिद्वत्सर<br>निजश्रावणशुक्लपूर्णिमा<br>भानुवासरः

सज्जनविधेयः - पार्थसारथिः<br>आकुलमनाड्वभिजनः

SGDF
Sri Gargeshwari Digital Foundation

श्रीः

॥ ॐ नमो वेङ्कटेशाय ॥

श्रीमते विखनसे नमः

भृग्वत्रिमरीचिकश्यपेभ्यो नमः

# श्रीवैखानसे भगवच्छास्त्रे काश्यपीये ज्ञानकाण्डः ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥
विष्वक्सेनः स्मृतो नेता भगवान् शुद्धिकर्मणः ।
तस्मान्नान्यमुपासीत कर्मणां विघ्नशान्तये ॥
श्रौतस्मार्तादिकं कर्म निखिलं येन सूत्रितम् ।
तस्मै समस्तवेदार्थविदे विखनसे नमः ॥
[1] शिष्या हि भृग्वत्रिमरीचिमुख्याः शुश्रूषया यस्य सदागमेषु ।
विशारदा वंशकरा बभूवुः तमद्य वन्दे विखनोमुनीन्द्रम् ॥

## अथ प्रथमोऽध्यायः॥

### ऋषिप्रश्नोत्तरम्

हरिः ॐ ॥ कश्यपमाश्रमे समासीनं सर्ववेदवेत्तारं सर्वशास्त्रार्थतत्त्वज्ञमृषिं [2]सुप्रसन्नमभिगम्य 'भगवन्! केन विधानेन कर्मन्तैः कं देवमर्चयन्तः परमं पदं गच्छेयु' रिति सर्वभूतहिते रताः मुनयोऽपृच्छन् । स तेभ्यः

1. क–पुस्तकेऽधिकं. 2. ग–प्रसन्नं.



SGDF
Sri Gurgiahuari Digital Foundation

प्राह ‘श्रुत्यनुकूलविधिना वैदिकैर्मन्त्रैः देवेशं विष्णुमर्चयन्तः[1] तद्विष्णोः परमं पदं गच्छेयुः ।

### ब्रह्मस्वरूपम्

पद्मकोशप्रतीकाशे [2]हृदये महति विश्वस्यायतने विज्वलद्वैश्वानरशिखामध्यस्थः परमात्मा नारायणः । तमेव परं ज्योतिरक्षरं ब्रह्मेति ब्रह्मविदो विदुः । सोऽयं प्रकृतिस्थस्सन् [3]अस्वप्नाद्यगोचरोऽपि भूतं भवद्भव्यश्चेदं भवति । “पुरुष एवेदं सर्वं यद् भूतं यच्च भव्य” मिति श्रुतिः । [4]त्रयीमयोऽय स्वाध्यायैः श्रौतैः कर्मभिः तोष्यते । स यज्ञेशो [5]यज्ञेनेड्यते ।

### अर्चनफलम्

तस्मादालये विधिना विष्णोर्नित्यार्चनमनाहिताग्नीनां [6]अग्निहोत्रसमम्[7] यस्मादेतच्चाग्निहोत्रफलं ददाति । आहिताग्नीनामप्येतत् सर्वप्रायश्चित्तहेतुकं सर्वकामावाप्त्यर्थञ्च द्वितीयं भवति । यतो यजमानमरणेऽप्यालयार्चनं भूग्यामन्यैरविच्छिन्नं प्रवर्त्यते । ततः शाश्वतं तिष्ठेत् । एतन्नित्यं परमं पुण्यं भक्त्या यत्नतः [8]कुर्यात् । ग्रामादिषु चैतद्वास्तुनिवासिनां सर्वेषां सामान्यमग्निहोत्रं[9] सर्वसम्पत्करमिति ब्रह्मा चाऽशंसत् । तद्विष्णोरेवोत्पत्तित्राणलयानवाप्नुवन्तो [10]देवाश्च तमेवार्चयन्ति । तस्मिन् देवेशेऽर्चिते देवास्सर्वेऽप्यर्चिता भवन्ति ।

### विष्णुपारम्यम्

“अग्निर्वै देवानामवमो विष्णुः परमः तदन्तरेण सर्वा अन्या देवताः” इति ब्राह्मणम् । तस्मादग्नौ नित्यं हुत्वा नारायणमेवार्चयेदिति [11]ऋषिणा वैखानससूत्रे [12]संक्षेपेणोक्तम् । तदुपन्यासं[13] समन्त्रकं [14]बहुप्रयोगं क्रमेण

---

1. ग – अभ्यर्चयन्तः ख – अर्चयन्ति. म – येऽर्चयन्ति. 2. ख. च – हृदयोज्वलत्. 3. च – स्वप्नधियां च गोचरोऽपि. 4. घ – स्मृतमयः 5. कादन्येयज्ञैश्चेड्यते. 6. क – विप्राणामित्यधिकं. 7. म – अग्निहोत्रं यस्मात. ज – लुप्यते वाक्यमिदं. 8. म – अनेनवास्तवज्ञालयेष्वप्यर्चनं कारयेत्. 9. क – भवतीत्यधिकं. घ 10. देवताश्च. 11. कादन्ये इतित्रियमिणा. 12. म–त ार्चनम्. 13. क – तदुपन्यस्य. 14. क – सह.

SGDF Sri Gurgeshwari Digital Foundation

विस्तरतो वक्ष्यामि । तस्मादेतस्मिन् यत्र यत्र होमो विधीयते तत्र सर्वत्राग्न्याघारः[1] स्विष्टकृत्प्रभृत्यन्तहोमश्च तद्वैखानससूत्रोक्तविधानेनैव कर्तव्यः । तथैव तद्विधानेन निषेकादिसंस्कारैः संस्कृतान् विप्रानाचार्यस्थापकादीनृत्विजोऽर्चकांश्च [2]वरयेत् ।

### अर्चनस्य द्वैविध्यम्

द्विविधं तदर्चनमाख्यातममूर्तं समूर्तञ्चेति । [3]तदित्थमग्नौ हुतममूर्तं समूर्तं तद्बिम्बेऽर्चनम्[4] । समूर्ते चक्षुर्मनसोः प्रीतिः सदा संस्मृतिश्च[5] । ताभ्यां भक्तिश्रद्धे स्याताम् । श्रद्धाभक्तियुतस्यैव सर्वसंसिद्धिः ।

### समूर्तार्चनप्रशंसा

आलये समूर्तार्चनं बल्युत्सवाद्युपचारयोगात् सम्पूर्णम् । यजमानाभावेऽप्यविच्छेदान्नित्यञ्च । एतदैहिकामुष्मिकभुक्तिमुक्तिफलप्रदं सार्वकालिकं शान्तिकपौष्टिकभेदेन द्विविधं भवति । सर्वशान्त्यर्थं शान्तिकं सर्वपुष्ट्यर्थं पौष्टिकम् । [6]इत्येतदनुष्ठानक्रमं सर्वं समाहिता मुनयः शृण्वन्त्यिति कश्यपः ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
प्रथमोऽध्यायः ॥

---

## ॥ अथ द्वितीयोऽध्यायः ॥

### शान्तिकादिविधानम् – भुवनखण्डविधिः

अथ [7]भुवनखण्डविधिं व्याख्यास्यामः । इमे लोकाः फलानां [8]साधनानि । ततः परेष्वेव फलावाप्तिः । तस्मात् अस्मिन् लोके शुद्धे देशे मनोरमे कर्माऽरभेत ।

---

1. घ–आघारादीत्येव. म–आज्याघार. 2. म – यजमान इत्यधिकं. 3. कादन्ये, तदर्थं. 4. म–पूजनम्. 5. म–संस्थितिश्च. 6. क–एतत्सर्वं समूहित्वा मुनयः कुर्वन्त्विति. 7. ख–शान्तिकानि. 8. कादन्ये, साधतियः परेष्वेव ?

SGDF Sri Gargeshwari Digital Foundation

### द्वीपविभागः

जम्बूशाककुशक्रौञ्चशाल्मलिगोमेदपुष्करा इति सप्तद्वीपाः मेदिन्याः। क्षारक्षीरघृतदधिमध्विक्षुरसशीतोदधय इत्येते यथाक्रमेण द्वीपान्तरे सप्तोदधय इति।

### सप्तोर्ध्वलोकाः

भूर्भुवस्सुवर्महर्जनस्तपस्सत्यलोका इति यथाक्रमेणैकैकस्योपरि लोका भवन्ति।

### सप्तपातालाः – कपिलावासश्च

भूमेरधस्तात् [1]अतलवितलसुतलप्रतलतलातलरसातलमहातला इत्येते पातालाः। ततः परमव्यक्तं तस्मिन्नव्यक्ते प्रवालाभस्त्रिलोचनो [2]जटाधरः निरायुधः शुकपिञ्छाम्बरधरः केयूरहारप्रलम्बयज्ञोपवीती श्रीवत्साङ्कश्चतुर्भुजो ब्राह्मेणासनेनासीनो नित्यमनाद्यमक्षरमरूपमचिन्त्यं कूटस्थं यत्परं तज्जिज्ञासया ध्यानयुक्तः कपिलो वसतीति तत्त्वदर्शिनो वदन्ति।

### जम्बूद्वीपः

दक्षिणोत्तरतः पूर्वपश्चिमतश्चाशीतिसहस्रकोटियोजनो जम्बूद्वीपः द्वात्रिंशत्कोटियोजनपृथिव्या घनविस्तारसमावृता भूमिः। क्षारसमुद्रेण द्वीपाद्द्वीपाद्द्विगुणितं बाह्याद्बाह्यं समुद्राच्च समुद्रं [3]शीतोदधितश्च बाह्यमप्येवं लोकाल्लोकान्तरं तावत्प्रमाणं विवरं सर्वतः परिवृतमित्येतदेकमण्डम्। अन्यान्यनेककोटचण्डानीति वदन्ति।

### जम्बूद्वीपखण्डाः

जम्बूद्वीपे भारतहैमवतनैषधमेरुदैववैडूर्यश्वेतशृङ्गगान्धर्ववर्षाश्चेति दक्षिणादुत्तरान्तं नव खण्डा भवन्ति।

### सीमापर्वताः – भारतवर्षः

हिमवद्धेमनिषधनीलश्वेतशतशृङ्गाश्चेति षडेते सीमापर्वताः [4]पूर्वापरजलाशयौ विगाह्य प्रतिष्ठिताः। हिमाद्रेर्दक्षिणमासमुद्रान्तं भारतम्। हिमवद्धेमयोर्मध्ये

1. क–अतलवितलप्रतलधातकविद्रावकसंफुल्लाङ्गमहातला इति. 2. A–जगदाधारः. 3. च – शीतोदं तद्बाह्यं. 4. छ – पूर्वापरार्धमकुटान्तं.

SGDF
Sri Gurgeshwari Digital Foundation

हैमवतम् । निषधाद्धेमकूटान्तं नैषधम् । नीलनिषधयोर्मध्ये मेरुः । तत्प्राक् पश्चिमसमुद्राद्दैववैडूर्ये । श्वेतनीलयोर्मध्ये श्वेतः । श्वेतशतशृङ्गयोर्मध्ये शृङ्गः । शृङ्गादासमुद्राद्गान्धर्वखण्ड इति ।

शाके विंशतिः कुशे [1]त्रिंशत् क्रौञ्चशाल्मल्योः पञ्चाशत् गोमेदे सप्ततिः पुष्करे नवतिः वर्षा इति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे भुवनखण्डविधिर्नाम द्वितीयोऽध्यायः ॥

---

## ॥ अथ तृतीयोऽध्यायः ॥

### भारतादिवर्षेषु पैशाचदेशाः

दर्दुरबर्बरमालवसिंहलशृङ्गिकदेशाश्चेत्येते भारतवर्षे पैशाचदेशाः । ते विप्रैर्न वस्तव्याः । सालमुद्गन्धिकनैधायककुचुमारा इत्येते हैमवते । घाटहार-हाटकमुस्तोर्वर्य इत्येते नैषधे । * * भानुकापहास्यौ दैविके । शाकुण्डवा-दुकमलपदाक्षिणक(?) [2]नीलाश्चेत्येते वैडूर्ये । साकुन्धारुणकपोतपिङ्गालभाग-शाननभूतवासजेलायकवानगोलकवरिष्ठपञ्चभूमिकावासरक्षोहाश्चेत्येते श्वेते । [3]तैष्य-प्रमर्दलम्भोमत्तस्त्रीवासाश्चेत्येते शृङ्गे । शाण्डिल्यधुन्धुमारकापोतबडबामुखा इत्येते गान्धर्वे न वस्तव्या विषया भवन्ति । शाके काकणिकं कुशे पद्मापहारितं क्रौञ्चे मुखतुलकशाण्डिल्यकैटभस्फोटामुखाः शाल्मले कासीसवैराग्यौ गोमेदे काका-वासभुजावसौ पुष्करे दारुण(?) इत्येते विप्रैर्न वस्तव्या देशा भवन्तीति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे विप्रवासानर्ह-देशनिरूपणं नाम तृतीयोऽध्यायः ॥

---

1. छ – सप्तत्रिंशत्. * * मेरुप्रस्तावो न दृश्यते. 2. B – नीलाश्च.
3. ख–नैष्य.

SGDF
Sri Gangadharan Digital Foundation

## ॥ अथ चतुर्थोऽध्यायः ॥

### शान्तिकलक्षणम्

अथातः शान्तिकम् । भूमौ रम्यं सुभिक्षं साम्राज्यं धर्मपुण्यजयान्वितं[1] साध्वाचारनृभूयिष्ठं वैष्णवैस्सङ्कीर्णं वेदध्वनियुतं कृष्णमृगकपोतशुकशारिकामयूरहंसचक्रवाकैः मुख्यपक्षिभिः [2]मुनिवरैरप्याकीर्णं कुशदर्भपलाशापामार्गतुलसीयुतं पुण्यनदीपर्वतयुतं क्षेत्रं प्रागानतं सुगन्धं शङ्खगोक्षीरकुमुदाभमशर्करमपाषाणं सुदर्शनमक्षारमकर्दमं[3] स्रोतसा परिवृतं दूर्वापामार्गधातकीचिरमालिकासोमवकुल-[4]कदलीकपित्थाश्वकर्णीविष्णुकान्ताशोकतिमिशचन्दनागरुकोष्ठूशीरैलालवङ्गनागिकारनीपार्जुनासनबिल्वमातुलुङ्गाश्व[5]गुणावरसोमरा(?) वल्लीप्रकुडचपताकाद्यैः पुंवृक्षैः परिवृतं शान्तिकं क्षेत्रमिति[6] ।

नलिनकस्वस्तिक[7]पद्मकपर्वताकृतिसर्वतोभद्रपञ्चवासनिकसोमच्छन्दनन्द्यावर्तश्रीप्रतिष्ठितचतुस्स्फुटादि प्राग्द्वारं द्वादशावरणयुतं विमानम्[8] । शैलं ध्रुवं बेरं शङ्खगोक्षीरकुमुदाभम् । कौतुकं रत्नहाटककृतम् । पुष्पं सौवर्णं नन्द्यावर्ततुलस्यादिचतुर्वर्णयुतम् । गन्धं चन्दनागरुकोष्ठुकुङ्कुमम् । धूपं चन्दनागरुकर्पूरगुलमध्वाज्ययुतम् । दीपं कर्पूरयुतं कनिष्ठाग्रपरीणाहपिचुवर्तियुक्तं द्वादशाङ्गुलोच्छ्रयम् । अर्घ्यं सिद्धार्थककुशाग्रतिलतण्डुलदधिक्षीराम्बुक्षतयुतम् । वस्त्रमूर्णं [9]पञ्चवर्णयुतमंशुकपट्टनिर्मितम् । हव्यं पायसकृसरगौल्ययावकम् । जलं नादेयं वस्त्रोत्पूतम् । मुखवासं क्रमुकताम्बूलैलालवङ्गतक्कोलकर्पूरयुतम् । आभरणं वज्रवैडूर्यमणिमुक्ताप्रवालमरकतादिभिरलङ्कृतम् । समिद्बिल्वपलाशाश्वत्थोदुम्बरदूर्वाः । होमद्रव्यं तिलसर्षपस्नेहयुतम् । घृतं गव्यम् । अग्निः पौण्डरीकः । मन्त्रः ऋग्यजु-

---

1. दयान्वितं. 2, मुनिगणैः 3. छ - क्षारकर्दमं. ज, झ - अक्षारकर्दमं. 4, दलिद्राखुकर्णी. 5. घ - मातुलिङ्गगाश्व. छ - मातुलिङ्गगाश्व. म. टङ्गाल. 6. छ - शान्तिकं क्षेत्रमिति कुत्रापि न. 7. छ - महाराय. 8. विमानं शैलजं ध्रुवं बेरमिति कादन्यत्र, न दृश्यते. 9. B - पञ्चवर्णमिति नास्ति.

SGDF Sri Gargeshwari Digital Foundation

स्साम्नाम् पुटमन्त्राः । अत्र पुंलिङ्गाः स्वाहान्ताः, स्त्रियो नमस्कारान्ताः, नपुंसकाः शेषा इत्येतच्छान्तिकमिति ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे शान्तिकादिविमानादि-भेदविधिर्नाम चतुर्थोऽध्यायः ॥

---

## ॥ अथ पञ्चमोऽध्यायः ॥

---

### पौण्डरीकप्रशंसा

[1]नारायणनियोगेन सर्वसिसृक्षुर्ब्रह्मा भगवन्तं ध्यात्वाऽऽसीनः [2]सहस्राब्देऽतीते हृत्पुण्डरीकं त्रिवेदिसहितं पञ्चाकृत्या एकमग्निं व्यक्तीभूतं [3]पर्याप्ते दृष्ट्वा आनम्य स मुदा विरिञ्चोऽर्चयित्वा तस्याग्नेर्मध्ये वेदान् ऋषीन् पितॄन् भूतादीन् असृजत् । प्राच्यामाहवनीयं दक्षिणेऽन्वाहार्यं प्रतीच्यां गार्हपत्यमुदीच्यामावसथ्यं मध्ये सभ्यमजनयत् । पश्चात् स्वयं भूर्भुवस्सु[4]वर्महर्जनोलोकेषु गार्हपत्यान्वाहार्याहवनीयावसथ्यसभ्यांश्च यथाक्रमेण प्रतिष्ठापयित्वा पश्चात् मुखबाहूरुपादतो ब्राह्मणक्षत्रियविट्छूद्रान् क्रमेणासृजत् । तेषामाश्रमिणां ब्रह्मचारिणामेकोऽग्निः गृहस्थानां [5]त्रेताग्निः वानप्रस्थानां पञ्चाग्निरिति कल्पयित्वा पौण्डरीकाग्निं स्वयं सङ्गृह्य जपहोमस्वाध्यायादिभिर्यत्परं [6]तज्जिज्ञासयाऽभ्यर्चयत् ।

एवं प्रवृत्ते काले कदाचित् ऋषयो ब्रह्मलोके भगवन्तमभ्यर्च्य ध्यानेन नियतमानसं पद्मासने सुखासीनं देवं पितामहं दृष्ट्वा आनम्य प्रमुखे मरीच्यत्रि-भृग्वादयोऽब्रुवन् । 'भगवन् ! कमर्चयसि कैर्मन्त्रैः केनाग्निना जुहोषि तत्सर्वं श्रोतुमिच्छाम' इत्ययाचन्त । [7]स्नेहार्द्रमानसस्तान् 'पृथक्पृथग्वक्ष्यामि युष्माभिश्चोदितं सर्वं शृणुध्वमृषिसत्तमाः । भगवन्तं विष्णुमर्चयामि चतुर्वेदमन्त्रैः [8]वैदि-

---

1. छ - नारायणध्यानयोगेन. घ - निलयेन. 2. B - अष्टसहस्र, 3. भूतवराहं. 4, B - स्वर्महः, 5. घ. च - पञ्चाग्निर्वा, 6. ख - धर्मपरं, 7. B - सस्मितं कृत्वा इत्यधिकं, 8. क - कोशे नास्ति, ख. घ - ध्यानेन,

SGDF
Sri Gargeshwari Digital Foundation

केन विधानेन पौण्डरीकाग्निं जुहोमी' ति । एवमुक्ते ते सर्वे विस्मयोत्फुल्ल-लोचनाः 'त्वया देव! कथितमग्निमच्युतपूजार्थं दत्वाऽस्मास्वनुग्रहं कु' र्वित्यवोचन् । तच्छ्रुत्वा पितामहः 'सर्वतश्शान्तिकरं सर्वकामप्रदं पारमात्मिकं सर्व-वेदमयमग्निं विष्णुपूजार्थं मुक्तिदं देवैरप्राप्यं गृह्णीते' त्युक्त्वा तेभ्योऽदात् । तस्मादस्मिन्नग्नौ यद्यत्क्रियते तदमोघञ्चैव भवति । आभिचारिकवश्यादि प्रतिषिद्धम् । स्मरणमात्रेणैवापगतपापो भवति किं पुनर्जपैर्होमैः! दुष्प्राप्यः पारमात्मिकोऽयमग्निः । तस्मादब्जाग्निः सम्यक् योग्यैरेव सेवितव्यः । तस्मादग्निं प्रदक्षिणं कृत्वा विश्वमन्त्रेण प्रदक्षिणं प्रणामञ्च करोति यस्सोऽश्वमेधफलं प्राप्य विष्णुलोके महीयते । नित्यं स्वहृदि श्वेतवर्णं त्रिवेदिभिरलङ्कृतं अष्टसह-स्रदलयुतमिलाकृतिं ध्यात्वा तन्मध्ये सहस्रज्वालायुतमाग्नेयमण्डलं तन्मध्ये प्रणवं नित्यं प्रातः कालेऽभ्यस्य विधूतपापसङ्घातो विष्णुलोकं स गच्छति । प्रयाणकाले-ऽप्येवं स्मृत्वा शङ्खचक्रगदाधरः श्यामलाङ्गश्चतुर्भुजो भूत्वा द्विजेन्द्रमारुह्य नमस्कृतः स्तूयमानः सुरगणैः सर्वान् लोकानतिक्रम्य विष्णुलोकं स गच्छति ।

पूर्ववद्ध्यात्वा वारुणं मण्डलं तन्मध्ये श्वेताब्जं सहस्रदलयुतं तन्मध्ये [1]चन्द्रबीजमादिषष्ठं सानुस्वारं प्रणवोभयसम्पुटितं ध्यात्वा नित्यं सायं प्रातः योऽभ्य-स्यति स [2]संवत्सरमात्राद् बृहस्पतिसमो भवति । य इदं पर्वणि पर्वणि स्वाध्यायं करोति ब्रह्मलोकं स गच्छति ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे अग्न्युत्पत्तिविधिर्नाम-पञ्चमोऽध्यायः ॥

---

## ॥ अथ षष्ठोऽध्यायः ॥

### पौण्डरीकविधानम्

शुद्धे देशे गोमयेनोपलिप्य तत्र शुद्धाभिः सिकताभिरष्टादशाङ्गुलैः अमी-कृत्य ऊर्ध्ववेदिविस्तारं भागोन्नतं द्विगोलकं मध्ये निम्नं वस्वङ्गुलं मध्यलेखाविस्ता-

1. आदिबीजम्. 2. संवत्सरं स्मृत्वा.

SGDF Sri Gangeshwari Digital Foundation

रोत्सेधौ भाग इति । अधोलेखाविस्तारः षडङ्गुलमुत्सेधो वेदाङ्गुलं[1] अष्टपत्रयुतं कृत्वा आघारं हुत्वा पद्मपुष्पैः कपिलाघृताक्तैः पुरुषसूक्तेन लक्षहोमं जुहोति यः, सोऽन्ते कलेबरं त्यक्त्वा परमं पदं गच्छति ।

### कामनाभेदेन विधिः

ब्रह्मवर्चसकामः अधोवेद्यां धृतिदलयुतं कुण्डं कृत्वा पलाशपुष्पैः विष्णुसूक्तेन द्वादशसहस्रं जुहोति । आयुष्कामः अशीतिदलयुतं कुण्डं कृत्वा वैष्णवं रात्रिसूक्तञ्च जप्त्वा समिद्भिः त्रिलक्षहोमं जुहोति । परमायुर्भवति । सहस्रायुः परमायुरित्युपदिशन्ति । विंशतिलक्षैः जुहोति यः स ब्रह्मायुर्भवति । लक्षायुर्ब्रह्मायुरिति वदन्ति ।

### प्रजाकामस्य विधिः

प्रजाकामः सपत्नीको द्विरात्रमुपोष्य प्रभाते स्नात्वा शुद्धे देशे यज्ञवाटं कृत्वा मृष्टसिक्तोपलेपनाद्यैः संशोध्य यज्ञवाटं प्रविश्य पञ्चाग्नीन् कल्पयित्वा सभ्यात् प्राच्यां विंशतिदलयुतं पौण्डरीकाग्निकुण्डं[2] कृत्वा पूर्ववदाघारं कृत्वा कुण्डात् प्राच्यां 'विष्णुं पुरुषं सत्यमच्युतमनिरुद्ध'मिति पृथक् पृथक् यथाक्रमेण सप्तविंशतिविग्रहैरभ्यर्च्य पौण्डरीकाग्नेः प्राच्यां शालिभिः व्रीहिभिर्वा देवेशस्य विष्णोः पीठं तस्य दक्षिणोत्तरयोः ब्रह्मेशौ चोद्दिश्य पीठे च कृत्वा अग्नेरुत्तरतो दण्डवेदिं पञ्चाङ्गुलिविस्तृतामरत्निमात्रायतां कृत्वा सप्तर्षीन् अभ्यर्च्य दक्षिणतो द्वादशादित्यान् एकादशरुद्रान् वसूनश्विनौ [3]पाद्याद्यर्घ्यान्तमभ्यर्च्य विष्णुपीठे पद्मं संस्थाप्य तन्मध्ये रत्नं हाटकं वा संस्थाप्य तिलसर्षपगन्धाक्षतलाजकुसुमैरवकीर्य 'श्रीवत्साङ्कं सहस्राक्षं जगद्बीजं विष्णुं नारायणं जिष्णुं श्रीपतिं पुण्य' मित्यष्टभिर्मन्त्रैः भगवन्तं सप्तविंशतिविग्रहैरभ्यर्च्य दक्षिणे 'श्रियं' वामे 'हरिणी' मित्यभ्यर्च्य[4] ब्रह्मेश्वरौ च सप्तविंशतिभेदैः देवीयुक्तावभ्यर्च्य प्राच्यां [5]मध्ये वक्रतुण्डं वामे सरस्वतीं दक्षिणभागे [6]वामे रौद्रीमर्घ्यान्तमभ्यर्च्य पत्नीसहितः

---

1. B–सहस्र, 2. B-कुण्डमिति लुप्यते. 3. B - प्रागादि. 4. म अर्घ्यान्तमभ्यर्च्य. 5. B - दक्षिणतः. 6. B. वामे इति न दृश्यते.



SGDF Sri Gargeshwari Digital Foundation

पञ्चगव्यैः [1]स्नात्वा नववस्त्रादिभिरलङ्कृतः अग्नेर्दक्षिणतः पत्नीसहितो यजमानः पुण्याहं वाचयित्वा "विश्वा उत त्वये" त्यग्निं प्रदक्षिणं कृत्वा "अघोरचक्षु" रित्यासनञ्च कृत्वा "मयि गृह्णा" मीत्यभिवन्द्याग्निं "अदितेनुमन्य" स्वेत्यादिना वेदिं परिमृज्य अग्नीषोमीयं बार्हस्पत्यं [2]वैष्णवं जुहोति [3]पञ्चाग्नौ। आहवनीये सारस्वतमन्वाहार्ये वैष्णवं गार्हपत्ये सौरमावसथ्ये वैश्वदेवं सभ्ये सप्तर्षिदैवत्यं वैष्णवञ्च हुत्वा, श्वेताब्जं घृताप्लुतं प्राजापत्येन पौण्डरीकाग्नौ दशसहस्रं प्रजार्थी जुहोति । पश्चात् [4]स्थालीपाकवत् चरुं श्रपयित्वा सङ्गृह्य "देवस्य" त्वेत्यभिघार्य अन्नं प्रक्षिप्य त्रिभागं कृत्वा कुशाग्रयवसर्षपतिलाऽज्यदधिपयोयुतं पिण्डत्रयं कृत्वा 'अतो देवादि' ना अग्रपिण्डं "ब्रह्मजज्ञान" मिति मध्यपिण्डं "रुद्रमन्य" मित्युपरिपिण्डमभ्यर्च्य विष्णुब्रह्मेश्वरेभ्यो निवेदयित्वा आचमनं दद्यात् । यजमानो "मम हृदय" मिति बध्वा हृदयमभिमृशेत् । आचार्यहस्तात् पिण्डं विश्वमन्त्रेणानम्य सङ्गृह्य वैष्णवं पिण्डं पत्नीं प्राशयेत् । ब्राह्मं पिण्डं स्वयं प्राश्याऽचम्य "विष्णुर्योनि" मित्युदरमभिमृश्य शिष्टं पिण्डं जले प्रक्षिप्य शक्तितो दक्षिणां दत्वा ऋत्विजो हिरण्यभूगवाश्वाद्यैः सम्पूज्याग्नीन् विसर्जयति । देवताश्च यथेष्टं स्तुत्वा विसृज्य स्वगृहं प्रविश्य चतुर्थीक्रियावदुपगमनं करोति । द्वादशमासात् आयुष्मन्तं बलवन्तं श्रीमन्तं बृहस्पतिसमं पुत्रं जनयति ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
ब्रह्मवर्चसकामादिकर्तव्यविधिनिरूपणं नाम
षष्ठोऽध्यायः ॥

---

1. छ, B - स्नापयित्वा. 2. ब्राह्मं प्राजापत्य मित्यधिकं. 3. B - पञ्चाग्नावित्यधिकं. 4. शालितण्डुलेन इत्यधिकम्.

SGDF
Sri Gargeshwari Digital Foundation

## ॥ अथ सप्तमोऽध्यायः ॥

—: ❀ :—

### श्रीकामस्य विधिः

अथ श्रीकामस्य श्रीसाधनम् । "श्रियं तु साधयेद्यत्ना"दितीयं वैदिकी श्रुतिः । तस्मात् पूर्वजन्मकृतमनपेक्ष्यैव[1] श्रियं साधयेत् । तत्र श्रीर्द्विविधा । राजश्रीः ब्रह्मश्रीश्चेति । [2]आढ्यमात्रेण [3]येन केनचिदैश्वर्येण [4]युक्तता राजश्रीरिति विज्ञायते । ब्रह्मश्रीस्तु अग्निष्टोमादीनां सर्वेषां क्रतूनामवाप्तिरणिमाद्यैश्वर्यसिद्धिश्च । ब्राह्मणैश्च पूज्या ब्रह्मश्रीरिति [5]ब्रह्मवादिनो वदन्ति । तस्मात्[6] द्विशतदलयुतं कुण्डं कृत्वा पूर्ववदाघारं हुत्वा तत्राग्निमुपलक्षयेत्[7] ।

### अग्निसाधने निमित्तनिरीक्षणम्

विना यत्नेन दीप्यते शिखाभिरुज्ज्वलद्भिः सहितो वा भवेत् प्रदक्षिणं वा आवर्तते हृद्यं वा गन्धं रूपं वा सुमनोरमं सोऽग्निः [8]सिद्धिं करोति । विसृजेद्वा विस्फुलिङ्गान् दुर्गन्धो यदि वा न दीप्यते अपसव्यं ज्वलत्यसिद्धये । तस्मादेवं ज्ञात्वा साधयेत् । दक्षिणनयनादिस्फुरणमुपलक्षयेत् । [9]उद्वहनकाले यदाऽऽज्यगन्धो वाति तदा हस्तप्राप्ता श्रीरिति वेदितव्यम् । एवं नियमेन पद्महोमः कर्तव्यः ।

### होमकाले वर्ज्यानि

पद्मशकलैः पुराणपुष्पैः न जुहुयात् श्रियोऽप्रियाणि भवन्तीति । दिनद्वयमतीतानां पुराणत्वमाचक्षते । हस्तद्वयेन वामहस्तेन वा[10] न होतव्यं यातुधाना गृह्णीयुरिति[11] । वाग्यत एव जुहुयात् । वार्तायुक्ताऽऽहुतिमसुरा[12] गृह्णन्ति ।

---

1. B-अनवेक्ष्य. 2. घ. ज-आराध्यतममात्रं. ख. आराध्यतन्मात्रं. 3. B-येन केनचिद्युक्तवरराजश्रीः. 4. M-विद्यता. 5. M-ब्रह्मविदः. 6. ज-द्विशततम 7. M-उपनयेत्. 8. M-सिद्धिकरः. 9. M-उद्वग्रहत. 10, छ-यदि. 11. M-गृह्णन्तीति. 12. M-स्वः स्वाः.

SGDF
Sri Gargeshwari Digital Foundation

### श्रीप्रसादप्रकारः

श्रियं पद्मप्रभां पद्माक्षीं पद्ममालाधरां पद्माऽऽसनां पद्महस्तां सुमुखीं सुकेशीं शुक्लाम्बरधरां सर्वाभरणभूषितां सुप्रभया ज्वलन्तीं सुवर्णकुम्भस्तनीं [1]सुवर्णप्राकारां सुदन्तोष्ठीं सुभ्रूलतां चिन्तयेत् । एवं बुद्धिस्थां कृत्वा पद्मैः श्रीसूक्तेन होमं कुर्यात् । एवं लक्षहोमेन श्रीः प्रत्यक्षा भवति । तां दृष्ट्वेष्टमर्थं लिप्सेत् । सेष्टं वरं ददाति श्रीः ।

### राजश्रीकामस्य विधिः

राजश्रीकामो बिल्वफलेन जुहुयात् । देव्या ध्यानमात्रेणापि द्रव्यवान् भवति । किं पुनस्तदुपासनया ।

### उत्तरफल्गुनीपूजा

तस्मादुत्तरफल्गुन्यां यत्नतो देवीमभ्यर्च्य यो होमं कुर्यात् तस्य न दारिद्र्यं भवति । पूर्ववदभ्यर्च्य एवं जुहोतीति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे श्रीकामकर्तव्यविधिर्नाम सप्तमोऽध्यायः ॥

---

## ॥ अथ अष्टमोऽध्यायः ॥

### विद्याकामस्य विधिः

[2]विद्याकामः स षण्णवतिदलं कुण्डं कृत्वा त्रिमधुराक्ताभिः अश्वत्थसमिद्भिः ब्राह्मं प्राजापत्यं [3]वैन्नं वैष्णवञ्च हुत्वा पश्चात् त्रिणेत्रीं विद्युद्रूपां हस्तद्वयेन कमलधरां उभाभ्यां हस्ताभ्यां[4] वसुप्रदां सुमुखीं सुकेशीं पद्मासनस्थां मुक्ताभरणभूषितां प्रसादाभिमुखीं शुक्लवस्त्रधरां सुरूपां चिन्तयेत् । एवं ध्यात्वा सारस्वतं नित्यं द्वादशसहस्रं हविष्याशी द्वादशरात्रं जुहोति । त्रयोदशाहे रात्रौ दीर्घं विकृतरूपं

---

1. M-प्राकारयुताम्. 2. घ - पुस्तके इतः पत्रपञ्चकं 12 to 16 गलितं.
3. M - वैश्वदेवं. 4. ख. उभाभ्यां वसुप्रभामिति पाठः.

SGDF
Sri Gargeshwari Digital Foundation

पश्यति । तद्दृष्ट्वा निर्भयो भवेत् । पश्चात् विकृताकारं भूतं पश्यति । तद्दृष्ट्वा निर्भयो भवेत् । ततो भगवतीं पश्यति । तां दृष्ट्वा मातृवन्मत्वा नमस्कुर्यात् । सैवं वदति 'वरं वृणीष्वे'ति । एवमुक्तोऽपि मुहूर्तं स्थित्वा पूर्वोक्तमन्त्रमष्टोत्तरशतं जप्त्वा भगवतीं 'प्रसीद प्रसीदे'ति पञ्चोक्त्वा वरं ब्रूयात् । यद्यत्कामयते [1]तत्सर्वं सरस्वती ददाति ।

### अकल्मषकामस्य शान्तिकामस्य च विधिः

अकल्मषकामः षट्त्रिंशद्दलयुतं कुण्डं कृत्वा तिलेन रात्रिसूक्तं द्वादशसङ्ख्यया जुहोति । शान्तिकामः ऋत्विग्दलयुतं कुण्डं कृत्वा [2]श्वेतपद्मैः बिल्वपत्रैर्वा [3]रात्रिसूक्तं यद्देवादि पारमात्मिकमीङ्कारादि वैष्णवं ब्राह्मं प्राजापत्यं दौर्गं विष्णुगायत्रीश्च जुहुयात्[4] । तत्क्षणात् सर्वपापं नश्यति । सर्वदोषाश्च नश्यन्ति । यद्यत्करेति तत्सर्वं विष्णुमभ्यर्च्य आघारं हुत्वा पश्चात् कुर्यात् । यस्मात् सर्वदेवमयी कपिला तस्मात् कापिलेन घृतेनैव जुहोति । सर्वशान्तिदं सर्वकामप्रदं पौण्डरीकाग्निविधानमिति कश्यपः ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे पौण्डरीकाग्निविधानं नाम अष्टमोऽध्यायः ॥

---

## ॥ अथ नवमोऽध्यायः ॥

—:*:—

### अद्भुतशान्तिविधिः

अथातोऽद्भुतशान्तिं व्याख्यास्यामः । अद्भुतान् मनुजानामपराधात् देवाः सृजन्ति ।

---

1. B. सर्वं. 2. ख-कृत्वेत्यारभ्य प्राजापत्यमित्यन्तं न दृश्यते. 3. M. रात्रिसूक्तमिति नास्ति. 4. M. जुहोति.

SGDF Sri Gargeshwari Digital Foundation

## अद्भुताः त्रिविधाः

अद्भुतास्त्रिविधाः । दिव्या आन्तरिक्षा भौमाश्चेति । दिव्या ग्रहविकारग्रहयुद्धाद्यनेकविधाः । आन्तरिक्षाः परिवेषेन्द्रचापोल्कापाताशनिपातनिर्घातो[1]-पलवर्षगन्धर्वनगरधूमेन्द्रकेतुप्रतिसूर्यादयः[2] । भौमाः चरस्थिरभवाः[3] अनेकविधाः ।

## त्रिविधाः जङ्गमजाः

तत्रोत्तमा मध्यमा अधमाश्चेति त्रिविधा जङ्गमजाः । विद्वद्ब्राह्मणतपस्विषु कालदेशस्वभावविरुद्धं यद्दृष्टं तत्प्रवरम् । नागगोमायुमहिषादिषु यद्दृष्टं तन्मध्यमम् । पक्षिसर्पक्रिमिकीटपतङ्गादिषु यत् तज्जघन्यम् ।

## त्रिविधाः स्थावरजाः

स्थावरजाः त्रिविधाः । प्रतिमादिषु प्रवराः । प्रासादादिषु मध्यमाः । वृक्षादिष्वधमाः । तत्र प्रतिमादिषु रोदनहसनज्वलनपरिवर्तनस्वेदरुधिरस्रावक्रिमिकीटपतङ्गतृणादयुद्भवाज्वलनधूमादयः[4] । प्रासादादिषु अप्रवेश्यमृगपक्षिसर्पादिप्रवेशनसर्पणारोहणचलनपरिवर्तनोपसर्पणभित्तिकवाटोर्मा ............ रासनशयनायुधाम्बर[5]कूपाग्निहोत्रोपस्करविहारमक्षिकावल्मीकरक्तस्त्रीजननादयः । वृक्षादिषु पतनपरिवर्तनोपसर्पणफलपुष्पपत्रशाखादिविकाराद्यद्भुता भवन्ति ।

## अद्भुतदर्शने दोषः, शान्तिप्रकारश्च

दिव्या आन्तरिक्षाश्च राजराष्ट्रविनाशाय । भौमाः तद्ग्रामैकानामातङ्कार्थनाशानावृष्टितस्करपरचक्रभयानि च सूचयन्ति । अतः शान्तिविधानमारभेत । दिव्यान्तरिक्षयोः ग्रहशान्तिविधानेनाभ्यर्च्य महाशान्तिं सप्ताहं हुत्वा देवेशं सहस्रैः [6]साष्टभिः कलशैः संस्नाप्य महतीं पूजां कृत्वा ब्राह्मणान् अन्नेन परिवेष्य हिरण्यगवाश्वादीन् दत्वा भगवतो महतीं पूजां कृत्वोत्सवमारभेत । भूमिप्रभवेषु देवेशमभ्यर्च्य शान्तिं सप्ताहं हुत्वा गुरवे दक्षिणां दद्यात् । ब्राह्मणान् भोजयित्वा पश्चादग्निषु शान्तिं जुहुयात् ।

---

1. M. उरुग्रह. 2. M. सूर्योदयादयः. 3 M. च. 4. M. धूमिका कृताद्याः. 5. M. रूप. 6. ज. अष्टभिः. अष्टशतैर्वा.

SGDF
Sri Gargeshwari Digital Foundation

जङ्गमस्थावरदोषशान्तिः

जङ्गमेषु यद्देवादिवैष्णवान्तं हुत्वा शक्तितो दक्षिणां दद्यात् । स्थावरप्रभवेषु विष्णुजा लोकविनाशाय ब्रह्मजा द्विजातीनां रुद्रजा सर्ववर्णानां लोकपालभवा राज्ञां स्कन्दजा माण्डलिकानां विनायकजाः सेनाधिपानां दुर्गामातृजा नृपस्त्रीणां आदित्यजा नृपवाहनायुधानां तत्तत्परिवारजाः तत्तद्भक्तानां विनाशाय भवन्ति । एतेषां शान्तिकर्म सद्य एव समारभेत ।

शान्तिये, यजुःसंहितादिजपः

भगवद्रूपे तु सन्दृष्टाश्चेदाराधकः कृच्छ्रमारभ्याब्जाग्नौ महाशान्तिं सप्ताहं क्षीरवृक्षसमिद्भिः त्रिमध्वक्ताभिः हुत्वा देवेशं शताष्टकलशैः संस्नाप्य [1]महतीं पूजां कृत्वा ब्राह्मणान् भोजयेत । सर्वेषां शान्तिं ब्रह्मरुद्रयोः तद्दैवत्यं पलाशसमिद्भिः कोटिहोमं हुत्वा ब्राह्मणान् भोजयित्वोत्सवं कारयेत् । अन्येषां तत्तद्दैवत्यं सहस्रशो हुत्वा ब्राह्मणान् भोजयेत् । सर्वेषां शान्तिं त्रिरात्रं वा जुहुयात् । प्रासादादिषु सर्वेष्वाज्येन शान्तिं हुत्वा शक्तितो दक्षिणां दद्यात् । वार्क्षेषु सौम्यमिन्द्राग्निदैवत्यं वैष्णवं हुत्वा पौण्डरीकाग्नौ विष्णुसूक्तेन श्रीसूक्तेन पद्महोमेन जपेन यजुःसंहितायाः आरण्यकेन वा सर्वेषां दोषाणां शान्तिर्भवतीति । शान्तिहोमविधाने सर्वत्र विष्णोर्नुकादिमिन्दाहुत्याश्राविताादीन जुहुयात् । महाशान्तिविधाने सर्वत्र पारमात्मिकमीङ्काराद्यष्टाशीतिरिति कश्यपः ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे अद्भुतशान्तिविधिर्नाम नवमोऽध्यायः ॥

---

॥ अथ दशमोऽध्यायः ॥

पौष्टिकविधिः, पौष्टिकदेशश्च

अथातः पौष्टिकं व्याख्यास्यामः । किञ्चिद्रक्तयुतं पाण्डुरं कुशदर्भापामार्गपलाशदूर्वातुलस्यादयैर्यज्ञवृक्षैः तापसैराकीर्णं कदल्याम्रपनसपुन्नागार्जुन चम्प-

---

1. ख - महतीं नास्ति.

SGDF Sri Gargeshwari Digital Foundation

काशोकवकुलसरलसिन्दुवारपाटलेन्दीवरहरिपल्लपरालाशनकपुष्प ? तमालकैरन्यैः पुंवृक्षैश्च [1] परिवृतं समशीतोष्णं प्रागुत्तरानतं अपाषाणशर्कराकीर्णं वालुकायुतं सुगन्धमेतत्पौष्टिकं क्षेत्रमिति ।

### पौष्टिकविमानादिः

विमानं श्रीवृत्तं फुल्लोत्पलं [2] मुकुन्दानुकूलं कुम्भाकारं त्रिकूटं सोमार्धकं कर्णिकाकारं महाहंसमयूरकूर्म[3]प्रलीनकाञ्चनाकारगरुडाकारस्वस्तिक [4]वृक्षमदनाकारं [5]हारबृहद्रथचतुःस्फुटमकुटाकारं महाशङ्ख[6]ध्रुवाकारं महेन्द्रं [7]प्रकीर्णञ्चेति (एतानि)। प्राग्दक्षिणपश्चिमद्वारमिष्टकादारुजं सुवर्णरजतताम्राच्छादितशिखरमष्टावरणं पञ्चावरणं त्र्यावरणं [8] वा पौष्टिकम् मृद्दारुमयं षड्हस्तं पञ्चहस्तम् । बेरं श्यामलं पीतं वा। कौतुकं ताम्ररजितकृतम् । पुष्पं द्विवर्णं त्रिवर्णयुतम् । गन्ध चन्दनागरुकोष्ठुयुतम् । धूपं गुग्गुल्वगरु[9]चन्दनश्रीवेष्टघनगुल्मिश्रम् । दीपो घृततैलयुतोष्टाङ्गुलोच्छ्रयः । वस्त्रं तान्तवमौर्णं पट्टजम् । हव्यं पूर्वोक्तम् । समिधो न्यग्रोधखदिरप्लक्षमधूकजम्बूश्रीपर्णपनसादया याः क्षीरिण्यः पुष्पयुता मध्याङ्गुलिपरिणाहा द्वादशाङ्गुलायता मधुदधिघृताभ्यक्ताः । द्रव्यं यवसर्षपाः । [10] अग्नयः श्रामणकाहवनीयान्वाहार्यगार्हपत्यावसथ्यसभ्यपौण्डरीका इत्याचक्षते ।

### आभिचारिकविधिः, आभिचारिकदेशश्च

अथाऽभिचारिकम् । राज्ञां शत्रुविजयो धर्मः [11] । येन पथा भगवन्तमभ्यर्च्य शत्रून् जयति [12]तदाभिचारिकमिति । शिरीषनिम्बकोविदारार्कबदरपुत्रजीवकरुद्राक्षादयैः कण्टकवृक्षैश्च परिवृतं श्ववानरमूषिकोरगकुक्कुटवायसगृध्रश्येनकाकादयैः क्रव्यादाद्यैः सरीसृपैश्च सङ्कीर्णमत्युष्णमतिशीतलं पाषाणशर्कराकीर्णं यक्षरक्षोभूतोरगप्रेतवेतालैराश्रितं अतिरक्त कृष्णं सम्मिश्रं[13] किञ्चिद्घोराकारं

1. M. स्त्रीवृक्षैश्च. 2. ज - मुकुंदासुमालालंचीन ख - सुमालंछन. 3. M. प्रकीर्णक. 4. M. वृत्त. 5. ख. ज - भार. 6. M. श्रवणाकार. 7. ख. ज. प्रह्लादि. 8. M. द्व्यावरणं. 9. M. कोष्ठु इत्यधिकम्. 10. ख. ज. म-पौण्डरीकेत्याऽभ्यते. 11. M. मतः. तदनुगुणं भगवन्तमर्चयित्वा. 12. M. तदाभिचारिकम्. तदत्र निषिद्धमिति. 13. ख. ज - सममिश्रम्.

SGDF
Sri Gargeshwari Digital Foundation

मरीचिपिप्पलीगुलपूतिगन्धं क्षेत्रमाभिचारिकमित्युपदिशन्ति । विमानमलक्षणं मृत्पककल्पितं[1] चर्मांसुकपालतुषकेशास्थियुतं बेरमिष्टकाकल्पितं पक्कं वा कण्टकवृक्षैर्नपुंसकवृक्षैर्वा कृतं कालायसपाषाणचूर्णहिङ्गुलशुनतैलशाणैर्वान्यैः फलपक-द्रव्यैः संस्कृतमतिरक्तमतिकृष्णमृद्युन्नमतिप्रमाणमतिदीर्घमतिस्थूलमतिकृशम् । कौतुकं कृष्णायसारकूटवृत्तलोह[2]सीसादयैः कृतमार्द्राऽऽश्लेषामूलकृष्णाष्टमीचतुर्दश्यादिदिनेषु शर्वर्यां स्थापितं पुष्पं पूतिगन्धि मदगन्धि शिरीषमहाभद्रकार्ककदम्बरक्तकुमुद-पुष्पनिर्गुण्डीपत्रैकपर्णयुतं गन्धं रक्तचन्दनमुग्रगन्धं दीपो नारिकेलैरण्डपुन्नाग-मधूकनिम्बकरञ्जादिस्नेहयुतो मध्यमाङ्गुलोच्छ्रायः अर्घ्यं जलतण्डुलयुतं वस्त्रं नीलमाभरणं कालायससीसादिकृतं अग्निः कपालादिजं समित्कपित्थनिम्बभल्लात-विभीतकादययाज्ञिकानामष्टाङ्गुलैः षोडशाङ्गुलैर्वा आयता अङ्गुष्ठाग्रपरिणाहा । वाम-हस्तयुतं पृष्ठाग्रनिक्षिप्तं वार्तायुक्तं द्रव्यं कटुतैलनिम्बपत्रयुतं तदाभिचारिकम् ।

### आभिचारिकबिम्बविशेषः

नीलश्यामादिकृत्रिमवर्णैरालेख्यं सुधया कृतं बिम्बं दक्षिणाभिमुखं शयानं देवीवियुक्तमाभिचारिकम् । किं बहुना यद्यदत्र विधिविहीनं सशल्यकृतं तत्सर्वमाभिचारिकमिति कश्यपः ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
पौष्टिकाभिचारिकविधानं नाम दशमोऽध्यायः ॥

---

## ॥ अथ एकादशोऽध्यायः ॥

### वास्तुविधानम्, ग्राह्यभूमिः, नवविधदेशः परीक्षा

अथ वास्तुविधानं व्याख्यास्यामः । वास्तुसम्पत्सर्वसम्पन्मूलम् । अविरुद्धे वास्तुन्युषिते ऐहिकामुष्मिकाणां सिद्धिर्भवति । अतः सम्यक्परीक्ष्यैव सर्व-कर्माणि कारयेत् । शान्तिकं पौष्टिकं वा देशमाश्रित्य वृद्धिदेशं गृह्णीयात् ।

1. ख. च - मात्रे कल्पितमिति दृश्यते. 2. M. सीसमिश्रैः.



SGDF
Sri Gargeshwari Digital Foundation

तत्र वैष्णवं ब्राह्मं रौद्रमैन्द्रं गारुडं भौतिकमासुरं राक्षसं पैशाचमिति नवविधो देशः । तत्र रूढतरुजन्तुगन्धवर्णरसैः परीक्ष्याऽहरेत् ।

### वैष्णवदेशः

तत्राशोकार्जुनकर्णिकाराश्वत्थधातकीप्रभृतिभिः पुंवृक्षैः स्थलारविन्द दधित्थविष्णुक्रान्ताखुकर्णीतुलसीदूर्वाद्यैः [2] द्विजर्षिनृपाढ्याधारकं हरिवारणशार्दूल-वृषभ हंस शुक शारिका कपोताद्यैः[3] स्वभावाऽह्लादिभिः आकृतिवर्णभद्रकैराकीर्णं सोदकं पद्मचन्दनगन्धाढ्यं स्निग्धं श्वेतसम्मिश्रं सरक्तं रसनाऽमोदनं मधुररसं बुद्धिसत्त्वबलप्रदं गम्भीरशब्दं सुश्लक्ष्णं समोष्णं शीतं वैष्णवमिति ।

### ब्राह्मदेशः

बिल्वपलाशादियाज्ञिकैर्वृक्षैः कुश दर्भ देवनन्दासुरघ्नोगुल्मप्रभृतिभिर्युक्तं प्राज्ञद्विजहरिण हंस शकुनिभिराकीर्णं हूयमानाऽज्यचरुपुरोडाशगन्धितं श्वेतवर्ण-मीषत्कषायमधुररसं सौम्यं सत्त्वगुणोपेतं ब्रह्मवर्चसकरं सर्वकल्याणसम्प्रत्प्रदं यत्तद्ब्राह्ममिति ।

### रौद्रदेशः

कण्टकीतिन्दुकतिन्त्रिणीकरञ्जवेणुजपार्ककार्पासकालरक्तकरन्दाला[4]क्कुलभि-गन्धमाद्यैः रूक्षवृक्षैः? शूद्रपाषण्डचण्डैः हिंस्रसमुपचण्डिपक्षिभिरसुखासीनैः तल-माघ्राय त्रासयुक्तपशुभिराकीर्णं स्तोकरक्तासितवर्णं कपोतसदृशरूक्षं [5]लाला-रसामोदाम्लरसं क्रूरकर्मप्रदं सुखप्रीतिविवर्जितं शौर्यवीर्यप्रदं श्रुतिधर्मविरुद्धं यत्तद्रौद्रमिति ।

### ऐन्द्रदेशः

पनसाम्र कदल्यर्जुन पुन्नाग वकुल पाटल सिन्दुवरेन्दीवर सेरिंदारिं-दीपाकन्दिका.... .... .... मालाजालिकापुष्पमालाप्रभृतिभिः वैश्यशूद्राढ्यतम-

1. छ - कदली. 2. ख - नृपाद्यद्वारक. 3. ख - B. कपोतिन्यैः 4. ख. ज - कलम. 5. ख. ज - ललाभावकराम्ल. क - ललाटवत्काराम्लरसं.

SGDF
Sri Gargeshwari Digital Foundation

नायकालङ्कृतं क्रीडामृगपक्षिरिरंसुप्राणिभिः [1] बहुवर्णयुतैराकीर्णं पाटल्यगुरुगधाढ्यं हरितवर्णं पिप्पलीरसं धनधान्यविवृद्धिदं [2] पशुकृषिबलाऽह्लाददं राजसगुणप्रदं यत्तदैन्द्रम् ।

### गारुडदेशः

अङ्कोलदमलकरधामाकादित्यसाग्यसर्पघ्नैरण्डजर्जरहंससिंहपुष्पाद्यैः मार्जारनकुलचकोरगोधाशशवृकादिभिराकीर्णं मल्लिकामालतीनिम्बधूमगन्धाश्रयं हरितवर्णनिभं [3] मदाह्लादपण्यसंयुक्तं कषायरसं शौर्यवीर्यकरं प्रजासम्पद्वृद्धिदं यत्तद्गारुडमिति ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे वैष्णवादिदेशलक्षणं नाम एकादशोऽध्यायः ॥

---

## ॥ अथ द्वादशोऽध्यायः ॥

### भौतिकदेशः

अग्निमन्थ केतक निर्गुण्डी करवीर किंशुक हिन्ताल माधवी भूतमोदिनी नन्दा दूर्वा राजवल्लिकाद्यैर्मिश्रं [4] गुलोपेतैः ? प्राणिभिः स्थूलैः मण्डूकाद्यैश्चाध्युषितं चूर्णकभस्मगन्धितं सम्मिश्रवर्णं तिलरसं प्रजानामन्नदं पुष्टिवर्धनं निद्रातन्द्राविवृद्धिदं यत्तद्भौतिकमिति ।

### आसुरदेशः

भल्लात तपनोत्कटपत्रकण्टक सन्दालावरूह ? यज्ञघ्न पलाण्डु प्रभृतिभिः पाषण्ड कुहक धूर्त किरात कुक्कुट चक्र गृध्रोरग वृश्चिक शलल्यादिभिराकीर्णं हरीतकगन्धं सितासितातिरक्ताभं श्लेष्मातकरसं [5] विद्यायागविनाशनं युद्धदर्पप्रदं यत्तदासुरमिति ।

---

1. ख. ज - बल. 2. ख. ज - पशव्य कृषिबलाह्लाददं. 3. ख-मनाक् लावण्यपण्य संयुक्तं 4. एतावत्पर्यन्तं घपुस्तके गलितं. 5. छ - विन्यागं विनाशनं.

SGDF Sri Gurgeshwari Digital Foundation

### राक्षसदेशः

कपित्थदण्डकाण्डतिग्माग्निदाहरक्तपुष्पोद्भवार्द्रपूगप्रदविषाद्यैः चोरचण्डालाशुभमृगपक्षिभिः चिञ्चुलिरोगैराक्रान्तं मरीचिगुलगन्धाढ्यमतिरूक्षमतिरक्तप्रजानां क्षयकारणं सुरामांसादिवृद्धिदं यत्तद्राक्षसमिति ।

### पैशाचदेशः

श्लेष्मातक विभीतक शाल्मली सुरुण्ड वञ्जुल पापकर्ण कवचनापचनी कर्कारिकावास नील सोमाघ्नी प्रभृतिभिः श्व खरोष्ट्र सूकर सृगाल चण्डाल पुलिन्द शाकुनिकैर्जुष्टं पूति दुर्गन्धि मञ्जिष्ठागन्धितमूषररसान्वितं रूक्षं मृद्गात्रनिभमुद्गारकरं सरोगं क्षोभकरं तमिस्रं तामसदं सर्वक्षयकरं यत्तत्पैशाचमिति ।

एवंसंज्ञकाः ते ते देशाः । तस्मात् सुरर्षिमनुष्याणामाद्यषट्के वासं समाचरेत् । तेष्वाद्यौ ब्राह्मणानां ततो द्वौ क्षत्रियाणां विट्शूद्रयोः पुनरेकैक इति जानीयात् । तत्र च तद्वर्णवृद्धिदां भूमिं ज्ञात्वैव वसेत् ।

### लक्षणान्तराणि

सर्वाशागा आयता श्रेष्ठा । [1]प्रागुत्तरानता मध्यमा । अन्याऽनता जघन्या अग्राह्या । ज्यां खनित्वा तन्मृदं सङ्गृह्य पूरिता अधिका चेदुत्तमा पूरिता समा चेन्मध्यमा न्यूनपांसुः कनीयसी । मधुराऽम्लकषायलवणरसा प्रागुत्तरापरयाम्यानता मेघगजशार्दूलदुन्दुभिनिःस्वना शुक्लरक्तहरितासितवर्णा[2] क्रमशो भवतीति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे भौतिकादिदेशलक्षणं नाम द्वादशोऽध्यायः ॥

---

1. B - स्वपूरितपांस्वधिका पदगा ज्यायसी समा समपांसुः इति भिन्नानुपूर्वी.
2. B - वर्णानां.

SGDF
Sri Gargeshwari Digital Foundation

## ॥ अथ त्रयोदशोऽध्यायः ॥

### भूपरीक्षाकालविचारः, कार्यारम्भश्च

अथ चैवं[1] देशमभिज्ञाय शुभमासपक्षमुहूर्तेषु भूपरीक्षामारभेत । सुभिक्षे [2]सुराजनि धर्मिष्ठे अब्दे माघप्रोष्ठपदाषाढान् हित्वा अन्येषु शुक्लपक्षे असितेऽन्त्यत्रिभागे भागं हित्वा रेवती रोहिणी पुष्य स्वाती श्रवण श्रविष्ठा शतभिषक् चित्राऽदित्यश्विनी सौम्यानामन्यतमेऽर्क्षे [3]सुरासुरमन्त्रीन्द्वर्कशशिज वारेषु नन्दादिषु रिक्तां विवर्ज्य अन्यासु तिथिषु अष्टमीं षष्ठीं विष्टियुतां हित्वा करणेषु चरेषु सर्पेन्द्ररौद्रान् विवर्ज्य सुयोगे वैधृति विष्कम्भ वज्र परिघ व्याघात शूलातिगण्ड व्यतीपाताद्भुततिथिवारर्क्षे [4]योगदोषादित्याराSसितराहुदोषयुक्तानपोह्य दिवैवं निर्मले वित्काव्यगुरुहोरायां चतुर्थेऽष्टमे ग्रहैर्हीने शशिन्यव्ययायोदयायुगगे त्रिषडेकादशगैः पापैः केन्द्रगैश्च शुभैरन्यैरूर्ध्वाननहोरायां पूर्वाह्णे यजमानो भगवन्तमाराध्य ऋत्विग्भिस्सार्धं पायसं भुक्त्वा पुण्याहान्ते भामिनीं सर्वभोगयुतां शुभामेकां सर्वाङ्गीणार्द्रचन्दनां शुक्लमाल्याम्बरधरां मुक्ताभरणभूषितां [5]पद्मप्रदीपहस्तां पुरस्कृत्य सर्वे चन्दनदिग्धाङ्गाः शुक्लस्रग्वसनाः शुभ्राः प्राङ्मुखा उदङ्मुखा वा उद्देशिनीं महीं प्रेक्ष्य अत्वराः शकुनान्युपलक्ष्य विष्णोर्नामानि जप्त्वा पश्चात् "प्रीयतां भगवा" नित्यारभ्य "कुर्वन्तु च सहायता" मित्यन्तं शकुनसूक्तञ्च जप्त्वा गच्छेयुः ।

### शुभनिमित्तानि

तत्र वृष हय गज धेनु ध्वज छत्र चामर चक्राङ्कुश पायस दैवताकृति । हरिद्रा गोमय व्रीहि तण्डुल तिल यव अलङ्कृतगणिकाभामिन्यादिदर्शने "गच्छाऽहर गृहाण वद जय शाधि प्रसी' देत्यादिश्रवणे वीणा वेणु मृदङ्ग वेदमङ्गलानुवाक सूक्त श्रवणे च दधि क्षीर घृत जल सुरा पूर्णं कुम्भं रज्जुमुखं पिठरं[7] व[6]

1. B - चेद्दशं. 2. B. राजनि. 3. घ. ज - सुरासुरभित्राणां द्रेक्काणां शकवारहोरासुरिक्ताभिति पाटः । 4. A. योगयोगदोष 5. च - पद्महस्तां. 6. A. हरित. 7. A. रज्जुमुखं पीठकरं.

SGDF
Sri Gargeshwari Digital Foundation

शकट वीवध मदोत्कटमातङ्गान्यतमन्यस्तं लोहितं सीसान्यलोहं रत्नं दीप्तमाशुशुक्षणिं वा दृष्ट्वा परमां वृद्धिमादिशेत् । स्कन्धवहं कुम्भं शङ्ख मकुट भेर्यादि दृष्ट्वा स्तोकवृद्धिरिति । कृकलास पल्लाक्ष क्रौंचि कृष्णरज्जुवाल चकोर शुकशाब श्वेतकूबर रक्ततुण्ड कोकिल बलि जीवंजीव भृङ्गराज रामा वामाद्दक्षिणगाः शुभदाः । चाष श्येन बलाका गृहगौलि माकरि वनकुक्कुट कुण्डि विशालीदात्यूहाः दक्षिणाद्वामगाः शुभदाः ।

## दुर्निमित्तानि

वृकोलूक गौलिक द्रोणानां स्वरो वामतः शुभदः । कुणि काण कृश ह्रस्व पापरोगि छिन्ननास पाषण्ड मुण्ड चण्डाल गृध्र श्येन वानरोरग गज वाजि रुधिरस्राव [1]तरुपाताशन्याद्युत्पातेन्द्रचाप परिवेष अहर्नक्षत्र जाल प्रतिसूर्यादयः कार्यविघ्नकरा भवन्ति ।

## निमित्तान्तराणि

यत्रास्थि दृश्यते (तत्र वास्तुपुरुषस्य) तत्पार्श्वे पिशाच इति अश्वास्थि चेत् रक्ष इति श्वखरोष्ट्रान्यतमास्थिचेत् सर्प इति मयूरास्थिचेत् देवावास इति विजानीयात् । तत्काले वारणमदविसर्ग प्रत्यासन्नप्रसव मदोन्मत्तादिसम्भवो महदैश्वर्यसूचनकृत् । ध्वजपताकाद्यग्निदहन पतन कलह गजशकृन्मूत्रविसर्गाद्युद्भवे अर्थहानिः ।

इत्येवमादिशकुनानि विचार्य इष्टप्रदेशं नवधा परिकल्प्य मध्यतः सुरमनुष्यराक्षसाश्रयास्त्रयोंऽशाः ज्ञेयाः । तेषु देवांशेऽत्यन्तशोभनाः प्रारब्धाः कार्यसिद्धिकरा मनुष्यांशे बहुविघ्नमिश्रिता प्रयत्नसाध्या राक्षसांशे मरणरोग [2]यज्ञविघ्नकरा भवन्ति ।

एवं ज्ञात्वा अन्तः करणा[3]ह्लादपरिम्लान अक्षिभुजादीनां दक्षिणवामस्फुरणवहनादिना शुभाशुभमुपलक्ष्यारभेत । अभीष्टे देशे शुभराशौ स्थित्वा लक्षयेत । प्रागुत्तरान्तं क्रमेण क्रियादिषु रिप्पान्तं त्रिपर्यायं संस्थाप्य शुभर्क्षे शुभग्रहोदये

1. B. तरुपातनाश. 2. B. भग्नविघ्नकराः 3. A. मद.

SGDF
Sri Gargeshwari Digital Foundation

स्थिरे भामिनीं संस्थाप्य "अङ्गं स्पृश" स्वेति तामुक्त्वा स्पृष्टाङ्गेनापि लक्षयेत् । अक्ष्युरोजहृदयास्यस्पर्शने महदैश्वर्यं कपोलकर्णश्रवणगुह्यबाहुललाटपार्श्वनासाभ्रू-स्पर्शने वीर्यविवर्धनं पृष्ठोरुकक्षनखकेशस्पर्शने दुःखविघ्नकरम् । तयोक्तपदाक्षरे प्रथमद्वितीयतृतीयचतुर्थपञ्चमवर्गाद्यन्यतमाद्युक्ते महदैश्वर्यं षष्ठसप्तमाष्टमेषु [1]कचटवर्गेषूक्तेषु मरणकलहविघ्नानीत्यन्यदनिल दहनाक्षिश्रवणयुगलानां (?) पञ्चवर्गाणां पञ्च क्रमेणाजादिषु युज्यन्ते । शेषान् पृष्ठे स्थाप्य राशिवशात् ग्रहवशाच्चापि लक्षयेत् । एवमालक्ष्य शुभबहुलेष्वारभेत । ततो निर्गमने पूर्वोक्तशकुनान्युक्तप्रतिमाणि शुभानीति ज्ञात्वा स्वगृहं गत्वा शुभर्क्षे कर्तुरनुकूलर्क्षे कर्षणं कृत्वा उप्तबीजानि वापयित्वा प्ररूढसस्यानि गोगणेभ्यो निवेद्य ग्रामनगरपत्तनादीन् विन्यासविधिना अभिनिवेशयेदिति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे भूपरीक्षाविधिर्नाम

त्रयोदशोऽध्यायः ॥

---

## ॥ अथ चतुर्दशोऽध्यायः ॥

### ग्रामादिविधानम्, नवधा भेदः.

अथ ग्रामादिविधानं व्याख्यास्यामः । ग्रामाग्रहार नगर पत्तन खर्वट कुटिक सेनामुख राजधानी शिबिरा इति भेदा भवन्ति । विप्राणां सभृत्यानां निवासो ग्राम इति । स एव विप्रमुख्यानामेवाग्रहार इति । अनेकजाति-सम्बाधमनेकशिल्पजनकुलविकल्पकैराकीर्णं सर्वदेवतासंयुक्तं नगरमिति । द्वीपान्त-रागतद्रव्यक्रयविक्रयाधिष्ठितं पत्तनमिति । उभयसम्मिश्रं खर्वटमिति । [2]सपरि-वारकैकग्रामणिकं कुटिकमिति । सर्वजातिसमाकीर्णं नृपवेश्मसमायुक्तं बहु-

1. ख. कचटवर्गैष्ठ्यान्तःस्थोक्तौ मरणकलहविघ्नानील चेत् (?) । 2. B. परिचारकैः म. सपरिवारकैरनेकग्रामणिकं.

SGDF
Sri Garganshwari Digital Foundation

गह्वररक्षाविधानं सेनामुखमिति । चतुरङ्गसमाकीर्णा [1]नृपतितद्भृत्यजुष्टा राजधानीति । नृपसेनाचमूनाथनिवेशनं शिबिरमिति ।

### विप्रप्रशंसा. भूमिदानप्रशंसा

सर्वदेवमयं तेजो वैष्णवं तद्विप्ररूपमिति । नास्ति विप्रात्परं दैवं, नास्ति विप्रात्परं ज्ञानं, नास्ति विप्रात्परमं पात्रम् । पवित्राणां पवित्रं ज्ञानानां ज्ञानं सारात् सारतरम् । सावीत्रीमात्रसारोऽपि विप्रः सर्वदेवमयः किं पुनर्वेदपारगः! तस्मात्तेभ्यो दत्तं परमं पुण्यं लोकसन्तानकारणं परत्र [2]सुखदम् । तद्दत्तभूमिदानेन सदृशं नास्ति । अतो द्वादश दशाष्ट सप्त षट् पञ्च चतुस्त्रिद्व्येक सहस्रं वा सप्तशतं पञ्चशतं त्रिशतमष्टाधिकशतं तदर्धं वा पञ्चाशत् द्वात्रिंशत् चतुर्विंशत् षोडश द्वादश वा [3]विद्यातपोवृत्ताढ्यान् पत्न्यपत्याग्निसंयुतान् दरिद्रान् वेदपारगान् सुप्रसन्नान् वैष्णवान् विप्रान् आहूय देववत् तान् अभ्यर्च्य तेभ्यो नृपाऽज्ञया ग्रामादिप्रान्तानभिज्ञाप्य अनुमान्य स्थलवल्मीकाङ्घ्रिपारामतटाकह्रदनद्युपकुल्यादिभिः सीमां विनिश्चित्य तत्र तुषाङ्गारशर्करायोमलसिकतादीन् खनित्वा अर्पयित्वा करेणुना अच्युत्य (?) च विख्याप्य ।

### शासनकरणम्

राज्ञः साम्राज्याब्दाश्रयनामविप्रनामादिकं [4]ताम्रपत्रतले लिखित्वाऽर्पयित्वा [5]तत्प्रमाणकृद्विप्रमुख्यानां हस्ते क्षेत्रभूमिं जलेन सह दत्वा ग्रामविभागमाकल्प्य सपरिच्छदानि गृहाण्युपकल्प्य ददेत् ।

### ग्रामविन्यासप्रकारः

तस्मात् स्वनामग्रामर्क्षानुकूलर्क्षे ग्रामविन्यासमारभेत । सहस्रदण्डमानेन तदर्धेन शतदण्डमानेन वा वृत्तं चतुरश्रं वा सममुपकल्प्य दण्डेन प्रागुदग्मानं प्रमीय तन्मध्ये नैरृतस्थाने शङ्कुमाहृत्य तच्छायया [6]श्रवणेन वा प्राचीमुदीचीं वा कल्पयेत् ।

---

1. A. नृपदिदृष्टान्तदृष्टा. 2. ट. सुखवेदाशेषविधिः A. सुखदे देशेवासः तदत्र 3. B. तपोवृत्तान्. 4. A. ताम्रपत्रे लिखित्वा. 5. म. तत्प्रमाणकृतोदकक्षेत्रां भूमिं जलेन दत्वा. 6. A. ग्रहणेन.

SGDF
Sri Gargeshwari Digital Foundation

शङ्कुलक्षणम्, तत्संस्कारः

खदिरचन्दनकदम्बसालासनवकुलानामन्यतमं सारवन्तमशुषिरं समवृत्तं नाहाद्द्विगुणं षोडशाङ्गुलमानायतं शङ्कुमाहृत्य शुक्लपक्षे दिने शुद्धे कर्तुरनुकूले मुहूर्ते पञ्चगव्यैः प्राजापत्येन प्रक्षाल्य प्रोक्षणैः प्रोक्ष्य पुष्पगन्धधूपदीपाक्षतैरभ्यर्च्य वस्त्रेण परिवेष्ट्य पूर्वेद्युरधिवास्य आचार्यः स्नात्वा अलङ्कृत्य शिल्पिभिर्दण्डमानेन मानितां सुवृत्तां सुसम्मितां स्निग्धां वेदिं कृत्वा न्यग्रोधमण्डलं शङ्कुप्रमाणं द्विगुणमर्धञ्चोल्लिख्य तन्मध्ये बिन्दू उपकल्प्य तद्बिन्द्वोरन्तरे शङ्कुं प्रातरेव प्राङ्मुखः प्रयतो भूत्वा ब्रह्माणं मनसा ध्यात्वा [1]सूर्यं दिग्देवताश्च प्रणम्य [2]तताद्यैः ब्रह्मघोषैराघोष्य शङ्कुं संस्थाप्य [3]छायाग्रपतनं दृष्ट्वा सूच्यग्रेणाधाय यवमात्रं रेखां सूचयित्वा एवं पूर्वाह्णापराह्णयोरपि क्रमं बुद्ध्वा सूत्रं प्रसारयेत् ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे ग्रामादिविधानं नाम चतुर्दशोऽध्यायः ॥

---

॥ अथ पञ्चदशोऽध्यायः ॥

ग्रामादिषु पदकल्पनम्

चतुर्नव षोडश पञ्चविंशत् षट्त्रिंशदेकोनपञ्चाशच्चतुष्षष्ट्यैकाशीति शत सङ्ख्यान्यतमसङ्ख्यया पदमाहृत्य पदमध्ये गृहाणां सूत्रपीडां परिहृत्य वीथ्यन्तरे गृहश्रेणिकामारभेत ।

ग्रामाग्रहारयोः द्वादश विन्यासयोनयः

श्रीवत्सं नाभियुक्तं पार्श्वयुक्तं नन्द्यावर्तं भद्रकं स्वस्तिकं पद्मकं कर्णिकापद्मं पद्मावर्तं रथपदं प्रकीर्णकमुत्कीर्णकमिति ग्रामाग्रहारयोर्विन्यासयोनयो द्वादश भवन्ति ।

---

1. A. सूर्यादि. 2. म. तन्त्राद्यैः ब्रह्मघोषाद्यैः. 3. छायाग्रायतं.



SGDF
Sri Gargeshwari Digital Foundation

नगर्यादीनां कुम्भकवेदिकसिंहाख्य (सेनानिवेशन) दण्डकादि । एवं ज्ञात्वाऽऽरभेत ।

नाभिमहद्राजान्तराख्या वीथयश्चतस्रो भवन्ति । तत्र ब्राह्मदैवसमावृते नाभिमहावीथी द्वारतिर्यग्युते राजान्तरवीथी क्रमेण भवन्ति ।

प्राङ्मुखास्तिस्रः पञ्च सप्त वा वीथीः प्रकल्प्य युग्मानन्तरवीथिकाः कल्पयेदेतच्छ्रीवत्सम् । एतदेव वीथिप्रोतसनाभिकं नाभियुक्तम् । उभयोः पार्श्वयोः राजवीथिद्वययुक्तं सनाभिकमनाभिकं वैतत्पार्श्वयुक्तमिति । ईशानानलनीलानिलगाः प्राग्याम्यावरोदङ्मुखद्वारनाभिजाः ताभ्योऽन्तरा युग्मश्चैतन्नन्द्यावर्तमिति । द्वारवीथी यदि प्रोत्य क्षुद्रमध्यमा महावीथीं स्पृशन्त्येतद्भद्रकमिति । तिर्यक् तिर्यक् समीकृता रथ्याश्चतुर्था प्रोताः स्वस्तिकमिति । नाभिमङ्गलवीथिभ्यां वेष्टितं चतुर्द्वारयुतमेतत्पद्मकमिति । स्वस्तिकवत् कलितं कोणमध्याश्रितनाभ्या द्वारावीथियुतमेतत्कर्णिकापद्ममिति । भद्रकवत्प्रोतरथ्यान्तं पद्मावर्तमिति । समषड्राजवीथिका प्रागुत्तरमुखा चतुर्द्वारयुता चेत्येतद्रथपद्ममिति[1] । पदनाभिकं तद्युक्तानुगाल्पान्तवीथिकं प्रकीर्णकमिति । तत्पदं प्रतियुक्तव्यत्यस्तक्षुद्रवीथिकमक्षुद्रवीथिकमुत्कीर्णकमिति ।

वृत्तैकवीथिकं कुम्भकमिति । वायव्याग्नेयनिर्गमं वेदिकम् । चतुरश्रं समं कृत्वा नाभ्यष्टदिग्द्वारमुखमन्यत्पद्मकसङ्काशं[2] सिंहाख्यमिति । यथेष्टायतैकरथ्याद्वारद्वययुतं दण्डकमिति । एतेषु सर्वेषु नाभिप्रोतं दण्डच्छेदं सूत्रछेदं न कारयेदिति विज्ञायते ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे

ग्रामाग्रहारादिविन्यासविधिर्नाम

पञ्चदशोऽध्यायः ॥

---

1. म. रथपद्मं. 2. संकाशमित्यतः किंचित्त्रुटितमिव भाति.

SGDF
Sri Gargeshwari Digital Foundation

## ॥ अथ षोडशोऽध्यायः ॥

### गर्भन्यासः

सगर्भा पृथिवी सूते विगर्भा सर्वनाशिनी । तस्मात्सर्वप्रयत्नेन गर्भं संस्थाप्यैव निवेशयेत् ।

### गर्भभाजन (फेला) प्रमाणम्, स्थापनमुहूर्तविचारः

पञ्चदशाधिकद्विशतपलं तदर्धं वा ताम्रमाहृत्याष्टाङ्गुलायतमष्टयमोच्छ्रयं षड्यवघनाधारं चतुर्यवघनभित्ति नवभागाभ्यन्तरं भाजनं कृत्वा द्व्यङ्गुलोच्छ्रयं तद्विस्तारसमं पिधानं न्यूनद्वियवं घनं त्वधो भित्त्यानन्नं उभयसंश्लिष्टं चतुरस्रं खण्डस्फुटितवर्जितं गर्भभाजनं तदर्धं वा कृत्वा उक्ततिथिवारऋक्षांशकलग्नेषु स्थिरराश्यंशके स्थिते चन्द्रे अनुकूलराशावुच्चगेषु शुभेक्षितेषु ग्रहेषु आयुर्ग्रहवर्जिते स्थिरराशौ शर्वर्यां गर्भं संस्थापयेत् ।

### शान्तिहोमः

स्थापनदिवसात् पूर्वं अङ्कुरानर्पयित्वा पूर्वेद्युरेव पूर्वाह्णे पञ्चगव्यैः फेलां प्रक्षाल्य जलेऽधिवास्य मण्डपे प्रपायां वाऽलङ्कृत्य धान्योपरि अण्डजाद्यास्तृते संस्थाप्याऽघोष्य वास्तुहोमं हुत्वा पुण्याहं प्रवाच्य आशीर्वाग्भिः गद्यतालाद्यैः स्तुत्वा अन्यैश्चाऽघोष्य पुनः धान्यराशौ प्रतिष्ठाप्य भगवन्तं ब्रह्मेश्वरौ चाभ्यर्च्य दिक्षु दिक्पालकगजनागानभ्यर्च्य हवींषि सन्निवेद्य शान्तिं जुहुयात् ।

### स्थापकलक्षणम्

निनीय रात्रिशेषं पुनः प्रभाते धर्मात्मा स्नात्वा स्नानविधानेन स्नातं सर्वलक्षणसम्पन्नं मनोवाक्कायकर्मभिर्निर्मलं सुपुष्टाङ्गं सुरूपसम्पन्नं विद्याधर्मविशारदं विष्णुभक्तिपुरस्सरं वेदतत्त्वार्थदर्शिनं दैवपैतृकयोर्निश्चलं पत्न्यपत्यसंयुतमदीनमानसमेकं स्थापकमानम्य अलङ्कृत्य पृथिवी गर्भजननी स्थापको जनकः, तस्मात् तत्प्रसादात् समृद्धिरिति ज्ञात्वा सम्यक् प्रारभेत ।

SGDF
Sri Gurudev Digital Foundation

### रात्रौ निधापनम् , निधापनप्रकारः

दिवैव निर्मले द्रव्याणि भाजने क्षिप्त्वा रात्रावेव निधापयेत् । दिवा विनश्यति । गर्भभाजनमादाय नवाम्बरोपरि निधाय धूपदीपादिभिरलङ्कृत्य आत्मसूक्तं जप्त्वा प्रणम्य देवेशमनुज्ञाप्य श्रीसूक्तेन फेलामभिमृश्य फेलामध्यपदे माहेन्द्रमण्डलं पृथिव्यक्षरसमायुक्तं संस्थाप्योपरि परिवारणे लकारान्तर्गतमादिबीजं संस्थाप्य ओङ्कारेणावेष्ट्य अष्टशतं प्रणवमावर्त्य "तत् त्रीण्ये" षेति मन्त्रेण सामुद्रमृत्तिकां क्षिप्त्वा गजदन्तवल्मीकवृषविषाणकुलीरावासआरानकेदारवननदीपर्वतजातानां क्रमेणेन्द्रादीशानान्तं क्षिप्त्वा मध्ये मृणालकुमुदोत्पल कल्हारकशेरून् चतुर्दिक्षु प्लक्षोदुम्बराश्वत्थवटत्वचः कोणेषु च "इदं ब्रह्म" त्यर्पयित्वा सामुद्रनादेयकौप्यताटाकह्रादसारसपाल्वलौपकुल्यतौषारोदकं क्रमेण "ये ते शत" मित्यास्राव्य रत्नधातुबीजानि मन्त्रेण क्षिपेत् ।

### तत्र होममन्त्राः

दण्ड कमण्डलुस्रुग्यज्ञभाण्डोपवीतादीनि विप्रवृद्धिनिमित्तानि आयुधध्वजादीनि क्षत्रवृद्धये तुलातोदादीनि वैश्यवृद्धये शूद्राणां हलादीन् सौवर्णमयान् मध्यपदे "गन्धद्वारा" मिति क्षिप्त्वा पूर्ववदाराध्यौपासनाग्नावाघारं हुत्वा यद्देवादीन् ब्राह्मं वैष्णवं रौद्रं लोकपालाधिदैवत्यमीङ्काराद्यन्तं हुत्वा 'विष्णवे वेधसे रुद्रायादित्येभ्यः अश्विभ्यां वसुभ्यो [1]दिग्गजेभ्यः समुद्रेभ्यो द्वीपेभ्यो लोकेभ्यः सर्वभूतेभ्यः स्वाहे' ति व्याहृत्यन्तं हुत्वा गर्भरूपं निधापयेत् ।

### ग्रामाग्रहारादीनां विशेषः

[2]ह्लादाम्लानमाला निर्वाणदीप पूर्णकुम्भ रत्न गव्यमयानि वस्तूनि गर्भास्येषु कुम्भप्रदीपान् ग्रामाग्रहारयोः शेषान् नगर्यादीनां गव्यरत्नमयौ क्षेत्रारामतटाकोदवसितेषु बलाकादीन् तत्तद्रूपान् तप्तहाटकमयं यवमात्रं तदर्धं चतुरङ्गुलं वा कृत्वा "ब्रह्मजज्ञानं, इदं विष्णु" रिति जप्त्वा मध्यपदे निधापयेत् ।

---

1. म. नागराजेभ्यः समुद्रेभ्यो लोकेभ्यः इत्यादि. 2. B. ह्लादंमालामाला A. एतन्न दृश्यते.

SGDF
Sri Gargeshwari Digital Foundation

तदुपरि रत्नानि क्षिप्त्वा पिधाय "विष्णुस्त्वां रक्षतु" इत्यभिमृश्य अहतवाससा आवेष्ट्य पुण्याहं स्वस्तिमृद्धिञ्च वाचयित्वा अलङ्कृत्य निधाय प्रदोषे भूतयक्ष पिशाचनागब्रह्मराक्षसयोगिनीढाकिनीप्रभृतीनां चतुष्पथचैत्यवृक्षश्मशानारामेषु गुहमातृशास्त्रादीनां स्थाने चरुलाजापूपसक्तुपमन्वितं माषमुद्गहरिद्रामिश्रितं पुष्पाद्भिः तत्तत्स्थाने बलिं क्षिप्त्वा रात्रावेव ध्रुवे लग्ने ब्रह्मस्थाने द्वारे महेन्द्रे गृहक्षते भल्लाटे पुष्पदन्ते वा विष्णुशिवस्कन्दानामालये वा ग्रामवृद्ध्यै स्थानमाहृत्य ललाटबाहुनाभिसमं तदर्धविस्तारं खनित्वा स्थलगर्भं पीठगर्भं व्यपोह्य पिशुननास्तिकजडामित्रशठहैतुकादीन् विहाय यथा ते नैव जानीयुः तथा कर्तव्यमिति ज्ञात्वा पञ्चगव्यैः प्रोक्ष्य मुहूर्ते समनुप्राप्ते ब्राह्मं वैष्णवं हुत्वा देवदेवं जगन्नाथं विष्णुं ध्यात्वा शुक्लमाल्याम्बरधरः श्वेतानुलेपेनालङ्कृतः शुद्धाशयः तत्पात्रं "मेदिनी देवी" ति हस्ताभ्यामभिमन्त्र्य "नमो वराहाये" त्युक्त्वा आत्मानं वराहरूपं वसुन्धरोद्धारं ध्यात्वा "इदं विष्णु" रिति तत्र गर्भं निधाय "देवीदं गर्भमाधत्स्वे" ति देवीं वसुन्धरां स्मृत्वा "मेदिनी देवी" त्यादिभिर्मन्त्रैः पञ्चभिः सूक्तेन चाभिमन्त्र्य "आ त्वाहार्ष" मिति स्थापयेत् । सुवर्णमेदिनीरत्नपशुधान्यादीन् दक्षिणां दत्वा अन्नाद्यदानञ्च स्वशक्तितः कृत्वा श्वेतपद्मबिसतन्तुकृतवर्तिकां द्व्यङ्गुलपरिणाहां षोडशाङ्गुलोज्ज्वलितप्रदीपिकां षोडशप्रस्थसम्पूर्णघृतपात्रप्रतिष्ठितां सम्यग्विधाय गर्भस्य दक्षिणपार्श्वे श्रीसूक्तेन निधायाभ्यर्च्य सुदृढं सुस्थिरं मृद्भिः सम्यक् प्रकल्प्याऽरभेत ।

## कामनाभेदेन न्यासप्रकारः

[1]नगरादीनां देवागारे चैत्यवृक्षे द्वारवामे वा [2]बालानामभिवृद्ध्यर्थं वाहनायुधस्थाने वर्षवारिवृद्ध्यर्थं विद्युत्पर्जन्यरूपादीन् सुवर्णेन कृत्वा पञ्चगव्यैः मृण्मये वा भाण्डे निधाय तटाके सोमौषधिधान्यसमायुक्तं पञ्चगव्यं पञ्चरत्नं वा कैदारिके स्थापयेत् । रत्नबीजधातुसमायुक्तं गृहेषु स्थापयेत ।

---

1. A. नागराजादीनां. 2. म. बलिस्थानामभिवृद्ध्यर्थं.

SGDF
Sri Gargeshwari Digital Foundation

एवं प्रतिष्ठिता भूमिः धनधान्यसमृद्धिदा ।
सर्वसम्पत्करा पुण्या सफला च भविष्यति ॥
विगर्भा च सशल्या च विनाशाय भविष्यति ॥

विशुद्धेन द्विजेनानुतापयुक्तेनैश्वर्यवृद्धेन स्थापितं गर्भमैहिकामुष्मिकशुभदमन्येन स्थापितं जारगर्भमिवोभयोः विनाशाय भवति । एवं ज्ञात्वा गर्भं प्रतिष्ठाप्य प्रवेशयेदिति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे गर्भन्यासविधानं नाम षोडशोऽध्यायः ॥

---

## ॥ अथ सप्तदशोऽध्यायः ॥

### ग्रामविन्यासः, हरिदृष्टिः, हरपृष्ठम्

प्रागुदक् सप्तदशभिः सूत्रैः पदान्युपकल्प्य षट्पञ्चाशद्द्विशतभागेषु द्रौहिणं षोडशकं वेदाधिकाशीतिपदं दैविकं मानुषं षण्णवतिकं पैशाचं षष्टिरित्येवं ज्ञात्वा दैविकमानुषयोः विप्राणां पैशाचे कर्मजीविनां ब्राह्मवायव्यैशान्यानलनीलेषु देवसभागोष्ठापणस्थानानि प्रकल्प्य ग्राममध्ये भगवन्तं विष्णुं जिष्णुं जगत्पतिं सर्वदेवमयं देवं परमात्मानं पञ्चमूर्तिविधानेनार्चयेत् । पश्चिमे वा अन्यत्र वा देवीभ्यामृषिभ्यां वीशशैषिकाभ्यां सहितं बेरं शैलजमुत्तमं, वर्णयुक्तं ग्रामाभिमुखं संस्थाप्यार्चयेत् । हरिदृष्टिः शुभदेति । ऐशान्यां बाह्ये तद्ग्रामपराङ्मुखं देवं हरं स्थापयेत्, हरपृष्ठं शुभदमिति ।

### सूर्यादिस्थानम्

इन्द्रेशानयोरन्तरे सूर्यमिन्द्राग्न्योर्मध्ये विघ्नं यमाग्न्योर्मध्ये दुर्गां नैर्ऋते शास्तारं वरुणवाय्वोरन्तरे स्कन्दं ग्रामाद्बहिरुदगीशानान्तरे ज्येष्ठामैशान्यां भद्रकालीं संस्थाप्यार्चयेत् । एषामर्चनया च ग्रामशान्तिर्भवति ।

SGDF
Sri Gargeshwari Digital Foundation

## विष्णुपूजनप्रशंसा

भगवन्तं विष्णुं विनाऽन्ये देवैर्मनुष्यैश्च न सेव्याः । ब्राह्मशमदम सत्यत्वादिसत्त्वगुणाः विष्णोरेव प्रसादात् । अतो ब्राह्मं तेजः तत्प्रसादाद्वर्धते । ततो ग्रामाग्रहारयोः पूज्यो भगवान् हरिः । अश्वरथनागायुधयोधानां [1]जयवीर्यादयो राजसगुणा रुद्रशक्त्या प्रसिद्ध्यन्ति उग्ररूपत्वाद्रुद्रस्य । अतो नगर्यादिषु हरः पूज्यः । विष्णुः सर्वत्र पूज्यः । तत्पूजाविधानाद्धर्मसिद्धिर्भवति । वर्णाश्रमधर्माश्रयाः श्रुतिधर्माश्च विष्णुप्रसादात् सिद्ध्यन्ति । अतः तद्ग्रामवासिनां यजमानस्य राष्ट्रस्य च सामान्यमग्निहोत्रम् । तदाराधनं विप्रवरैः नित्यं कर्तव्यम् । तस्मात् सेवितव्यो भगवानिष्टापूर्ताभिवृद्धये । विष्ण्वाराधनान्विते देशे देवर्षिपितृगणाः सर्वे पूजिता भवन्ति । अपूजिते तस्मिन् पूजिता अप्यपूजिता एव । विष्णुपूजाविहीने देशे विप्रो न जात्वपि वसेत्, तत्र तामसस्वभावत्वात् । तस्मात् ग्रामान्तरे देवं संस्थाप्य महतीं पूजां वैखानसेन विधानेनैव कारयेत्, सौम्यत्वाद्भुक्तिमुक्तिफलप्रदत्वाच्च तद्विधेः ।

## अर्चकादीनां वासस्थानानि

तत्पूजकानां तत्पार्श्वे स्थानं तस्यैशान्ये सभास्थानमाग्नेय्यां गोष्ठागारं नैर्ऋत्यामापणं पैशाचभागे प्राच्यां कुलालनापिताम्बष्ठादीनां याम्ये तन्तुवायचक्रिणां वारुणे क्रयविक्रयकारिणां वणिजां सौम्ये द्विजभृत्यानां वादित्रजीविनां च आग्नेय्यां क्रोशमात्रे तक्षादीनां नैर्ऋते गव्यूतिमात्रे [2]चण्डालवर्गाणां वायव्ये मृगव्याधशाकुनिकादीनाम् । पैशाचाद्बाह्यतः प्राकारपरिखा । परिखायाः परितो धनुश्शतं तदर्धमर्धं कूपारामतटाक[3]वाप्यादयस्तत्र भवन्ति । ऐशान्ये नदीतीरे वा श्मशानं ग्रामायामसमम् । दूरे वारुण्यां तटाकं त्रिदण्डसहस्रं तदर्धप्रमाणं वा सेतुबन्धं दृढतरमत्युन्नतमनवच्छेद्यं कारयेत् । तत्र [4]निर्झरोपकुल्यामहाकुल्यादिजलयन्त्राणि सम्यक् सङ्कल्पयेत् । तत्पार्श्वतः [5]सर्वसमसलिलक्षेत्रं केदारं

---

1. A. जयवीर्यानन्दादयः. 2. A. चण्डलपक्कणम. 3. M. मठादयः इत्यधिकं. 4. B तत्र बद्धारोहणमार्गं कुर्यात. इत्यधिकं. 5. A सर्वसमय.

SGDF
Sri Gargeshwari Digital Foundation

समभागमुपकल्प्य एवं बहूदकमल्पायासकृतरक्षकमशोष्यमनवाह्यमप्रबाध्यं जलाशयं यत्नतः कारयेत्, जलमूलत्वात् सर्वजन्तूनां प्रवर्तनस्य । तस्मात् सर्वप्रयत्नेनाधारोपरिष्टात् बहुलजलमेवं कुर्यात् ।

### आरामवृक्षाः

न्यग्रोधोदुम्बराश्वत्थप्लक्षान् प्रागादिषु चैत्यवृक्षान् प्ररोहयेत् । [1]तत्पृष्ठानिलप्रवेशात् समृद्धिर्भवति । अन्यथा न समृद्धिः । वारुणश्लेष्मातकनिम्ब शाल्मलीनाम्रेयादिषु कोणेषु प्ररोहयेत् । शाल्मलिकिंशुककार्पासक्षीरिकण्टकिवृक्षान् ग्रामाभ्यन्तरे न प्ररोहयेत्, शून्यत्वात्तेषाम् ।

स्कन्दं चन्द्रञ्च[2] विघ्नं भगवन्तं विना देवमानुषयोर्भागे न संस्थापयेत् । देवतासामान्यछाया शुभदा ।

### गृहकल्पनम्, गृहदानम्

एवं विमानानि परिकल्प्य विप्राणामावसथानि विधिना मनोरमाणि शुभ्राणि सपरिच्छदानि पृथक् पृथक् कल्पयित्वा बिम्बानि देवदेवस्य तेषु संस्थाप्य द्विजेभ्यो वेदपारगेभ्यो विष्णुभक्तियुक्तेभ्यो दद्यात् ।

### ग्रामदानम्

एवं बहुजलसम्पन्नं[3] ससारामकैदारिकं सम्पन्नभृत्यसङ्कीर्णमनुपद्रवमव्याधिजनकमदस्युपरिपन्थिजनसम्पन्नं समृद्धं ग्रामं कृत्वा नृपो दद्यात् । [4]अमृतोदकमनरण्यमपरिग्रहमकृष्टफालमेव कल्पयित्वा साधुजनगृहीतं वा विप्रेभ्यः शक्तितो दद्यादतिभक्तिपुरस्सरम् । सर्वपापविनिर्मुक्तः स विष्णुलोकं गत्वा विष्णुसायुज्यमाप्नुयात् ।

---

1. M. तत्पृष्ठानिल. 2. M. इन्द्राश्च इत्येव. 3. M ससादाराम.
4. M. अकृतोदकं.

SGDF
Sri Gargeshwari Digital Foundation

### दत्तापहारनिन्दा

सुरविप्रक्षेत्रं गोष्पदं वाऽपि यो हन्यात् त्रिसप्तनरकान् घोरान् गत्वा भूयस्तिरश्चां गतिसहस्रमवाप्नुयात् । तस्मात् सर्वप्रयत्नेन विषवह्निममं राजा सुरब्राह्मणदत्तं परिहरेदिति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे सर्वावासविधिर्नाम सप्तदशोऽध्यायः ॥

---

## ॥ अथ अष्टादशोऽध्यायः ॥

---

### वास्तुप्रशंसा

अथातो गृहवास्तुविधानं व्याख्यास्यामः । गृहं हि प्राणिनां मूलं [1]देहो मूलं शरीरिणाम् । विना देहं न कार्याणि । अतः सर्वकार्यकरं सम्पच्छुभोदयं विधियुतम् । विहीनविधिके वास्तुन्यसुरादयो वसन्ति । ऐहिकामुष्मिककर्माण्यस्य न सिद्ध्यन्ति । सम्यक् परीक्ष्यैवोपकल्प्य देवाऽऽवासं समूर्तामूर्तविधानेनानुदिनमाराध्योर्ध्वगतिं साधयेत् ।

### कर्षणे मुहूर्तविचारः, आयादिविचारश्च

माघप्रोष्ठपदाषाढमार्गशीर्षान् ज्ञशुक्रास्तमयञ्च हित्वा रोहिण्यादित्य तिष्यानलवायव्योत्तरा हस्त पैतृक श्रवण नैर्ऋत मैत्र वैश्वदेवाहिर्बुध्न्याश्वयुग्वासववारुणानि क्रमेणर्क्षचतुष्काणि प्रागाद्युत्तरान्तं स्थानदिग्गतभागेषु पूर्वोक्ततिथिवारेषु गुरुकाव्यसौम्योदये गृहीत्वा ऊर्ध्वाननहोरायां द्वात्रिंशद्दण्डमानेन हस्तमानेन वा यथालाभं प्रागुत्तरेशान्यायतां चतुष्पार्श्वे ओजसङ्ख्यां चतुरश्रां समां पूर्वोक्तगुणसम्पन्नां भूमिमाहृत्य तृणगुल्मलतादीनपोह्योक्तहलादिना कर्षयित्वा त्र्यंशं षोडशांशं[2] वा उद्यानार्थं गृहीत्वा कर्त्रायामाष्टत्रिहस्तं [3]तद्धस्तेनौजमाहृत्य विस्ताराहतायामं

---

1. M. वेदः. 2. A. वाप्यूनमर्थं गृहीत्वा. 3. A. तद्धस्तेनार्धमाहृत्य.



SGDF Sri Gargeshwari Digital Foundation

समभागमुपकल्प्य एवं बहूदकमल्पायासकृतरक्षकमशोष्यमनवाह्यमप्रबाध्यं जलाशयं यत्नतः कारयेत्, जलमूलत्वात् सर्वजन्तूनां प्रवर्तनस्य । तस्मात् सर्वप्रयत्नेनाधारोपरिष्टात् बहुलजलमेवं कुर्यात् ।

### आरामवृक्षाः

न्यग्रोधोदुम्बराश्वत्थप्लक्षान् प्रागादिषु चैत्यवृक्षान् प्ररोहयेत् । [1]तत्स्पृष्टानिलप्रवेशात् समृद्धिर्भवति । अन्यथा न समृद्धिः । वारुणश्लेष्मातकनिम्बशाल्मलीनाग्नेयादिषु कोणेषु प्ररोहयेत् । शाल्मलिकिंशुककार्पासक्षीरिकण्टकिवृक्षान् ग्रामाभ्यन्तरे न प्ररोहयेत्, शून्यत्वात्तेषाम् ।

स्कन्दं चन्द्रञ्च[2] विघ्नं भगवन्तं विना देवमानुषयोर्भागे न संस्थापयेत् । देवतासामान्यछाया शुभदा ।

### गृहकल्पनम्, गृहदानम्

एवं विमानानि परिकल्प्य विप्राणामावसथानि विधिना मनोरमाणि शुभ्राणि सपरिच्छदानि पृथक् पृथक् कल्पयित्वा बिम्बानि देवदेवस्य तेषु संस्थाप्य द्विजेभ्यो वेदपारगेभ्यो विष्णुभक्तियुक्तेभ्यो दद्यात् ।

### ग्रामदानम्

एवं बहुजलसम्पन्नं[3] ससारारामकेदारिकं सम्पन्नभृत्यसङ्कीर्णमनुपद्रवमव्याधिजनकमदस्युपरिपन्थिजनसम्पन्नं समृद्धं ग्रामं कृत्वा नृपो दद्यात् । [4]अमृतोदकमनरण्यमपरिग्रहमकृष्टफालमेव कल्पयित्वा साधुजनगृहीतं वा विप्रेभ्यः शक्तितो दद्यादतिभक्तिपुरस्सरम् । सर्वपापविनिर्मुक्तः स विष्णुलोकं गत्वा विष्णुसायुज्यमाप्नुयात् ।

---

1. M. तत्स्पृष्टानिल. 2. M. इन्द्रञ्च इत्येव. 3. M. ससारादाराम.
4. M. अकृतोदकं.

SGDF Sri Gangeshwari Digital Foundation

### दत्तापहारनिन्दा

सुरविप्रक्षेत्रं गोष्पदं वाऽपि यो हन्यात् त्रिसप्तनरकान् घोरान् गत्वा भूयस्तिरश्चां गतिसहस्रमवाप्नुयात् । तस्मात् सर्वप्रयत्नेन विषवह्निसमं राजा सुरब्राह्मणदत्तं परिहरेदिति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे सर्वावासविधिर्नाम सप्तदशोऽध्यायः ॥

---

## ॥ अथ अष्टादशोऽध्यायः ॥

### वास्तुप्रशंसा

अथातो गृहवास्तुविधानं व्याख्यास्यामः । गृहं हि प्राणिनां मूलं [1]देहो मूलं शरीरिणाम् । विना देहं न कार्याणि । अतः सर्वकार्यकरं सम्पच्छुभोदयं विधियुतम् । विहीनविधिके वास्तुन्यसुरा ह्यो वसन्ति । ऐहिकामुष्मिककर्माण्यस्य न सिद्ध्यन्ति । सम्यक् परीक्ष्यैवोपकल्प्य देवाऽऽवासं समूर्तामूर्तविधानेनानुदिनमाराध्योर्ध्वगतिं साधयेत् ।

### कर्षणे मुहूर्तविचारः, आयादिविचारश्च

माघप्रोष्ठपदाषाढमार्गशीर्षान् ज्ञशुक्रास्तमयञ्च हित्वा रोहिण्यादित्य तिष्यानलवायव्योत्तरा हस्त पैतृक श्रवण नैर्ऋत मैत्र वैश्वदेवाहिर्बुध्न्याश्वयुग्वासववारुणानि क्रमेणर्क्षचतुष्काणि प्रागाद्युत्तरान्तं स्थानदिग्गतभागेषु पूर्वोक्ततिथिवारेषु गुरुकाव्यसौम्योदये गृहीत्वा ऊर्ध्वाननहोरायां द्वात्रिंशद्दण्डमानेन हस्तमानेन वा यथालाभं प्रागुत्तरैशान्यायतां चतुष्पार्श्वे ओजसङ्ख्यां चतुरश्रां समां पूर्वोक्तगुणसम्पन्नां भूमिमाहृत्य तृणगुल्मलतादीनपोह्योक्तहलादिना कर्षयित्वा त्र्यंशं षोडशांशं[2] वा उद्यानार्थं गृहीत्वा कर्तायामाष्टत्रिहस्तं [3]तद्धस्तेनौजमाहृत्य विस्ताराहतायामं

---

1. M. वेदः. 2. A. वाप्यूनमर्धं गृहीत्वा. 3. A. तद्धस्तेनार्धमाहृत्य.



SGDF Sri Gurgeshwari Digital Foundation

त्रिगुणीकृत्य वसुभिर्हृत्वा लब्धेषु ध्वजादिषु शुभयोगे वा आरभेत । [1]ध्वजेऽर्थवृद्धिः अजस्रपूजा धूमे हानिर्दुःखं व्याधिभयं सिंहे राजामात्यपुरोहितादीनां पूजा श्वाने कुलानपत्यत्वं वृषे धनधान्यापत्यवृद्धिः खरे दारानाचारत्वं गजेऽप्यैश्वर्यं ध्वाङ्क्षे प्रेष्यप्रवृत्त्यादयः । तस्मात् ध्वजसिंहवृषनागान्यतममाहृत्य सप्तारत्निमात्रं जलान्तं शिलान्तं घनान्तं वा खनित्वा मृदं व्यपोह्य सिकताभिः [2]शौचदृढाभः मृद्भिश्चापूर्य इभपादैर्मुसलैश्च समं दृढतरमुपकल्प्य संवत्सरं तदर्धं त्रिमासं मासं वा तूष्णीं निधाय कालक्रमेण शालामारभेत ।

## वास्तुपदकल्पनम्

पुरुषं वास्तुनः प्रागुत्तमाङ्गमुत्तानाननं ज्ञात्वा मर्माणि परिहृत्य कल्पयेत् । प्रागुदक् दशभिः सूत्रैर्भूमिं विभज्यैकाशीतिपदकल्पितशरीरे क्रमादीशानपर्जन्यजयन्तेन्द्रादित्यसत्यान्तरिक्षभृशाः प्रत्यङ्मुखाः, अग्निपूषवितथगृहक्षतयमगन्धर्वभृङ्गराजर्षय इत्येते [3]दक्षिणस्यामुदङ्मुखाः, निर्ऋतिदौवारिकसुग्रीवपुष्पदन्तवरुणासुरशोषरोगाश्चेति प्रतीच्यां प्राङ्मुखाः, वायुनागमुख्यभल्लाटसोमार्गलादितिसूरिदेवा [4]दक्षिणास्याः उदीचीनस्थाश्च, एकपदभोजिनः द्वात्रिंशद्देवता भवन्ति । अर्यमा दण्डधरः पाशभृत् धनदः प्रागादिक्रमेण षट्पदिकाः । सवितृसावित्रौ इन्द्रेन्द्राजौ रुद्ररुद्राजौ अपआपवत्सावित्येते आग्नेयादिषु कोणेषु द्विपदभोजिनः । तद्बाह्ये चरकी देवतारिः पूतना पापराक्षसी इत्येताश्चतस्रः कोणेषु द्विपदभोजिन्यः पिशाचाख्या भवन्ति । एतेषां मध्ये ब्राह्मं पदमेकं परितः प्रागादीशानपर्यन्तं भृग्वङ्गिरोऽत्रिपुलहपुलस्त्यक्रतुमरीचिवसिष्ठानामित्येवं यास्वङ्गानि परिज्ञाय तिष्ठन्ति ।

## द्विजानां गृहविधानम्

अजे वृषे सूर्ये प्राक्प्रतीचीमुखीं सिंहे कुलीरे वा उदग्दक्षिणामुखीं परिहृत्य मीने मिथुने च सूर्ये सर्वमुखीमादित्याभिमुखमेवारभेत । प्राक्शालं

---

1. M. गजेऽर्थसम्पत् 2. M. येचन्द्र (?) दृढरूपाभिः. 3. B. दक्षिणस्यामितिनास्ति. 4. B. दक्षिणास्या इति नास्ति.

SGDF
Sri Gargeshwari Digital Foundation

यदि कुर्यात् भल्लाटे प्रथमेष्टकां पुष्पदन्ते द्वारं पर्जन्यदेशे जलमार्गं महेन्द्र-सूर्यार्यमदेशे पर्यङ्कं अन्तरिक्षे महानसं इन्द्रेन्द्राजस्थाने भोजनं गन्धर्वासुरदेशे वर्चःस्थानं वारुणसौम्ये कूपम् । याम्यायां यदि चेत् महेन्द्रे प्रथमेष्टकां भल्लाटे द्वारं पर्जन्ये वारिमार्गं गन्धर्वसुग्रीवे शयनं नागे वर्चःस्थानं भोजनमहानसकूप-जलमार्गाणां पूर्ववत् । वारुण्यां यदि भवत् गृहक्षते प्रथमेष्टकां महेन्द्रे द्वार-मीशे पचनागारं सुग्रीववरुणे शयनमन्यत् पूर्ववत् । उदीच्यां यदि भवेत् पुष्पदन्ते प्रथमेष्टकां गृहक्षते द्वारमन्यत् समम् । सर्वत्र प्रतिवंशं शयनं गृहस्य दक्षिणनयनालोकं विदिक्षु देवागारं तत्प्रमुखे अग्न्यगारमगाराभिमुखं भृत्या-नामतिथीनां दक्षिणतो नैर्ऋत्यामुत्करस्थानं पृष्ठतो विद्यास्थानं तत्रैव । एतद्-ब्राह्मणानाम् ।

## नृपाणां गृहविधानम्

नृपाणां पुरस्य मध्ये पश्चिमे वा परिघाप्राकारयन्त्राट्टालकशोभितं चतु-र्द्वारयुतं बहूपह्वरदुर्गारण्याढ्यमुदक्पश्चिमं द्रूमन्यूनप्रक्लृप्ताभिषेकमण्डपं [1]याम्यै-कप्राग्विस्तृताङ्गणं हर्म्यप्रासादसम्बाधं प्राङ्मुखमेवातिरम्यं विधिना कल्पयेत् । प्राच्यामायुधागारमग्नेय्यां गोष्ठागारं याम्यायां भोजनस्थानं नैर्ऋत्यां धनसङ्ग्रहं प्रतीच्यामन्तःपुरं सौम्यायामाथर्वणस्थानं वायव्यां रक्षिणामस्त्रशस्त्राणामैशान्यां याम्यायां वारणस्थानं वारुण्यां क्रीडास्थानं वायव्यां तुरगस्थानं वापीकूपतटाका-नामैशान्यामङ्गणेऽभिमुखमार्यास्थानं पार्श्वे हेतिमुरत्यागारं (?) तद्दक्षिणेऽधिकार-नियुक्तानामाग्नेय्यां महानसम् । एवं त्रिप्राकारयुतं सुदृढं परिकल्प्य तदभि-मुखमङ्गनावाटं प्राच्यां [2]तदर्थासनं सर्वेषः सैनिकानाम् ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे

गृहवास्तुविधानं नाम अष्टादशोऽध्यायः ॥

---

1. M. याम्ये गृहं 2. B. धर्ममानसं सर्वेत्रैतान्नयतामति.

SGDF

## ॥ अथ एकोनविंशोऽध्यायः ॥

### वैश्यशूद्रयोः गृहविधानम्

वैश्यानां क्रयविक्रयागारं प्रत्यङ्मुखे दक्षिणे भोजनस्थानं बाह्ये दक्षिणे गोधनस्थानं तत्पश्चिमे महिषाणाम् । अन्यद्विप्रसमम् । शूद्राणां प्रमुखे कृषिद्रव्यपरिग्रहमैशान्यामतिथिस्थानम् । अन्यद्वैश्यसमम् ।

सर्वेषां नैर्ऋते अरिष्टभल्लातकनिम्बकल्पितं सूतिगृहम् । ऐशान्येन्द्रादित्ययमाग्नेयनैर्ऋतानामन्यतमस्थापितं गर्भागारं भोगैश्वर्यप्रदं गृहक्षतयमगन्धर्वान्यतमे धनधान्यविवृद्धिदमसुरपुष्पदन्तभल्लाटवारुणे भोगैश्वर्ययुतम् । अधन्यमतिसङ्क्षिप्तमतिविस्तीर्णमर्थघ्नम् । द्विहस्तादि द्विगुणं चछ्रमत्युच्छ्रमतिनीचगोपिघटितपार्श्वं चातिशोभावहम् । वंशानुचरणं वंशानुगतद्वारमुपर्यनुगतद्वारं द्वारास्राविजलमार्गमसमानं निन्दितानुक्तद्रुमकल्पतञ्च नाचरेत् । सूत्रानुगतं प्रतिवंशभोजं स्थूणमुपकल्प्य ब्राह्मं नवपदं परिहृत्य [1]सूत्रानुगतभित्तिकं चतुश्शालं त्रिशालं द्विशालं वा एतल्लक्षणसम्पन्नं गर्भयुतं प्रकल्प्योक्तदेशे देवागारमुपर्यनुगतमुन्नतं रम्यं मनोरमं शुद्धं कृत्वा तस्मिन् पीठानि परिकल्प्य मध्ये देवीभ्यामृषिभ्यां देवेशं सर्वजगद्बीजं विष्णुं सर्वदेवमयं सर्वार्थसाधकं भगवन्तं प्रतिष्ठाप्य तस्योत्तरपार्श्वे ब्रह्माणं सावित्र्यासार्धं तदुत्तरे गुहवक्रतुण्डौ देवस्य दक्षिणे पार्श्वे दुर्गां सरस्वतीमुमामिन्द्रं शशिनं सूर्यञ्च संस्थाप्य त्रिकालं द्विकालमेककालं वा अर्चयेत् । एते च पूजिता यस्य सद्मन्यत्रैव सर्वकल्याणसम्पत् ।

एतेष्वपि द्विजो नित्यं विष्णुं भगवन्तं ब्रह्माणं रविं स्कन्दं सरस्वतीञ्चार्चयेत् । क्षत्रियस्त्वार्यां विघ्नं रविं विष्णुं रुद्रम् । वैश्यः कुबेरं दुर्गां श्रियं सरस्वतीञ्च । शूद्रश्च द्विजं नित्यं विष्णुं भगवन्तं चन्द्रमिन्द्रं विनायकं यत्नतः पूजयेत् ।

---

1. B. तत्रानुगत.

SGDF
Sri Gargeshwari Digital Foundation

भगवदाराधनप्रशंसा

तस्मात् सर्वप्रयत्नेन देवीभ्यांसार्धं विष्णुं भगवन्तं सुवर्णरजितताम्राणामन्यतमेन षडङ्गुल्यदहीनमुपकल्प्य यथाविभवमाराध्य तत्प्रमुखेऽग्निं विधानेन हुत्वैवाश्नीयात् । अन्यथा [1]आत्मघानी भवति । विष्णुपूजाविहीनं यद्वेश्म [2]तत्पक्कणैः समम् । तद्विप्रमुख्यैर्न प्रवेश्यम् । तदधिपेन नाऽसितव्यं न सम्भाष्यम् । तस्माद्देवं प्रतिष्ठाप्याराधयेदिति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
चतुर्वर्णसमाराधनयोग्यदेवतानिर्णयो नाम
एकोनविंशोऽध्यायः ॥

## ॥ अथ विंशोऽध्यायः ॥

विमानार्चनाविधिः

अथ विमानार्चनविधानं व्याख्यास्यामः । विमानमित्यत्र विष्णोः । सा विमानार्चना पुण्या सर्वक्रतुफलप्रदा सार्वजनीना चिरस्थायिनी । विष्णुपूजां विना वेदाः शास्त्राण्याचारसम्पदः शुभदा न भवन्ति, यथा आदित्यं [3]विना लोका न मनोहिताः, यथेन्द्रियाण्यकर्मण्यतां यान्ति ।

अर्चनामहिमा

अतः सर्वप्रयत्नेनेन्दिरेशस्य मन्दिरं सुन्दरं कृत्वा भगवन्तं प्रतिष्ठाप्य परात्परं तल्लोकमवाप्नुयाद्वैष्णवं पदम् । 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इति । विष्णोर्मन्दिरमित्युक्त्वा बालकैर्वालुकाकल्पितमप्यघौघनाशकृत् । किं पुनर्विधिनेष्टकादिकृतम्? । तपोभिः कर्मभिः पुण्यैर्वा अन्यैः नाप्नुयाद्वैष्णवं पदम्, भक्त्यैव निनयेत् नान्यैः ।

---

1. B. आमयावी. 2. क. तत्पित्तृवनैः पक्कणैः 3. म. लोकमितो हीनामि यथेन्द्रियाणि.

SGDF
Sri Gangadhar Digital Foundation

## भक्तिमहिमा

भक्तिरेव परा पुण्या भक्तिरेव शुभप्रदा । तृष्णावैतरणीयानं संवर्तकाग्निवृष्टिरक्षा, कामहालाहलाग्न्यमृतधारा, सङ्कल्पबीजहरा, देहबन्धमोक्षप्रदायिनी, सङ्कल्पकण्टकाविद्धविशल्यकरणी, योगधर्म्याङ्कुरवर्धना, अस्मिककचच्छेदरोपसञ्जीवनी, दुःखत्रयजालभेदिनी, सुखचिन्तामणिप्रदा स्मर्तॄणां भक्तिः । एवं परिज्ञाय अनित्यसुखमस्वस्थं जलबुद्बुदवन्निस्सारं रोगदुःखाकरं पूत्यमेध्यविनिर्मितं आशापाशशतैर्बद्धं तृष्णांशुसमुज्ज्वलं एतद्देहं क्षणात् हित्वा सर्वसिद्धिफलप्रदं सर्वदेवैरभिष्टुतं सर्वयोगिभिरर्चितं सर्ववेदार्थवेद्यं परात् परतरं पुण्यं वैष्णवं पदं प्राप्नुयादिति सञ्चिन्त्य विधिदृष्टविधानेन शक्तितः कर्तुमारभेत ।

## अर्चनाफलश्रुतिः

सङ्कल्पमात्रादेव दशपूर्वान् दशापरान् आत्मानञ्च नयेल्लोकान् शुभान् । देवनिर्मितं देशं परीक्ष्य तान् लोकान् स जयिष्यति । अतः कर्षिते क्षेत्रे ब्रह्मलोकं, ब्रह्मपद्मे कृते विष्णुलोकं, स्थापिते शैषिके विष्णोः सामीप्यं, देवबिम्बे कृते तत्र भूम्यन्निसदृशं पदं, मन्दिरे कल्पितेऽपि सालोक्यं वंशजा यान्ति । तत्रैव विमाने समाप्ते सामीप्यं, देवरूपे कृते बेरे तद्वंशजानाः सारूप्यं, बिम्बे प्रतिष्ठिते सम्यग्विधिना तद्वंशजानानां पत्नीनां कुलजाः मातृवंशजाः भृत्यवंशभवाश्च विष्णुरूपधराः सौम्यास्सर्वे भवन्ति । समाप्ते वैष्णवयागे भोगैश्वर्यं, प्रतिष्ठिते त्यक्त्वा कलेबरं सद्यः शङ्खचक्रधरः श्यामलाङ्गश्चतुर्भुजः श्रीवत्सवक्षाः भूत्वा वैनतेयभुजमारूढः सर्वदेवनमस्कृतः सर्वान् लोकानतीत्यासौ विष्णोः सायुज्यमाप्नुयात । अन्यलोकगताः सर्वे पुनरावर्तिनः, विष्णुलोकगतानां नास्त्यावृत्तिः । विमानमहाबेरकौतुकबिम्बस्थापननवकर्मकर्तारः पञ्चैते विष्णुरूपधरा विष्णुलोके प्रतिष्ठिताः । तेषां चाप्यधिकपुण्यवान् भोगदाता भवति । स्थण्डिले वा जले [1]वाऽप्याशये वा ध्यात्वा देवं [2]नमस्कृत्योक्तमार्गेण सर्वपापविनिर्मुक्तो विष्णुलोकं

1. M. वायव्ये शये. 2. M. नम इत्युक्तिमात्रेण.

SGDF Sri Gurgeshwari Digital Foundation

स गच्छति । किं पुनर्मन्दिरं कृत्वा ! शाश्वतपूजकर्तॄणाम् पुण्या भक्तिः । तस्मादेवं विदित्वा लोकक्षयोद्भवपुण्यपापफलाधारसुखदुःखप्रवर्तनपत्न्यपत्यधनादीनामसारतां परिज्ञाय ऐहिकामुष्मिकविज्ञानहेतुकमनश्वरमप्रमेयमनादिमध्यान्तमार्षं शाब्दं प्रमाणमालम्ब्य तत्सारभूतं सर्वार्थसाधकं भुक्तिमुक्तिफलप्रदमप्रतर्क्यमनवद्यमघौघघ्नं वैखानसमिदं शास्त्रमिति ज्ञात्वा अन्योन्यापाकृतिहेतुदूषितानुमितानयथार्थानल्पश्रुतिविजृम्भितानदृष्टानदृष्टज्ञानप्यविचारपेशलांस्तर्कानपोह्य श्रद्धाभक्ती पुरस्कृत्य वैखानसशास्त्रसिद्धं यथाशक्त्यारभेतेति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
विमानार्चनाप्रशंसनं नाम
विंशोऽध्यायः ॥

---

## ॥ अथ एकविंशोऽध्यायः ॥

### आचार्यलक्षणं, वरणञ्च

एवं मनसि सञ्जाते विष्णोर्विमानं चिकीर्षुः आरुरुक्षुः पदं विष्णोः वैखानसविदः शिष्टान् वेदतत्त्वार्थदर्शिनः सौम्यान् जितेन्द्रियान् शुद्धान् विष्ण्वाकारधरान् आत्मारामान् ज्ञानामृतानन्दिहृदयान् ऊहापोहविधानेन ध्वस्तसंशयमानसान् ध्यानयुक्तान् ब्रह्मरत्नमयान् विप्रान् देववन्नमस्कृत्यानुज्ञाप्याऽहूय "यूयं भक्त्या हरेर्विमानं कर्तुमारभध्वं, युष्मदङ्घ्रिरजोरक्षितोऽहं[1] मत्प्रेरितां पूजामाहृत्यानुमन्यास्मिन् कर्मणि[2]पुण्यर्धिं भावयत" इत्युक्त्वा तैः 'ओ' मित्युक्ते तेष्वेकं गुरुं[3]कृत्वा पूजयित्वा[4]तेषां सर्वेषां शक्तितो दक्षिणां दत्वा विप्रानन्यांश्च सम्भोज्य स्वार्थं त्रिभागं कृत्वा एकं कुटुम्बभरणार्थमाहृत्य द्विभागं दत्वा तेनैव [5]विधानेन विमानमुपकल्प्य तस्य दक्षिणपार्श्वे आचार्यसदनं परिकल्पयेत् । गुरुर्विष्णुपरायणः सद्मन्यावसेत् ।

---

1. B. रज उक्षितः. 2. A. पुण्यदातारो भावयत 3. B. आहूय भोजयित्वा. 4. B. तेषां सर्वेषामित्यत्र व्रतान्सर्वानिति. 5. B. विधानेनेति लुप्यते.

SGDF
Sri Gangadharan Digital Foundation

### भगवदालयस्वाम्यकथनम्

अशक्तश्चेत् स्वयं समार्पयितु राज्ञा आढ्यैर्ग्राममुख्यैः सर्ववर्णिभिः अनुलोमैश्च कारयेत् । तस्मात् पुण्ये शुभर्क्षेऽनुकूले [1]तद्विभवानुरूपमाराधकान् परिचारकान् सङ्गृह्य यथालाभं पायसादिभिर्भोजयित्वा शक्तितो दक्षिणां दत्वा आरभेत । शूद्रं वा अनुलोमं वा [2]विष्णुभक्तियुतं समाहूय ग्रामनगरपत्तनादिषु सरित्समुद्रतीरे पर्वतपार्श्वे [3]ग्राममध्ये वा परीक्ष्य विधिना भूमिं, शुचौ देशे कारयेद्विमानम् ।

### भूमिशोधनप्रकारः

तत्र द्रुमगुल्मलतादीनपोह्य बहुशः कर्षणं कृत्वा शोधयेत् । गोभिराक्रमणात् दाहनात् खननात् पूरणात् वर्षधाराभिः भूमेः शौचमित्येवं यथालाभं क्रमेण कारयेत् ।

### वृत्तिकल्पनप्रकारः

तत्र बहुशः तूष्णीं कर्षयित्वा बीजानुप्त्वा [4]पुरस्तत्क्रममार्गेण भोगैश्वर्यवशादर्चनस्नपनोत्सवबल्यर्थमेतावत् हविषामर्थमेतावत् पुष्पगन्धानुलेपनदीपार्थमेतावत् विष्णुपञ्चदिनपूजार्थमर्चनादक्षिणार्थमेतावत् शुश्रूषाकारिणामेतावत् वादित्रजीविनां भक्तानामतिथीनामेतावत् [5]शिष्याणामध्येतॄणामेतावत् अप्सरसां गायकनर्तकवादकानां विपञ्चीरववादनां मर्दलकानामेतावत् खण्डस्फुटितनिवृत्त्यर्थं नवकर्मक्रियां प्रत्युपकारिणां दानार्थमेतावदिति निश्चित्य, तत् सर्वं पूर्ववत्ताम्रपात्रे अर्पयित्वा सीमाविनिर्णयं कृत्वा आचार्यमर्चकं वा वस्त्राङ्गुलीयककुण्डलादिभिः अलङ्कृत्य तद्धस्ते [6]सोदकं दद्यात् । एतत्सर्वेषामेव भवति । एवं कर्तुमशक्तश्चेत् विमानदेशमात्रं दद्यात् । पश्चात् सर्वसमृद्धिरपि[7] तस्यैव भवेत् ।

---

1. M. तद्विभवानुकूलमर्चकपरिचारकानाहूयाभिपूज्य 2. M. विष्णुभक्तः शूद्रोऽनुलोमो वा यजमानश्चेत् गुरुस्तं समाहूय प्रोक्ष्य वैष्णवं कारयित्वा. 3. M. राष्ट्रमध्ये, 4. B. ततः. 5. A. ग्रन्थव्याख्यातॄणामेतावद्गणिकानामेतावत्. 6. A.सम्पूर्णकलशधारया. 7. घ. कोशे इतः आरभ्य पञ्चविंशतिपत्राणि गलितानि.

SGDF Sri Gargeshwari Digital Foundation

नगरादिषु पश्चिमे प्राङ्मुखं विमानं सङ्कल्प्य अप्सरोभिः प्रकल्पयेत । विविक्तग्रामपुण्यदेशेषु ताभिस्सार्धं न कारयेत ।

### सामृत हारक कल्पनम्

पूर्वमेव सुपर्याप्तं भोगं कृत्वा बालागारे भगवन्तं प्रतिष्ठाप्यारम्भणं यत्तत् सामृतम् । बालागारं विना विमानमात्रमेव स्वार्थैः याच्ञालब्धार्थैश्च कृत्वा बेरादीन् प्रकल्पयेत् तद्धारकमित्येतयोरेकमालम्ब्यऽरभेत । राज्ञां राजसमानां द्विजानाममात्यानां सामृतमेव नान्यथा कार्यम् । यदि कुर्यात् कर्तुः मृत्युर्भवति । अशक्तानां दरिद्राणां भक्तिमात्रसाधनानां हारकम् । तस्मात् पूर्वमेवोपकल्प्य भूमिशुद्धिकर्षणानन्तरं बालागारं प्रकल्प्य खनित्वा आपूर्यारभेतेति विज्ञायते ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
धारादानविधिर्नाम एकविंशोऽध्यायः ॥

---

## ॥ अथ द्वाविंशोऽध्यायः ॥

### कर्षणम्

अथ तद्देशशुद्धिकर्षणलक्षणं व्याख्यास्यामः । कर्षणार्थं युगलाङ्गलादीन् क्रमेणाहरेत् । खदिरासनचम्पकशिरीषभवाः लाङ्गलाः क्रमेण वर्णानाम् । वेणुचम्पकपुन्नागबर्बरजा युगाश्च ।

### युगलाङ्गलादिलक्षणम्

शुभर्क्षे वृक्षमाराध्य भूतबलिमुपकल्प्य सायं [1]"येऽस्मिन् वृक्षे स्थिता यूयं शेषादीन् प्रणमाम्यहं" इत्युक्त्वा प्रदक्षिणं कृत्वा प्रभाते सौम्यहोरायां छेदयित्वा [2]पञ्चतालायामं हलं द्वादशतालायतं क्षिणियं नवतालायतं युगं चतुस्तालायाममृषिमाहृत्य सुवर्णरजतताम्रायसानामन्यतमेन ऋत्विगङ्गुलायामं फालमा-

1. A. अस्मिन् वृक्षे स्थिता यूयं. 2. M. पञ्चयमायामं हलं द्वादशायतं क्षिणियं चतुर्यमायाममृषिमाहृत्य.



SGDF
Sri Gargeshwari Digital Foundation

कल्प्य आकृतिवशात् विष्कम्भनाहादीन् समुपकल्प्य लक्षणयुतानाहृत्य प्राच्यामुदीच्यां वा प्रपायां संस्थाप्य श्वेतरक्तहरितासितान् वर्णक्रमेण, [1]सौम्यवर्णवीर्यबलोपेतौ यवसोदकपुष्टाङ्गौ साण्डौ खुरसंस्पर्शिलाङ्गूलौ समखुरशृङ्गावहीनाङ्गौ बलीवर्दावाहृत्य पूर्वेद्युरेव पूर्वाह्णे गन्धोदकैः संस्नाप्य अलङ्कृत्य गोसूक्तेनाभिमृश्य मृष्टयवसतृणजलादीन् निवेद्य[2]क्ष्य प्रतिसरं बद्ध्वा कर्षकमलङ्कृत्य रात्रावेव निशीथे यक्षराक्षसपिशाचेभ्यो माषापूपसक्तुलाजसमन्वितं बलिं उक्तप्रदेशे परितः क्षिप्त्वा [3]ओषधीभिः शालियवमाषगोधूमपिष्टकेदारोदकमधुपयोभिः अपूपलाजचरुभिः क्रमेण नागेभ्यो बलिं दत्वा प्रभाते स्नात्वा स्नानविधानेन युगलाङ्गलादीन् पञ्चगव्यैः क्षीरेण गन्धोदकेन वा विष्णुगायत्र्या प्रक्षाल्य संस्थाप्य युगे शेषं सीतायां मेदिनीं देवीं फाले ज्येष्ठां ऋषौ वायुं क्षिणिये इन्द्रं रज्जुबन्धे अपांपतिं प्रतोदे यमं [4]पूर्वादपरान्तं प्राङ्मुखो भूत्वा अन्तर्ध्यान्तमभ्यर्च्य तेभ्यो हुत्वा,

### सप्तदशधान्यानि

शालि व्रीहि यव मुद्ग माष प्रियङ्गु गोधूम चणक तिल तिल्व मसूरातसी कुलुत्थ सर्षप श्यामाक षष्टिक निष्पावा इति ये सप्तदशधान्या भवन्ति एनान् संशोध्य संशुद्धान् प्रोक्ष्य सोममभ्यर्च्य बलिं दद्यात्। बलीवर्दौ रूप्यशृङ्गखुराववस्थाप्य अभिमृश्य अभ्यर्च्य क्षीरेण खुरान् प्रक्षाल्य पायसतण्डुलान् दत्वा प्रोक्षणैः प्रोक्ष्य प्राच्यां देवं समभ्यर्च्य प्रमुखे वीशं दक्षिणे चक्रं वामे हरं संस्थाप्य सप्तविंशतिविग्रहैरभ्यर्च्य 'सर्वजित्सर्वशत्रुघ्न' इत्यनपायिनं 'वैनतेयो महावीर्य' इति वीशं 'आयातु भगवान् दिव्य' इत्यमितमावाह्याभ्यर्च्य पुण्याहं स्वस्तिमृद्धिञ्च वाचयित्वा कर्षकमलङ्कृत्य रूपयौवनसम्पन्नां कन्यामेकां वर्णजामलङ्कृत्य पञ्चदीपकरां हंसगामिनीं पुरस्कृत्य तत्तादचैराघोष्य अष्टमङ्गल धूप दीप ध्वज पिञ्छातपत्र चामरादिभिरग्रे अनपायिनं मध्ये वीशं पृष्ठे अमितं रथ गज तुरगशिबिकानामन्यतमैः सन्नयेत्। कनिकदादीन् जप्त्वा पृष्ठतस्तेषामृत्विजः शनैः शकुनान्युपलक्ष्य गच्छेयुः।

---

1. M. सौम्यौ. 2. A. पोषयित्वा. 3. B. ओषधिशालिमाषयवगोधूमैः
4. M. पूर्वान्तमपरान्तम्.

SGDF
Sri Gargeshwari Digital Foundation

## सीमानिर्णयप्रकारः

तत्र गत्वा चक्रवीशशैषिकान् सन्न्यस्य वारुणान्तं सीमानिर्णयं कृत्वा तत्र बलीवर्दावभिमृश्य देवं नमस्कृत्य आचार्यः कर्षकं "अक्षैर्मा दीव्य" इति त्रिः प्रोक्षयेत्। कर्षकः तमभिवन्द्य युगमादाय "त्वं वृषभ" इति दक्षिणं "सौरभेये"ति वामं त्रिवृत्कुशरज्ज्वा बलीवर्दं संयोज्य बद्ध्वा "युगं युगश्रृङ्ग" मिति लाङ्गलं रज्ज्वा आयोज्य "ऋषिं गृह्णामी" त्यृषिमाहृत्य "विष्णुर्मा रक्ष" त्वित्यात्मरक्षां कृत्वा "येऽस्मिन् देश" इत्यानम्य "हलकृष्टा" इति तामिलां प्रागन्तं कर्षयित्वा तस्मादुत्तरतो दण्डान्तरं निवर्त्य प्रतीच्यन्तमेवं क्रमेण ऋज्वविच्छिन्नपदं दक्षिणावर्तं श्लिष्टपदं प्रागन्तमुत्तरान्तं कर्षयेत्। आचार्यः तस्यानुपदं पञ्चगव्यैः प्रोक्ष्य शुभाशुभं परीक्ष्य "गच्छध्वमार्या" इति विसृजेत्।

### तत्र निमित्तपरीक्षणम्

वामावर्ते छिन्नपदे गोमूत्रे गौरे चाशुभं रक्तकृष्णकपोतगलवर्णे कर्तुर्मृत्युर्भवति। तुष भस्म कपालास्थि केश रोम नख कण्टकादिदर्शने महद्दुःखम्, श्वेतमृत्तिकादर्शने स्वर्ण रजत ताम्र मुक्ता पद्मराग वज्र वैडूर्य प्रवाल स्फटिकादिदर्शने महांश्च वृद्धिः कर्तुः शुभं, इति शुभाशुभं ज्ञात्वा अरिष्टानां शान्तिं कारयेत्। एवं प्रागुत्तरान्तं निरन्तरं कर्षयित्वा प्राणस्थाने बलीवर्दौ संस्थाप्य पादान् प्रक्षाल्य विमुच्य तण्डुलान् गुडमिश्रान् तेभ्यो दत्वा प्रदक्षिणीकृत्य "देवस्य त्वे" त्यभिवन्द्य विसृज्य युगहलादीन् वाहनस्थाने संस्थाप्य प्रोक्ष्य बीजानादाय "इमे बीजा" इत्यभिमृश्य "समुद्रवती, श्रृङ्गे श्रृङ्ग" इत्युर्वीं नम्य "देवि त्वयी" त्युप्त्वा सर्वान् प्रागन्तमुत्तरान्तं वा प्रदक्षिणं "दुहतां दिव" मित्यद्भिः प्रोक्ष्य रक्षां सम्यगाधाय अत्वरो गृहं गत्वा सम्पूज्य हिरण्यपशुभूम्यादीनाचार्याय दक्षिणां दद्यात्।

### ब्रह्मपद्मविधिः

एवं कृत्वा कार्तिक्यां मार्गशीर्षे मासे ब्रह्मपद्मविधिं कारयेत्। तत्पूर्वं चतुर्थेऽहन्यपराह्णे अमितं पूर्ववत् सम्पूज्य दक्षिणे अनपायिवैनतेयौ सम्पूज्य

SGDF
Sri Gargeshwari Digital Foundation

'धारा सा' येत्युक्त्वा प्रणम्य वसुधामनुमान्य 'दैविके त्वि' त्यमितमानम्य अनुमान्य अनुज्ञाप्य गृहं गत्वा प्रभाते स्नात्वा विष्वक्सेनमभ्यर्च्य आनम्य 'सस्या इम' इति सस्यं समभिमन्त्र्य "शुद्धा इमे" इत्यादीन् जप्त्वा सगणान् पशूनाहूय गोसावित्रीं जप्त्वा तेभ्यो निवेदयेत् । 'इमां सिञ्चामी" त्यद्भिः प्रोक्ष्य गृहं गत्वा प्रभाते सायाह्ने वा तिलतिल्वचूर्णैः अपूपौदनैः 'भुञ्जन्तु देवा' इति बलिं सर्वत्र दत्वा [1] देवायार्ध्यं निवेद्यानुज्ञाप्य,

## पदविभागः, पददेवताः

पूर्ववदेकाशीतिपदेषु देवताः सम्पूज्य गर्भालयं समुद्दिश्य पञ्चसूत्राणि प्रागुत्तराग्राणि अर्पयित्वा नाग भूत यक्ष दुर्गा घोटमुखी धात्री वपुषी राक्षस जय कृष्ण मरण्ड शिव प्राण कवि शक्र पुरुहूत ज्येष्ठा विद्या यशो भद्रा वेदभृत् तापस [2] सञ्जुषाऽमित पाञ्चभौतिकाः प्राच्यां [3] गृहपञ्चसूत्रस्था देवता भवन्ति । [4] पश्चिमादि शिव विश्व मित्रात्रयः बिम्बपृष्ठतः प्रादक्षिण्यक्रमेण पीठान्ते पूजयितव्या भवन्ति । कुस्तुण्डाय गर्भाय वरुणाय धनदाय कालायेति दक्षिणे दहनाय विघण्डाय पवनाय [5] निमुदकाय गोलकायेति पश्चिमे महिषघ्नाय [6] वेत्राय साराय कपोताय तुलयवादिन इत्युत्तरे फुल्लाय फुल्लरूपाय विघ्नाय विघ्नकारिणे सर्ववाहनायेति प्राच्यां किष्किन्धाय तिर्थाय मोहनाय दाण्डने यूथकाय अन्तकाय स्पर्धघ्नाय विघ्नाय सुखदाय हितदायेति अङ्गणमध्यतो मध्येऽर्चयेत् । एते [7] नवपञ्चाशदाख्या देवाः । पिशाचेभ्यो भूतेभ्यो बलिं दत्वा 'योजः पूरा वीरे' ति सर्वे श्रावयेयुः । 'सर्वं व्यपै' त्विति मन्त्रेण जलमास्राव्य "पूर्वं स्थिता" इति पुनराश्रावयेत् ।

## पददेवताबलिः

अन्न लाज तिलचूर्ण तण्डुल भक्ष्य सम्पृक्तं 'चरमं चराम' इति प्रभूतमवकीर्य 'अस्तु स्वस्ती' ति जलैरुत्प्लावनं करोति । एवं कृत्वा अमितं पुरस्कृत्य गृहं गत्वा 'सर्वेश्वरश्चे' ति 'सर्वा वरुण' मित्युक्त्वोद्धृत्याद्भिः

1. M. देवान् निवेद्य. 2. M. प्र सिन्धुषा. 3. M. गृहपञ्चसन्धिस्थाः. 4. क. पूर्वदक्षिणपश्चिमोत्तरेषु. 5. A. मुदकाय. 6. B. वेत्रसाराय. 7. क. अष्टशताख्याः

SGDF
Sri Gurgeshwari Digital Foundation

सम्पूर्य कुम्भं 'वरुणं पाशभृतं वीरमुदकप' मित्यभ्यर्च्य पुण्याहं वाचयित्वा पुनः प्रभाते यज्ञवाटं प्रविश्य वैखानससूत्रोक्तविधिना भूमियज्ञं हुत्वा पूर्वोक्त-देवता हुत्वा वास्तुपुरुषमभ्यर्च्य अग्रतो भामिनीं कृत्वा [1]'इमां सिञ्चामी' ति जलमास्राव्य अनुमृज्य 'त्वां खना' मीति खनित्वा 'पांसून् प्रेष्यामी' त्युक्त्वा सर्वं तल्लक्षणं ज्ञात्वा 'यस्सखे' ति विष्वक्सेनं सन्नम्य 'त्वं सर्वेमि' त्यनुमान्य 'सुक्रमा' इति कुम्भमभिमन्त्र्य 'पातु मां वरुण' इति शेवधिं पूरयित्वा 'आयातु भगवान ब्रह्मे' त्येकं कुशेशयं क्षिप्त्वा 'इदं ब्रह्मणा पूर्ण' मिति शुभाशुभं ज्ञात्वा आरभेत ।

## निमित्तपरीक्षणम्

क्षिप्तेऽब्जे वामावर्ते याम्यगे कुटिले स्फुटिते स्तब्धे विदिग्गते वा अधरोत्तरे चाधोमुखे च आस्थापिते तोये, पांसुच्छन्ने सबुद्बुदे फेने क्षिप्रनाशे सशब्दे चानथान्तरं कर्मकर्तुः [2]मृत्युर्भवति । तस्मिन्नहनि विद्युत् स्तनितोल्का-निपात ब्रह्मदण्ड ध्वज धूमकेतु प्रतिसूर्येन्द्रचापादिदर्शने कुम्भभङ्गे प्रतिमादि-विरूपणे च महदनर्थसूचकं भवति । अत्र शोभनं, तत्काले दिग्गतः सौम्यो, विदिग्गतः पापकृदैशान्यगो नीलगः शुभदो भ्रामकश्चण्डकश्चण्डो भवति । तत्कालस्थापितो दीर्घदीपश्चञ्चलो वामावर्तो विदिक्शिखः सधूमः सर्वदोषकृत् । सौम्योऽचञ्चलश्चारुदर्शनो दीप्तोर्ध्वशिखश्च आयुस्सर्वसम्पत्समृद्धिदश्च । एवं [3]पञ्चभूतगतान् शुभाशुभान् परिज्ञाय अशुभदर्शने शान्तिं हुत्वा शुभावहश्चेत् समारभेतेति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे

कर्षणादिविधिर्नाम

द्वाविंशोऽध्यायः ॥

---

1. A. इमां सीमां. 2. M. मृत्युः कर्तुर्भवति. 3. M. पञ्चभूतान्.

SGDF
Sri Gargeshwari Digital Foundation

## ॥ अथ त्रयोविंशोऽध्यायः ॥

### तरुणालयविधिः

अथातस्तरुणालयविधिं व्याख्यास्यामः । मूलालयादीशान्ये नीले सौम्ये वा बीजावापादनन्तरं तरुणालयं कुर्यात् मृण्मयं दारुमयं वा । नेष्टमिष्टकाभिः शिलाभिरिति । पञ्चमूर्तिप्रतिष्ठा चेत् पञ्चगर्भगृहाण्युपकल्प्य ऊर्ध्वतलं मानुषे [1]स्थापयेत् । यत्र दिने [2]कर्तुमुद्योगः तद्दिनात् नवमे सप्तमे पञ्चमे त्र्यहे वा अङ्कुरार्पणं भवति ।

### आचार्यवरणम्, तत्र प्रयोगः

श्वः कर्तास्मीति सञ्चिन्त्य पत्न्यपत्ययुतान् शुद्धान् मन्त्रकल्पविचक्षणान् श्रीवैखानसविदः आहूय अलङ्कृत्य अनुज्ञाप्य एतैरेव कारयेत् । [3]सर्वे ते च सुलुप्तश्मश्रुकेशाः सुवस्त्राः सुशुद्धदन्तनखा आपराह्णमुपवासयुता भवेयुः । तद्रात्रौ देवायतनोत्तरे तथैव भूमियज्ञं कृत्वा प्रोक्षणैः प्रोक्ष्य पुण्याहं स्वस्तिमृद्धिञ्च वाचयित्वा शक्तितो दक्षिणां ददाति । महाप्रतिष्ठावत् अक्ष्युन्मेषादि कृत्वा बिम्बमधिवास्य सप्तभिः कलशैर्देवं संस्नाप्य प्लोतेन विशोध्य विमानाद्दक्षिणे अब्जाग्निकुण्डं [4]एकोनविंशत्यङ्गुलयुतं कृत्वा वैखानससूत्रोक्तविधिना आघारं हुत्वा तस्मात् दक्षिणे शयनस्थानं (कल्पयित्वा) ग्रामं प्रदक्षिणीकृत्य सुकृते स्थण्डिले व्रीहिभिः दर्भास्तरणैः पञ्चशयनैः वासोभिः पञ्चभिरहतैः शुद्धैर्वा आस्तीर्य 'यद्वैष्णव' मिति प्राक्छिरः शाययीत । परितः प्रागाद्युत्तरान्तमाहवनीयान्वाहार्य गार्हपत्यावसथ्यान् यथाक्रमेण मध्येसभ्यञ्च कृत्वा पूर्ववदग्निं साधयित्वा आहवनीये सौरं सौम्यमाग्नेयमैन्द्रं अन्वाहार्ये याम्यं नैर्ऋतं दुर्गासूक्तं गार्हपत्ये वारुणमनिलदैवत्यं आवसथ्ये कौबेरमीशदैवत्यं सभ्ये ब्राह्मं प्राजापत्यं गारुडमार्षं दौवारिकं वैष्णवयुतं आज्येन हुत्वा

---

1. A. अत्र स्थले स्थापयेत. 2. M. उद्युक्तः 3. M. ते सुवस्त्राः इत्येव पठः. 4. B. एकोनत्रिंशत्यङ्गुलियुतं.

SGDF
Sri Gargeshwari Digital Foundation

अग्निं विसर्जयित्वा द्वात्रिंशत्प्रस्थमम्पूर्णं खण्डस्फुटितकालवर्जितं पक्वबिम्बफलाकारं कुम्भमादाय 'स्वस्ति दा' वीति तन्तुना यवान्तरमङ्गुल्यन्तरं वा परिवेष्ट्य 'धारा' स्विति नादेयं जलमुत्पूय कुशाक्षतैः सह वारिभिः 'विश्वतश्चक्षु' रिति कुम्भमापूर्य 'अतो देवा' दीन् जप्त्वा सौवर्णान् अष्टमङ्गलवर्णचिह्नान् रत्नानि 'इयं जागृति' रिति क्षिप्त्वा [1]अभिमृश्य [2]अश्वत्थाशोकपल्लवैर्युगं[3]दुकूलयुग्मेनाहतेन युग्मवस्त्रेण वा आकण्ठमावेष्ट्य अलङ्कृत्य प्राणायामं कृत्वा धारणामास्थाय अपांपत्यास्रावितपीयूषाकृतिमैन्द्रं परममास्थायान्तर्गतजगत्त्रयप्रत्यगात्मविभासितमाहेन्द्रमध्यगं वारुणमण्डलं ध्यात्वा वारिबीजावेष्टितमनिरुद्धं निधाय कुम्भमावेश्याद्यमष्टशतमावर्त्य 'विष्णुस्त्वां रक्ष' त्वित्यभिमृश्य अखिलजगद्बीजमिति तं [4]प्रणम्य अब्जहोमं हुत्वा हौत्रं प्रशंस्य आवाहनं करोति । आवाहनक्रमेण जुष्टाकारस्वाहाकारौ कृत्वा [5] पूर्ववत् दिक्पालामितवीशादीनां पृथक् कुम्भं पूजयेदिति [6] ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे तरुणालयविधिर्नाम त्रयोविंशोऽध्यायः ॥

---

## ॥ अथ चतुर्विंशोऽध्यायः ॥

### तरुणालयप्रतिष्ठा

प्रभाते स्नात्वा मृष्टसिक्तोपलेपनाद्यैः संशोध्य शान्तिं हुत्वा शयनस्थं देवं सम्प्रणम्य 'भुवर्भुवर्भू' रिति बिम्बस्य मूर्धनाभिपादेषु क्रमेण न्यस्य प्रणवमुच्चार्य बोधयित्वा शयनादुत्थाप्य आनम्य अलङ्कृत्य कुम्भयुतं देवमादाय कनिक-

---

1. B. अमृतोऽभिमृश्य. 2. M. अश्वत्थाशोकपल्लवैःयुग्मदुकूलपट्टेनाहतेन युग्मवस्त्रेण वा. B. दुकूलवर्गेण. 3. M. अपांपत्यास्राविल पीयूषभूताकृतिमैन्द्रं परमास्थायान्तर्गतजगत्त्रय प्रत्यगात्मविभासितमाहेन्द्रमध्यगं, B. पीयूषाकृतिं मैत्रं. 4. M. प्रणमेत् अग्निंपरिस्तीर्याज्येन पारमात्मिकहोमानन्तरं हौत्रं प्रशंस्य. 5. M. कृत्वा अब्जादि विना सभ्ये वा चतुरश्रामयश्च कृत्वा अन्वाहार्ये हौत्रंप्रशंस्यावाहनं करोति. 6. M. भृगुः.

SGDF Sri Gargeshwari Digital Foundation

द्रादीन् जपन् गच्छेत् । देवऽवासं गत्वा ब्राह्मे मुहूर्ते सम्प्राप्ते 'प्रतद्विष्णुः स्तव त' इति देवेशं स्थापयति ।

ब्रह्मणः सकलनिष्कलस्वभावः

देवस्य दक्षिणे यमान्तरे कुम्भं संस्थाप्य यथाऽयसि महासारं मुकुले गन्धं क्षीरे सर्पिः मधुन्युदकं (?) तिले तैलमिव सर्वव्यापिनो व्योमाभस्य ब्रह्माद्यैरप्यनभिलक्ष्यस्य विष्णोः आवाहनं पूजनमभिमुखीकरणमुद्रासनं स्वेच्छानुमोदनमिति ब्रह्मवादिनो वदन्ति । 'आणोरणीयान महतो महीयाना' त्मेति 'आत्मैवेदं सर्वं' 'नेह नानाऽस्ति किञ्च' नेति श्रुतयो गृणन्ति । यथा आदर्शसहस्रेषु दृश्यते पुरुषोत्तमः अम्भस्यर्कबिम्बानि गिरिषु प्रतिशब्दा इव तस्य नानात्वम् । यथाऽन्धकारे रज्जुः सर्पदण्डोदकधारा अवभासन्ते तथा विद्याद्धरिम् । तस्मादात्मस्वभावः प्रपञ्चो न प्रपञ्चस्वभाव आत्मा । समुद्रस्वभावस्तरङ्गो न तरङ्गस्वभावः समुद्र इति यावत् । यथाह्यरण्यामनलः सर्वगेऽप्येकदेशमथनात् उज्ज्वलति तथा सर्वगतस्यात्माविर्भावः । यथा सर्वगतो वायुः व्यजनेन प्रकाशते, तस्मात् ध्यानमथनेन मथनात् हृद्याविर्भवति । पश्चादावाहनध्यानजपहोमाद्यैः भक्तियुक्तैः तृप्तो यथेष्टं ददाति । यथाग्नेर्विस्फुलिङ्गाः तथा आत्मनो ब्रह्मेशेन्द्रादयः । तत (ब्रह्म) अचलं चलमिति तत्त्वविदो वदन्ति । चलेषु पूजितं सर्वमचलं गच्छति । तस्मादात्मवित् ज्ञात्वैव देवीभ्यामृषिभ्यां दिक्पालैः देवमावाह्याभ्यर्च्य पुण्याहं वाचयेत । ततो निष्काधिकं पृथक् पृथक् सुवर्णं [1]दत्वा ब्राह्मणान् भोजयेत् । ततःप्रभृति नित्यं पाद्यादिभिः पञ्चविंशतिभेदैरर्चयेत । इदं पुनः नापुत्राय नाशिष्याय दद्यात् । एवं कर्तुमशक्तश्चेद्ब्रह्मपद्मे कृते तत्रैव अमितं संस्थाप्य सप्तविंशतिभेदैः [2]सान्नबलियुतमेवं प्रतिष्ठान्तमभ्यर्च्य दैविकं बिम्बमादाय विमाने स्थापयेदिति कश्यपः ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
तरुणालयबिम्बस्थापनविधिर्नाम चतुर्विंशोऽध्यायः ॥

---

1. क. ऋत्विग्भ्यो दत्वा. 2. M. सायमन्नबलिसंयुक्तं.

SGDF
Sri Gargeshwari Digital Foundation

## ॥ अथ पञ्चविंशोऽध्यायः ॥

### द्वितीय तरुणालयविधिः

अथ ऊर्ध्वं तरुणालयविधिं व्याख्यास्यामः । स्वेदरुधिर ह्युक्तदोषदर्शने ग्रामस्य यजमानस्य वा अनुकूलर्क्षे क्षिप्रं तरुणालयं कारयेत् । अन्यथा महत्तरो दोषो भवति । तस्मादुक्तनिष्कृतिं कृत्वा आरभेत । ऐन्द्रे महभयदमाग्नेय्यां धनलाभदं याम्ये वृद्धिप्रदं नैर्ऋते कर्मसिद्धिदं वारुणे सुखदं वायव्ये कर्मनाशकृत् सौम्ये सर्वनाशप्रदमैशान्ये दुःखदम् । तस्मात् यमपावकनीलतरुणानां दिक्षु मण्डपं प्रपां वा कूटं वा विमानसमं पादहीनमर्धहीनं कपोततुल्यं वा कारयेत् । शून्यागारे मन्दिरैकदेशे वा न कारयेत् । यावत्पदं तावत् यथा मूलस्य तथा [1] द्वारम् । अस्य परिवाराणां तथा परितः पीठान्युपकल्प्य आलये ब्रह्मभागे पीठं प्रकल्प्य कुड्योभयपार्श्वस्थलान्यादर्शवत् सममुपकल्प्य अनुलिप्य अङ्कुरानर्पयित्वा प्रतिष्ठोक्तदिनात् पूर्वरात्रौ भूमियज्ञं पर्यग्निं पुण्याहञ्च कृत्वा पञ्चाग्नौ परिस्तीर्य पूर्ववत् हुत्वा सभ्ये तद्देवमन्त्रैः देवीभ्यामृषिभ्यां द्वारपालेभ्यो विमानपालेभ्यो लोकपालेभ्यः तत्तन्मूर्तिभिः जुहुयात् ।

पूर्वयामे गते पश्चात् पूर्ववत् कुम्भमाराध्य आघोष्य देवस्य यमान्तरे न्यस्य 'भगवतो बलेने'ति प्रणम्य अनुज्ञाप्य सहस्रशीर्षादीन् जप्त्वा नृत्तगेयवाद्यादिभिः निशां निनयेत् । प्रतिसरं विमोचयित्वा प्रभाते स्नात्वा पञ्चभिः प्रकारैः देवेशमानस्य विष्णुसूक्तं जप्त्वा इमं मन्त्रं जपेत् ।

"अनर्हमेतत्त्वद्विम्बं जीर्णं तूर्णं व्यपोह्य च ।
देवदेव जगन्नाथ [2] स्थीयतामत्र वै प्रभो ॥

यावद्द्वयं नवं कृत्वा प्रतिष्ठां कारयामहे ।
प्रसादं कुरु [3] तावत्त्वमस्मिन् बेरे जगत्पते ॥"

---

1. M. द्वारमध्यपरिवाराणां. (?) 2. A. B. लीयतां. 3. A. B. नः तावत्.



SGDF Sri Gurgeshwari Digital Foundation

इत्युक्त्वा अनुज्ञाप्य त्र्यब्दमब्दद्वयमब्दं षण्मासं वा कालावधिं निवेद्य पश्चाद्धातु-रत्नबीजांस्तत्तन्मन्त्रेणोद्धृत्य स्मृत्वा ध्रुवस्थां शक्तिं कुम्भे 'त्वायातु भगवा' नित्यावाह्य ध्वजपिञ्छातपत्रचामरतालवृन्तैः [1]धूपदीपैश्च [2]पताकादिभिरलङ्कृत्य ओङ्कारजयशब्दैः ततश्चैराघोष्य कनिक्रदादीन् जप्त्वा कुम्भयुनमर्चामादाय गच्छेत् । देवागारं प्रदक्षिणीकृत्य आलयं प्रविश्य 'भूरसि भू' रित्यादिना कुम्भं प्रतिष्ठाप्य अर्चापीठे तदर्चां[3] प्रतिष्ठाप्य कुम्भस्थां शक्तिं समानीय 'आयातु भगवा' नित्यावाहयेत् । अक्षरन्यासं कृत्वा आवाह्य पुण्याहं वाचयित्वा अभ्यर्च्य पायसकृसरयावकादीन् निवेद्यार्घ्यमाचमनं दत्वा एलालवङ्गकर्पूरादिमुखवासं निवेद्य नित्यमावाहनविसर्गौ[4] विना पाद्यादि[5] भोगैरर्चयेत् । पश्चात् सर्वगन्धयुतं नादेयं जलं शुद्धपात्रे सङ्गृह्य 'नमो वरुणः शुद्ध' इति ध्रुवस्य पादौ प्रक्षाल्य पश्चात् उक्तलक्षणकर्मन्त्रेन शिल्पिना नवीकरणं कारयेदिति कश्यपः ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे

[6]द्वितीयतरुणालयविधिर्नाम

पञ्चविंशोऽध्यायः ॥

---

## ॥ अथ षड्विंशोऽध्यायः ॥

### वास्तुसवनम्, द्वौ वास्तुपुरुषौ

अथ पूर्वसंस्कारम् । वास्तुपुरुषं ज्ञात्वा मर्माणि परिहृत्य अन्यत्र पूर्वं खनित्वा शल्यान्यपोह्यारभेत । द्वौ वास्तुपुरुषावचलात्मकः चलात्मकश्चेति । अचलस्तत्र भूमिष्ठः प्राक्छिराः [7]भूमिमग्नाङ्गोऽधोमुखः । तस्योपरि परः सवनत्रयार्धरात्रेषु उदक्प्राग्याम्यापरशिरा भूत्वोत्तानाननो[8] नित्यं चरति । अथ वा मध्याह्ने प्राच्यां सायाह्ने दक्षिणतो निश्यर्धे पश्चिमे प्रातरुत्तरतश्शिरस्तस्येति

---

1. M. दीपैश्च. 2. A. ध्वजपताकादिभिः 3. झ. अर्चा. 4. झ. कोशे हित्वा. 5. ग. भेदैः. 6. A. पङ्क्तिरियं लुप्यते. 7. झ. धूमाङ्गः. 8. A. उत्तानतः.

SGDF Sri Ganeshwara Digital Foundation

केचित् । तस्मात् तदूरुबाहुहृदयप्रदेशेषु गर्भालयं अन्यत्र सन्धिस्थानानि सर्वाणि अन्यदेवा[1]धिष्ठितदेशं कुर्यात् । सन्धिस्थानानि सर्वाणि गृहंप्रति वर्जयेत् । मेढ्रनाभिसन्धीन् परिहृत्योर्ध्वोदरे प्रासादं कारयेत् । कूर्परजङ्घाहस्तनखकर्णाक्षिमर्माणि सर्वाणि परिहृत्य यज्ञे प्रधानाग्निं स्थापयेत् । एवं ज्ञात्वोद्दिश्य [2]सर्वसमं चतुरश्रमाहरेत् । अध्यर्धायामं भौतिकं [3]दीर्घायामं राक्षसं किञ्चिद्दीर्घं पैशाचमिति । अतः सर्वसमं चतुरश्रं मण्डलं वा दण्डेन समुपकल्प्य खानयेत् ।

## तत्र निमित्तपरीक्षणम्

खननात्पूर्वं [4]भामिनीं कर्तारं वाऽन्यं तदैशान्यां स्थितं "वदस्वे" त्युक्त्वा तदुक्तेनाक्षरेणोपलक्षयेत् । तत्र अकचटतपयशवर्गैः रक्तकृष्णश्वेत[5]नीलपीतश्यामासितकपिलवर्णाः लोहाङ्गारभसितेष्टकाद्रुमसञ्चयोपल[6]कपालरत्नानि तत्रेति ज्ञात्वा स्पृष्टाङ्गैरपि लक्षयेत् । शिरःकण्डूयने पुरुषार्धप्रमाणेऽस्थिशल्यं मुखे हस्तद्वये दारुशल्यं ग्रीवायां हस्तत्रये [7]कालश्रृङ्खलमूर्वोर्हस्तद्वये सार्धे [8]पश्वाद्यवयवं हस्तयोर्जानुमात्रात् [9]खट्वापादं बाह्वोर्हस्तत्रये शलकां दक्षिणहस्ते वितस्तिमात्रे हस्त्यवयवं [10]कर्णिकार्धादधः पादे अष्टाङ्गुले चर्मजमङ्गुष्ठे खेटकावयवं [11]सीसं गैरिकं लोहपात्रं कनिष्ठिकायामष्टाङ्गुले [12]कांस्यमन्येषु हिङ्गुलिकमिति । [13]यदङ्गं स्पृष्टं तस्याङ्गे वास्तुपुरुषस्य सशल्यम् (?) । [14]विधूनन सूचन वीक्षणाद्यसकृद्यत्र तत्रास्थिशल्यमिति ज्ञात्वा जलदर्शनात् तत्सर्वं खानयेत् ।

## अशुभनिमित्तानि

खननकाले कृमिकीटपतङ्गसङ्कुले सर्पमूषिकवृश्चिकादिदर्शने खनकाङ्गपतने [15]भ्रमणे खननभेदे त्सरुभङ्गे चाद्भुतदर्शने भयाऽतङ्कमरणादयो भवन्ति ।

---

1. B. अधिष्ठितं 2. ग. सर्वमयं चान्युग्रं. 3. ज. द्वितीया यामं 4. A. भामिनीमिति न दृश्यते. 5. A. नीलचित्रश्याम. 6. B. कपालरत्नसुवर्णानि. 7. B. कालं. 8. झ. पश्वरबल्लत्रम्. 9. खादन्यत्र खट्वाङ्गपाद. 10. ग. कण्टकार्धाधः. 11. A. सममिन्द्रे. क. अङ्गसंस्पर्शे. च असंमिश्र. 12. A. अन्येष्वङ्गुलिकमिति. ख. षडंगुलिकमिति. 13. च. यदङ्गस्पृष्टस्याङ्गे. 14. A. विज्ञानन. च. विसूचन. 15. क. भ्रामणेषु तत्सरुभेदे.

SGDF
Sri Gargeshwari Digital Foundation

तत्र महाशान्तिञ्च हुत्वा शुभर्क्षे शुभहोरायां देवदेवमनुस्मृत्य खनित्वा तत्र सीमान्तं सर्वमपोह्यान्यत्र शर्करासिकतासम्मश्रैः गालिन्दं प्रमृजैः (?) शिलाभिरिष्टकाभिः सोदकमवटे मृत्तिकां पूरयित्वा क्षुण्णं घनं पूर्ववदेकचितं कृत्वा तूष्णीं निधाय [1]दारूपलेष्टका विधिना आहरेदिति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
वास्तुपुरुषरूपनिरूपणं नाम षड्विंशोऽध्यायः ॥

---

## ॥ अथ सप्तविंशोऽध्यायः ॥

—: ❀ :—

### दारुसंग्रहणम्, शस्त्रदेवाः

अथ दारुसङ्ग्रहणम् । श्वः कर्ताऽस्मीत्याचार्यं समनुज्ञाप्य [2]शिल्पिनञ्चैव वीवधकादीनाहूय परशुलवतक्ष[3]नीवकुठारटङ्कादीनाहृत्य संशोध्य शुद्धे देशे वस्त्रमाल्यानुलेपनैरलङ्कृत्य परशौ रुद्रं लवने भूतान् तक्षे महेन्द्रं नीवे यमं कुठारटङ्कयोः मृत्युञ्चाभ्यर्च्य आचार्यादीन् भोजयेत् । ऋत्विग्भिस्सह शकुनान्युपलक्ष्य वनं प्रविश्य देवायतनमार्गश्मशाननदीतीरोद्यानजान् सीमगान् [4]चैत्यगान् बालवृद्धातुर वृक(?)पक्षिसरीसृपयक्ष[5]राक्षसपिशाचगन्धर्वोरगाश्रितान् वल्लीनद्धान् कन्यालालितान् हस्तिवाय्वशनिशस्त्रभग्नदग्धान् स्वयंशुष्कान् अन्त्यजाश्रितान् ग्रामाभ्यन्तरजान् एवमादीन् हित्वा बहुपत्रशाखापुष्पफलाढ्यान् ऋज्वव्रणान् अकोटरान् वृक्षान् दृढतरमूलानालोक्य तत्रातिदृढतरं उक्तलक्षणसम्पन्नमेकमादाय' ।

#### तत्र प्रयोगः

तत्पार्श्वे मातृविघ्न[6]वीराणां देशमुपकल्प्य शस्त्रदेवान् पृथक् पृथक् सम्पूज्य [7]वृक्षस्य चतुर्दिक्षु[8]वनस्पतिभ्यः कुमारीभ्यो वृक्षराजेभ्यः सर्वकाम-

---

1. क. सम्मिश्रमृगालेष्टका विधिनाहरत. 2. क. शिल्पिनमाहूयेत्येव. 3. च. निव. 4. च. चैत्यदकान्. 5. च. राक्षसी. 6. क. सोमवीराणां. 7. B. वृक्षस्य चतुर्दिक्ष्विति नास्ति. 8. B. वृक्षेन्द्रायेत्यादिकं इत आरभ्य बल्लीभ्य इत्यन्तं ग कोशे न दृश्यते.

SGDF Sri Gargeshwari Digital Foundation

प्रदेभ्यो नम ' इति बलिं दत्वा ' अग्नये वनराजाय सोमाय यमाय स्थूललक्षाय व्यधाय मृगरूपिणे वनस्पतिभ्यः कुमारीभ्यो वल्लीभ्यः कुसुमाय शलाटवे बृहत्वचे पुण्यायामिततेजसे सूर्याय [1] सूर्यरूपाय शृङ्गिणे भूतरूपिणे नागहस्ताय दिव्याय [2] त्रिहस्ताय विघ्नाय विघ्नरूपाय विनायकाय प्रसारिणे मुरुण्डाय न्यर्णाय नागेभ्यो भूतराजेभ्यश्चारणेभ्यो दिवाचरेभ्यो नक्तञ्चरेभ्यः [3] सन्धिभ्यः सन्ध्याचरेभ्योऽप्सरोभ्यो[4] यक्षेभ्यः कुमारीभ्यः सन्ध्याचरीभ्यः आसुरीभ्यो राक्षसीभ्यः पिशाचीभ्यो [5] वन्याय स्थलचारिणे वृक्षदेवेभ्यः स्थानदेवेभ्यो [6] विद्याधरेभ्यो रूपिभ्यो मिथुनेभ्यः सुखेभ्यः स्वाहे ' ति व्याहृत्यन्तं हुत्वा पर्यग्निं कृत्वा [7] सर्वेश्वरं जगन्नाथं [8] चामुण्डं सर्वेतश्चरं ब्रह्माणीं सरित्प्रियां वैशाखिनीं [9] विश्वगर्भां वरदां जयन्तीं कालीं वक्रतुण्डाञ्च ' व्याहृत्यन्तं घृतेनैव हुत्वा पुण्याहान्ते प्रतिसरं बद्ध्वा पुष्पगन्धवस्त्राद्यैरलङ्कृत्य,

' तरो गृह्णामि देवार्थं त्वां प्रसीद ममानिशम् ।
गच्छन्तु देवतास्सर्वाः प्रीताश्चैनं समाश्रिताः ॥

इति [10] वृक्षराजमामन्त्र्य आचार्यं शिल्पिनञ्च सम्पूज्य रात्रावेव यूथाधिपानपायिनावभ्यर्च्य ताभ्यां घृतमिश्रैः सर्षपैः हुत्वा तिललाजसक्तुपूपसम्पृक्तं बलिं भूतेभ्यस्तेभ्यो दद्यात् । प्रभाते स्नात्वा पुण्याहं वाचयित्वा घृतपूर्णपात्रं " सोमाय नम " इति जलमध्ये क्षिप्त्वा " सोमं राजान " मित्युदङ्मुखं छेदयेत् । तत्र प्राचीमुदीचीं वा शकला यदि गच्छेयुः [11] महावृद्धिर्भवति । प्रतीच्यभिमुखा विघ्नकरा दक्षिणागा विपत्करा भवन्ति । अतः [12] प्रतीक्ष्य सर्वाङ्गं छेदयेत् । प्रागग्रान् कुर्यात् ।

---

1. B. रूपायेत्येव. 2. B. त्रिहस्ताय विघ्नायेति न दृश्यते. 3. च. सन्ध्याभ्यः. 4. च यक्षीभ्यः. 5. B. वनाय. 6. A. विद्याधरेभ्य इति नास्ति. 7. A. सर्वेश्वरायेत्यादिचतुर्थ्यन्ताः सर्वेतश्चरायेत्यन्ताः दृश्यन्ते. 8. च. चामुण्डीं सर्वेतश्चरामिति. 9. B. विश्वगर्भामित्यादि व्याहृत्यन्तं नास्ति. 10. B. आमन्त्र्य नमस्कृत्य. 11. ग. महर्द्धिः 12, क. [illegible]तीच्यां.

SGDF
Sri Gurgeshwari Digital Foundation

दारूक्तवृक्षभेदाः

खदिरासन साल सुवर्णानिलार्जुनाशोक मधूक वाक सुरवर्ति निम्ब [1]दलित्थ वकुलकन्दलि वञ्जुलाश्चेत्येते सारदारवः सर्वकार्येषु ग्राह्या भवन्ति। तानेव स्थूणा फलकोत्तर [2]बोधिका द्वारपट्टिकार्गल सालभञ्जिकाद्यर्थं संशोधिताऽनृजुवृक्षांस्तक्षयित्वा आहृत्योच्छिष्टफेन[3]तुषोषरर्धिजावर्चः(?) प्रभृतीन् परिहृत्य[4] शकटैः वैवधकैरन्यैः महिषैः वृषैर्वा वाहयित्वा आघोष्य[5] [6]देवस्थानं गत्वा तत्र निधापयेदिति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
दारुसङ्ग्रहणविधिर्नाम
सप्तविंशोऽध्यायः ॥

## ॥ अथ अष्टाविंशोऽध्यायः ॥

शिलासङ्ग्रहणम्, शिलाभेदाः

अथ शिलासङ्ग्रहणम्। गिरिजा भूमिजा वारिजाश्चेति शिलाः त्रिविधा भवन्ति। गिरिजानां वारिजानामूर्ध्वमुखं भूमिजानामधोमुखं गिरिपार्श्वप्रजातानां तत्प्रेक्षमुखम्। [7]यत्रोन्नतिस्तत्र शिरो विद्यात्। नदीजानां जलमार्गमुखम्। प्राङ्मुखी जयदा दक्षिणशिराः शान्तिदा पश्चिमशिराः श्रीकरा उत्तरशिराः शुभदा। विदिक्छिरसं विदिङ्मुखीं वर्जयेत्। भूमिजा गरीयसी मध्यमा गिरिजा कनीयसी वारिजा। विशालां बहुलां स्निग्धामविवरां ग्रन्थिवर्जितां व्यक्तशब्दघनां पुमांसं शरावोदकसङ्काशां वधूं [8]कर्कशां नपुंसकमिति। देवानां पुंशिला देवीनां स्त्रीशिला ग्राह्या। न ग्राह्या नपुंसकशिला।

---

1. ग. कपित्थ. 2. बोधिकोमरकलालार्गलसालेत्यादि कादन्यत्र. 3. B. वृद्धवृक्षान्. 4. तुषा रथित्वर्चः. 5. क. शाखास्समादाय शकटैर्वृषैरित्यादि. 6. च. देवेशं. 7. क. यतो हृतिः 8. च इत्यधिकं.

SGDF
Sri Gargeshwari Digital Foundation

पुष्पजलसङ्कीर्णभूमिजा वारुणे [1]पूर्णतोयाढ्य भूमिजाउत्तरे क्षीर-वृक्षकीर्णभूमिजा पूर्वे शान्तिदा । [2]दक्षिणे अहिकाकादियुत[3]भूमिजा अनर्थदा । पूर्वतः सा माहेन्द्री पुष्टिदा । राजभोगदा[4]प्राग्दक्षिणयोः । खदिरकार्ष्मर्यपालाशयुता [5]उत्तरे कपोतक्रव्यादपक्षि [6]भ्रमरमयूराधिष्ठिता अन्तर्गत-तोया आग्नेय्यामायुरारोग्यपुष्टिदा । विसू (?) श्लेष्मातकविभीतककुम्तुम्भाऽवृतां वायुसूर्याग्निना दग्धां किरातगणदूषितां यक्षरक्षःपिशाचदुष्टां वर्जयेत् । शुक्ल-रक्तपीतासितवर्णाः क्रमश उच्छ्रयाः । तत्र कुन्देन्दुक्षीरसदृशी शङ्खमुक्तानिभा स्फटिकाभा श्वेतपद्मदलप्रभा कुमुदप्रभा मृणालसदृशी ब्राह्मकर्मविवृद्धिदा । वैडूर्यपद्मरागाभा सिन्दूरसदृशी दाडिमकुसुमोपमा रक्तोत्पलदलप्रभा कुन्दुरुष्क-कुसुम्भाभा क्षात्रवीर्यविख्यातिदा । हरिद्रा पीतवर्णा पुष्यरागप्रभा मरकतनिभा गोरोचनाभा वैश्यानां गोधान्यधनवृद्धिदा । कृष्णा रूक्षप्रभा माषाञ्जनसदृशी नीलश्यामा सकृष्णा अवरवर्णजवीर्यपुष्टिप्रदा ।

## शिलादोषाः, दारुदोषाः

बिन्दुनिम्नसिरास्फोटविपा(?)वर्तुलग्रन्थियुक्तां वर्जयेत् । व्याधिवधबन्ध-नार्थनाशमरणकीर्तिनाशनत्वात् । उक्तवर्णशिलालाभेऽञ्जनप्रभां गृह्णीयात्सर्वकाम-फलप्रदत्वात् । उक्तदोषविवर्जितां दारुग्रहणविधानेन गत्वा छेदने भेदने तद्वर्णविपरीतानि नानावर्णानि [7]मण्डलानि दृश्यन्ते, यत्र[8] तत्र गर्भ इति जानीयात् । तत्रासितमण्डले कृष्णाहिं कपिले मूषिकं रक्ते कृकलासं पीते गोधां गुडवर्णे पाषाणं कपोते गृहगोधिकां [9]कृपाणसदृशे जलं पद्मवर्णे वालुकां विचित्रे वृश्चिकान् नीलपीतनिभे शलभान् मधुवर्णे खद्योतम् । मण्डलसङ्ख्यया[10] मर्माणि विनिर्दिशेत् । एवमेव भूरुहेषु जानीयात् ।

---

1. ख. आढ्याभूमिजेति. 2. क. कीर्णाभूमिजेत्यसमस्तं. 3. B. दक्षिणे व्रीहिकाकसंतृत्रिणपूर्वतः समाहेन्द्रो. 4. क. प्रत्यक्. 5. B. तित्तिरि. 6. क. भ्रमर-यूथान्तर्गततोया ज्ञेया इत्येव, आग्नेय्यामिति नास्ति. 7. B. मण्डलानीति न दृश्यते 8. क. ग. यतस्सा. 9. क. कृसरसदृशे. 10. क. संज्ञया.

SGTF Sri Gargeshwari Digital Foundation

गर्भदोषप्रकाराः

गर्भदर्शने महत्तरो दोषो भवति । तत्र सर्पदर्शने स्वयमेव कर्ता नश्यति । मूषिके अनपत्यत्वं कृकलासे अल्पायुः गोधायामनारोग्यं शलभे दारिद्र्यं खद्योते अन्धत्वं मण्डूके धनक्षयः सिकतासु व्याधिः जले शरीरपीडा गौलिकायां कुलक्षयः । एवमनेके भवन्ति । तस्मात् परीक्ष्य सगर्भां वर्जयेत् । मुखं पृष्ठं शिरः पादौ च ज्ञात्वा सिराश्च परिहृत्य लक्षणसम्पन्नमेव प्रकल्प्य आहरेदिति विज्ञायते ॥

इति श्रीवैखाणसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
शिलासङ्ग्रहणं नाम अष्टाविंशोऽध्यायः ॥

---

## ॥ अथ एकोनत्रिंशोऽध्यायः ॥

इष्टकालक्षणम्

अथेष्टकालक्षणम् । सस्यक्षेत्रे नदीतीरे वा एकभागं पुलिन्दं द्विभागं वालुकां तत्समं ग्रावादिकमेवं संशोध्य काष्ठलोष्टतृणशिलादिवर्जितं श्लक्ष्णं जलेन सम्मर्द्य बहुदिनपर्युषितमृजुं चिक्कण[1]मौर्जमेवं समादाय कृमिकीटमक्षिकाद्यसङ्कुले समन्तात् जलविमुक्ते मनोरमे शुद्धे अवकाशे अच्छाये [2]विवर्जिते यमविस्तारान् द्विगुणायामान् भागोच्छ्रितान् सुदृढान् लघुतरनिर्मितान् भूमिकान कृत्वा तैः पृथक् पृथक् विश्वामित्राद्यस्पृष्टाः केशास्थिलोष्टपाषाणशर्कराद्यसंश्लिष्टाः खण्डस्फुटित-विहीनाश्चतस्रः समाश्चेष्टकाः कल्पयित्वा [3]आतपेनाऽशोष्य विविक्ते जनवर्जिते महाचुल्लीं प्रकल्प्य [4]अग्निनोद्दीप्य विमानसीम्नो बाह्ये स्थापयित्वा आरभेत । एवं तरुपाषाणेष्टकाः सङ्गृह्य नवमार्गेषु [5]एकमालम्ब्य यथाशक्त्यारभेत ।

आलयप्रमाणम

अष्टशतकं पञ्चसप्ततिकमष्टाचत्वारिंशकं पूजकविप्रजनयुतं [6]क्रमात् उत्तमं त्रिकम् । द्वात्रिंशत् षोडश द्वादश वा मध्यमं त्रिकम् । नवकं पञ्चकं त्रिकं वा

---

1. च. और्ध्यं. 2. विवर्ज्यं. 3. B. अनातपेन. 4. क. अग्निनेति न दृश्यते.
5. घ. एकमार्गं. 6. B. उक्तं उत्तमं त्रिकं इत्येव. अन्यत्रोत्तममिति नास्ति.

SGDF Sri Gurgeshwari Digital Foundation

अधमत्रिकम् । चतुष्कालार्चनायुक्तं मूर्तीनां पृथक् पृथक् चतुष्कालं बहूपदं-शदधिसर्पिर्हव्यान्नबलिचतुष्कनृत्तगेयसमन्वितं विष्णुरुत्सवादि-पूजादियुतमयनाब्द-युगान्तभूतसम्प्लवादिषु मासि मासि च स्नपनबल्युत्सवविस्तीर्णमेवमुत्तम् । द्विकाल[1]मन्त्रबलिसंयुतं सायं अर्घ्यपुष्पबलियुतमयनादिषु कालेषु स्नपनोत्सवसंयुतं मध्यमम् । मध्याह्ने प्रातः सायञ्च हव्यसंयुक्तं [2]त्रिकालपूजनयुतं बलिहीनमहीनं[3] वा कालोक्तस्नपनयुतमेतदधमम् । एतेषु स्वशक्तितो भेदागममालम्ब्य लोभमोह-विवर्जितो ब्राह्मेण विधानेन भगवन्तमनुस्मृत्य अन्यतमया आचर्याराधकपरिपूर्ण[4] भोगमात्मार्थमिति निश्चित्य तदर्हं मन्दिरमारभेत । कुब्जवामनातिह्रस्वदीर्घान् विना कर्तुः गुरोर्वा हस्तेन [5]नाहं तदर्धहस्तेन अष्टसप्तषडधिकदशकमानमुत्तमं त्रिकम् । पञ्चचतुस्त्र्यधिकदशकमानं मध्यमं त्रिकम् । द्व्येकशून्याधिकदश-कमानमधमत्रिकम् । नवाष्टसप्तषड्ढस्तादहीनमेवं विमानप्रमाणमादाय स्वश-क्तितः कल्पयेत् । पञ्चहस्तविहीने भगवन्तं नैव कल्पयेत् । कल्पनेऽप्य-च्युतः तत्र न रमेत । तदुत्सेधदष्टभागं भूमिलब्धं शिरस उपरि (?) दृढस्थाने विहीनेऽपि दोषो नास्ति । एवं ज्ञात्वा अधस्तात् समं दृढतरमुपकल्प्य विधिना प्रथमेष्टकान्यासं कृत्वा शिलाभिः द्रुमैः इष्टकाभिर्वा रम्यं [6]मनोहरं शुभदं विमानं शास्त्रज्ञैः सत्सम्मतैः व्याधिदोषविवर्जितैः वाक्कर्मबुद्धिकुशलैः सर्वदोष-विवर्जितैः चारुदर्शनैः रूपयौवनसम्पन्नैः शिल्पिभिः कारयेदिति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
इष्टकालक्षणविधिर्नाम एकोनत्रिंशोऽध्यायः ॥

---

## ॥ अथ त्रिंशोऽध्यायः ॥

### प्रथमेष्टकाविधानम्

अथ प्रथमेष्टकाविधानम् । विधिना कल्पिते देशे दृढतरे [7]जलेन सर्वं समिति ज्ञात्वा पूर्ववच्छङ्कुं संस्थाप्य छायाग्रपतनं दृष्ट्वा ऐशान्यामङ्गुलार्धं मुखं

1. B. नदब'ल. 2. च. एककालपूजनायुतं. 3. क. अहीनाङ्गमति. 4. घ. भोजनं 5. ग. यहं. 6. क. मनोरमं. 7. B. जलेनेति नास्ति.



Sri Gargeshwari Digital Foundation

[1]याम्ये समं वारुण्यां वायुवीक्षणं सौम्यं वायव्यामर्धाङ्गुलमेवं कृते समं भवति। प्रागग्रपतनार्धेषूत्तरेऽपि (?) वर्धयेत्। उदगयने समाग्रमर्धाधिकं ततोऽन्यस्मिन् प्राच्योदीच्यप्रबन्धने(?) प्राचीमेवं ज्ञात्वा चतुष्पञ्चषडंशा भित्तिमूलाः क्रमेणोत्तम-मध्यमाधमाः। [2]त्रिभूमीनां चतुर्थांशं पञ्चभूमीनामष्टांशं सप्तभूमीनां [3]दशांशमेवं गर्भगृहं ज्ञात्वा शुभर्क्षे शुभहोरायां प्रथमेष्टका न्यसेत्[4]। ग्रामस्य यजमानस्य आनुकूल्ये [5]स्वारोहितेषु नक्षत्रेषु ध्रुवेषु च करणेषु [6]शुभेक्षिते [7]शशिराशिस्थे-त्वारभेत। तद्दिनात् पूर्वमङ्कुरानर्पयित्वा श्वः कर्तास्मीति सञ्चिन्त्य प्रभाते प्राच्यां दक्षिणे वा प्रपां कृत्वा उत्तरे पूर्वेद्युरात्रौ वास्तुहोमं हुत्वा प्रपायां पञ्चाग्नीन् समुपकल्प्य सूत्रोक्तविधिना आघारान्ते वैष्णवं हुत्वा ऐन्द्रमाहवनीये अन्वाहार्ये आग्नेयं याम्यं नैर्ऋतं गार्हपत्ये वारुणं वायुदैवत्यं आवसथ्ये सौम्यमैशानं सभ्ये शान्तिं हुत्वा सभ्याद्दक्षिणे धान्योपरि वासांस्यास्तीर्य इष्टकाश्च शिला वा संस्थाप्य अभ्यर्च्य वस्त्रेणाच्छाद्य अग्निं परिस्तीर्य वैष्णवं श्रीभूमिदैवत्यं हुत्वा प्रभाते स्नात्वा आचार्यं पूजयित्वा अलङ्कृत्य स्थापकान् सम्पूज्य ग्रामं प्रदक्षिणी-कृत्य द्वारस्य दक्षिणे भागे पद्मरागवज्रप्रवालेन्द्रनीलमरकतमौक्तिकपुष्यकान्त-वैदूर्यस्फटिकादीनि मध्यादीशान्तमाक्षिप्य 'आ त्वा हार्ष' सूक्तेन प्रागग्रं वोत्तराग्रं वा युग्मञ्च (?) देवदेवमनुस्मृत्य स्थापयेत्। एवं कृत्वा ारस्य दक्षिणस्तम्भे कवाटार्गलयोगे गर्भागारे वा यमवरुणसोमदक्षिणांशेषु नृपवैश्यशूद्रविप्राणां वृद्धयै स्तम्भं स्थापयेत्। अधिष्ठानसमं श्वभ्रावगाढं कृत्वा पूर्ववत् गर्भं संस्थाप्य पश्चाच्छिल्पिभिः शिल्पशास्त्रविधानेनाऽरभेतेति विज्ञायते॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे

प्रथमेष्टकाविधानं नाम त्रिंशोऽध्यायः॥

---

1. A. प्रागयामानिलेषु. 2.3. च. त्रिभागैकत्रिभूमीनाञ्च. 3. च. दशांशं वा. च. भूमं नामेवं. 4. ग. न्यसेदिति नास्ति. 5. क. स्वारोहितेष्विति नास्ति. 6. च. चन्द्रे शुभेक्षित इति. 7. क. शशीति नास्ति.

SGDF Sri Gargeshwari Digital Foundation

## अथ एकत्रिंशोध्यायः॥

### विमानलक्षणम्

अथ विमानलक्षणम्। हस्तशतं षण्णवतिः नवतिः चतुरशीतिः अशीतिः पञ्चसप्ततिः चतुष्षष्टिः षष्टिः षट्पञ्चाशदित्युच्छ्राया विमानानां क्रमेण नवधा भवन्ति। द्वात्रिंशत्पञ्चविंशोत्सेधं[1] वा द्वादशैकादश दश नवाष्ट सप्तांशं वा विस्तारम्।

### विमानषडङ्गानि, तल्लक्षणम्

अधिष्ठानपादप्रस्तरग्रीवाशिखरस्थूप्याह्वाः षड्भागा भवन्ति। अत्र पादशिखरौ द्व्यंशौ एकांशाः शेषाः। तत्र ललाटास्योरोनाभिजानुसमोत्सेधानि पञ्चाधिष्ठानानि। तत्त्रिधा कृत्वा एकांशे जगतीं द्वितीये कुमुदं तृतीयं चतुर्धा विभज्य द्व्यंशे पट्टिकां परितो [2]द्व्यंशं प्रतिमुखमेवं प्रतिक्रमं सार्धैकांशे पट्टिकां सार्धैकांशे [3]कण्ठकशेषं वाजिनं पादबन्धमिति पादविस्तारं [4]तदर्धोच्छ्रायं वा मानमादाय त्रिभागावगाढमृजुमच्छिद्रं घनेष्टकाभिः कल्पयेत्।

### स्तम्भलक्षणम्

स्तम्भाः षड्ढस्ताया माद्वादशाङ्गुल विष्कम्भाः[5] स्तम्भदशांशोनदीर्घाः[6] उपरिष्टात्तालप्रकल्पितद्व्यङ्गुलान्यूनविष्कम्भा [7]दशांशोनायामाः वृत्तचतुरश्राष्टाश्र [8]षोडशाश्रपिण्डिकाकुम्भबोधिकावीरकाण्डाश्रिताश्चाष्टौ स्तम्भा भवन्ति। जालेष्टकापादैः [9]भित्तयः [10]त्रिविधा भवन्ति।

स्तम्भविस्ताराण्युत्तराणि खण्डोत्तरपत्रबन्धरूपोत्तराणि त्रीणि। स्तम्भाः त्रिभागबहुलाः समानिष्कासाश्च। उत्तरस्तम्भविष्कम्भोत्सेधश्चतुर्धा भूतबहुल [11]भागतुल्यविस्तारसमोत्सेधा भवन्ति। तदर्धोत्सेधाः [12]चतुर्मार्गगाः दण्डोत्सेधाः

1. च. पञ्चविंशद्वोत्सेधादद्व दशाङ्गुलदशांशनवसप्तांशं वा. 2. च. द्व्यंशमास्यं. 3. क. खण्डकलकशेषं. 4. च B. उच्छ्रायमह्योपर्णकेन. 5. च. वष्कम्भास्त्वधस्तम्भ. 6. च. दीर्घतपरिष्टनां. 7. क. ग. दशांशेनायामाः. 8. च. षोडशाश्रमस्याष्टाश्रपूर्वाश्रभुजुपिंण्डका इत्यादि. 9. च. भक्तयः. 10. च. त्रिधा. 11. च. भारलात. 12. B. चतुर्भार्गाः.

SGDF
Sri Gargeshwari Digital Foundation

प्रस्तरपार्श्वानुगाः [1] उत्तरपट्टिकाद्वारानुभागाश्च भवन्ति । [2] अनुलाजयन्त्यौवंशानुभा अनुमार्गधारिण्यः । कपोतनिष्क्रमं त्रिदण्डमध्यर्धं वाऽलिङ्गं [3] पादोत्सेधसममर्धं त्रिपादं प्रत्युत्सेधं तत्त्र्यंशसमनिर्गमं वाजिनं द्विदण्डं चतुर्दण्डं वा तस्योर्ध्वे षट् चत्वारः [4] परिवशाः प्रति वाजिनतुल्यं वाजिनं वेदिकोपरि जालिकानन्द्यावर्तगुलिकागवाक्षकुञ्जराः [5] चतुरश्राद्यलङ्काराः तत्र भवन्ति ।

## पञ्जरम

पञ्जरविस्तारं त्रिदण्डं चतुर्दण्डं गर्भागारचतुर्भागं वा नासिकाविस्तारं [6] महानासिकाविस्तारं [7] दण्डं द्विदण्डं वा विमानविस्ताराष्टभागं [8] महाकर्णिकानासिकाविस्तारसमं कूटशालाविस्तारं द्विगुणायामं शालायामं हस्तिपृष्ठनासिकाविस्तारमलिन्दविस्तारं भागमेव गृहपिण्ड्यः [9] पादान्तरं द्विहस्तं चतुर्हस्तञ्च कल्पयेत् ।

## कवाटः

स्तम्भायामं [10] वसुहीनं द्वारोत्सेधं तदर्धविस्तारं स्तम्भविस्तारं वस्वंशं कवाटबहुलं तदर्धं कवाटदण्डं कुण्डलश्रीमुख [11] पिञ्जरपुलकार्गलभ्रमरवलाहकाद्यलङ्कारयुताः कवाटा भवन्ति ।

## सोपानानि, शिखराणि

बालवृद्धसुखारोहणार्थं समखण्डानि शयनानि पादार्थत्रिपादसमस्थितानि सोपानानि भवन्ति । चतुरश्राष्टाश्रसमवृत्तायामाश्चेति चतस्रः शिखरक्रिया भवन्ति । तासां पावकवर्णस्वराग्निनयनमाहरेत् [12] । त्रयोदशदशाष्टपञ्चलोकोदधिपङ्क्ति वसवः आनुपूर्व्यात स्तम्भविष्कम्भोत्सेधात् षोडशांशः ललाटे जघने पादार्धे

1. ग. अनुगाह्युत्तर. 2. अनुलाजायन्त्यौ इति क कोशे न दृश्यते. 3. लिङ्गं कादन्यत्र. 4. क. परशवः. 5. च. कुञ्जरच. 6. महानिर्व्यूहविस्तारं कादन्यत्र. 7. क. दण्डं. 8. क. सिंहनासिका. 9. पिण्डयः. 10. क. महीन. 11. पञ्जर. 12. छ. अग्निनयनाहृताहृतयदद्वित्रित्रयत्रयोदश. घ. एतदादि ६१ पुटे द्वितीयपङ्क्तौ एवं पर्यन्तं लुप्यते ।

SGDF
Sri Gurgeshwari Digital Foundation

पादाङ्घ्रिजानुनी कर्णांशे द्व्यंशं कुर्यात् । वा (?) ललाटकुठारिजातावच्छित्ति-ध्वजावदेवं (?) तद्युक्त्या कारयेदिति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
विमानलक्षणविधिर्नाम एकत्रिंशोऽध्यायः ॥

---

## ॥ अथ द्वात्रिंशोऽध्यायः ॥

### मूर्धेष्टकाविधिः

एवं कृत्वा आद्येष्टकाविधानेन हुत्वा न्यक्षं दधित्यकं पीवरमार्यकमिति प्राच्यां, याम्ये विवस्वन्तं भरतं [1]विश्वकर्माणं मरीचिमन्तमिति, पश्चिमे मित्रं [2]हित्वरं राजिष्मन्तं रमणकमिति, उत्तरे क्षत्तारं महीधर[3]मुर्वरोहं शेवधिमित्यभ्यर्च्य पृथक् पृथक् हुत्वा प्रभाते स्नात्वा शिल्पिनं सम्पूज्य आचार्यमभिवन्द्य स्रग्वस्त्राभरणादिभिरलङ्कृत्य अभ्यर्च्यऽऽरभेत । समाः श्लक्ष्णाः दोषविवर्जिताः पञ्चेष्टकाः समाहृत्य प्रोक्षणैः प्रोक्ष्य धान्योपर्यहताम्बरे संस्थाप्याभ्यर्च्य वज्रेन्द्रनीलमरकतवैडूर्यपद्मरागान् सुवर्णबद्धान् सुवर्णशकलानि वा "इन्द्रं प्रणवन्तं" "यमो दाधार" "ये ते शतं" मिश्रवाससः" "ब्रह्मजज्ञान" मिति प्रागादि मध्यान्तं पञ्चरत्नान्याक्षिप्य श्रीसूक्तेनेष्टकाः संविमृश्य स्थिरराश्युदये शुभग्रहेक्षिते लग्ने ध्रुवसूक्तेन देवमनुस्मृत्य [4]प्रागग्रं पञ्चेष्टकाः सुदृढं संस्थाप्य सर्वरत्नमयं जातरूपमुपर्युपर्यर्पयित्वा सुधया परिलिप्य,

### स्थूपिशूलप्रतिष्ठा

स्थूपिशूलं ताम्रेण दारुणा वा कल्पयित्वा प्रोक्षणैः प्रोक्ष्य सुदृढं संस्थाप्य कनिष्ठाग्रप्रमाणं स्थूप्यग्रं पद्ममुकुलाकारमधस्तात् [5]पद्मपुष्पाभं तदुपरि कुम्भरूपं

1. ग. विश्वं. 2. ग. जित्वरं. 3. ग. दुर्वरोहं. 4. म,उत्तराग्रं वा देवदेवं 5. A. पत्र.

SGDF
Sri Gurgeshwari Digital Foundation

वृत्तं चतुरश्रमष्टाश्रं[1] षोडशाश्रं वा कृत्वा तस्योपरि इलाकृत्यूर्ध्वे[2]दीपशिखा-रूपशिखायुक्तं महानासिकातः [2]किंपुरुषमुखसंयुक्तं दिशासु दिग्देवताः[4] इन्द्रं रुद्रं महाविष्णुं ब्रह्माणं वा सुधया कारयेत्। महानासीशिखाग्रेषु ताम्रेण आयसेन वा त्रिशूलान् कृत्वा स्थापयेत्। तासु पद्मदलानि लताऽवृतानि[5] च कृत्वा तन्मध्ये [6]कोणे च [7]स्तम्ब [8]कर्कादीनि नीव्रे व्यालरूपं [9]गन्धर्वोद्वहनं इन्द्र-नीलादि [10]कूटेषु [11]नासिकास्वन्तः पादं बहिःपादं कूटपीठमहानीव्रे [12]भूतान् हंसान् विद्याधरान् क्रीडारससमन्वितान् [13]नानाविभ्रमसंयुक्तान् प्रादक्षिण्यवशेन कारयेत्। [14]जातरूपरूप्यशुल्बान्यतमेन शिखराणि सर्व-रत्नोज्ज्वलरूपाणि कारयेदिति केचिदृषयो वदन्ति। सिंह व्याल गज वृष हंस शुक चक्रवाक मुक्तादाम कदली क्रमुक सोमरूप लतारूप मकर वेदिका दण्ड यक्ष गन्धर्व सिद्ध किन्नर नागेन्द्रादीन् क्रीडारससंयुक्तान् [15]पादान्तरेष्वर्पयित्वा अलङ्कृत्य भित्तिभागेषु सर्वत्र [16]देवांशावतरण क्रीडा-भावविधानेन अप्सरो यक्ष गन्धर्व नाग मुख्यैः समन्वितं [17]चक्षुराह्लादकरं रम्यं मनोहरं यत्नतः कारयेत्। [18]क्लिष्टरूप कबन्ध पिशाच ब्रह्मराक्षसान् पाषण्ड सभ्येतर रोगार्तादिरूपोद्वेजनकान् क्वचिदपि न कारयेत्। भित्तिभागेषु सर्वत्र [19]द्वियव त्रियव यवहीनं वृतेः[20] तलनिम्नमुन्नतं वा सुधया लेपयेत्।

## सुधायोगः

इष्टकापादविस्तारं पञ्चधा सप्तधा षोढा वा विभज्य एकं स्तम्भनिम्नं तदष्ट भागं पादाग्रमिष्टकापादविस्तारं तरु (?) पादानां तन्मूलविस्तारं उत्तरस्योत्तरस्य त्रिभा-गैकमुत्तराबन्धविस्तारं उत्सेधमुत्तराणामेवं योगबन्धं युतया सुधया सर्वत्र कारयेत्।

---

1. घ. अग्रं 2. घ. ऊर्ध्वेरूप. 3. क. किंपुरुष. 4. म. तासु. 5. क. प्रतान नि. 6. च. झ. तु. 7. घ. स्तम्भ. 8. B. कर्णान् निव्रे. छ. कर्णादि-निप्रे व्यालरूपं. 9. छ. गन्धर्वोद्वानं ग. गन्णर्वगानं. 10. क. नोतेषु. म. कीलेषु. 11. छ. मुखानिके. 12. छ. प्रभूतान् सिंहान्. 13. क. अन्तर्विभ्रम. म. नृत्तविभ्रम. 14. छ.त्वातमेव. 15. म. अवान्तरेषु. 16. घ. देवदशांश. 17. म. चतुर्षु. 18. B. कुश्यकक्लिश्य. 19. क. त्रियवयवहीनं 20. घ. वृत्तिः स्थल. क वृत्तंस्थल.

SGDF Sri Gargeshwari Digital Foundation

[1]कराल मुद्ग कुल्माष [2]कर्कंकी चिक्कणैः पञ्चविधचूर्णैः चतुर्भागिकं भस्म संयम्य चूर्णद्विगुणशर्करायुतं शणवालुकायुक्तं जल कषाय त्रिफलोदक क्षीर[3]माष यूष बन्धोदकैः त्रिभिः [4]मर्दयित्वा माष यूष क्षीर सहितं [5]शुद्धोदकेन शुद्धं कृत्वा गन्धोदकेनाऽलिप्य सुधया नानारूपक्रियां कारयेत् ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
मूर्धेष्टकाविधानं नाम द्वात्रिंशोऽध्यायः ॥

---

## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

### विमानभेदाः

नलिनकादिविमानानां षण्णवतिरुक्तानि । तेषु नलिनकं देवाख्यम् । मानुषं ब्रह्मवृत्त स्वस्तिक [6]वापीप्रसाद अर्धचन्द्र शालीकरण पूर्वरङ्ग बहुचित्र गोधामुख पर्वताकृति महापद्म [7]नन्दीविशाल अष्टाङ्ग सोमच्छन्द चतुःस्फुट श्रीवृत्त नन्द्यावर्त श्रीप्रतिष्ठितक सर्वतोभद्राः अष्टादश विमानानि देवदेवस्य विष्णोः । तेष्वष्टावाद्या ब्राह्मणानां [8]चत्वारः क्षत्रियाणां शेषा विट्छूद्रयोः । [7]नन्दीविशालं दक्षिणे ग्रामादीनां पश्चिमे [9]अष्टाङ्गमुत्तरे सोमच्छन्दं पूर्वेपर्वताकृतिं [10]सर्वदिक्षु चुतुःस्फुटं ग्रामबाह्योद्यानपर्वतनदीतीरेषु नन्दीविशालं सर्वतोभद्रं पर्वताकृतिं वा कारयेत् । [11]ब्रह्मवृत्तं सर्वतोभद्रं श्रीप्रतिष्ठितकं वा ग्राममध्ये पञ्चमूर्तिविधानेन कारयेत् । अधस्तले [12]चतुर्द्वाराः चत्वारो गर्भागाराः । तेषु स्थितानासीनान्वा पुरुषादीनुपरि विष्णुं तदुपरि शयानं सपरिवारं देवीभ्या-मृषिभ्यां वा कारयेत् ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
विमानलक्षणस्थाननिर्देशो नाम त्रयस्त्रिंशोऽध्यायः ॥

---

1. क. कृकराल. 2. कर्कक. 3. घ. माषबन्ध. 4. A. कुट्टयित्वा मांसगुलक्षीर. 5. A. शुद्धोदकेनालिप्य सुधया. 6. B. वापि. 7. A.B. नदीविशाल. 8. B. चरन्त्यां 9. B. घ. विशालङ्गमिति तत्र स्थाने. 10. अत्र पूर्वे इत्यधिकं क. कोशे. 11. घ.वृद्धवृत्तं 12. घ. B. चत्वारो गणगाराः चत्वारो गार्भिगाराः छ.

SGDF
Sri Gargeshwari Digital Foundation

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

### पञ्चमूर्तिकल्पः

पुरुषं स्फटिकाभं रक्तास्यनेत्रपाणिपादनखवस्त्रयुतं चतुर्भुजं शङ्खचक्रधरं देवीभ्यामृषिभ्यां जयभद्राभ्यां [1]व्याजकाभ्यां संयुक्तं दक्षिणे अञ्जनाभं [2]पिङ्गाम्बरं धृतिपौष्णीभ्यां युतं सुरसुन्दरीभ्यां वीज्यमानं सत्यं पश्चिमे अच्युतं सुवर्णाभं शुकपिञ्छाम्बरधरं पवित्रीक्षोणीयुतं [3]गुहतुष्टिभ्यां व्याजकाभ्यां उत्तरे अनिरुद्धं तरुणादित्यसङ्काशं श्यामाम्बरमनन्ताध्यासीनं फणैः सप्तभिः पञ्चभिर्वा आच्छादितमौलिं कुञ्चितानन्नं [4]विवृत्तैकपादं [5]वामजानुप्रतिष्ठितोत्तम्भितसव्यकरमनन्तालम्बितान्यं[6] महीप्रमोदायिनीभ्यां वराहनारसिंहाभ्यां स्वाहास्वधाभ्यां व्याजकाभ्यां [7]समन्वितमेवञ्च क्रमेण संस्थाप्य उपरि विष्णुं श्यामलाङ्गं चतुर्भुजं शङ्खचक्रधरं सर्वाभरणसंयुतं श्रीहरिणीभ्यां सुवर्णश्यामवर्णाभ्यां रक्तश्वेताम्बराभ्यां [8]वामदक्षिणकरधृतरक्तपद्मोत्पलाभ्यां प्रसारितान्यहस्ताभ्याञ्च [9]भृगुपुराणाभ्यां [10]प्रवालरजतवर्णाभ्यां श्वेतवस्त्रधराभ्यां किष्कन्धसुन्दराभ्यां व्याजकाभ्यां तदूर्ध्वे अनन्तभोगशयनं स्थापयेत् । चतुर्मूर्तिविधानेनोपरि[11] नारसिंहं वाराहं वा स्थापयेत् ।

### परिवारकल्पनफलम्

सर्वत्रानपायिगणैः सार्धमाचरेत्[12] । देवीहीने पत्न्यपत्यहानिः मुनिहीने धर्मनाशः विष्वक्सेनहीने कुलोत्सादनं वीशहीने [13]रिपुवृद्धिः चक्रहीने [14]संसारचक्रं ? शङ्खहीने मौढ्यं ध्वजहीने कार्पण्यं यूथेशहीने भृत्यहानिर्भवति । तस्मादेतैः [15]द्वारागारपालकैरर्चयेत् । उक्तानां विमानानां भेदालङ्कारमानानि भृगूक्तविधिना ज्ञात्वैवं कारयेदिति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
पञ्चमूर्त्यालयविधि र्नाम चतुस्त्रिंशोऽध्यायः ॥

---

1. A. व्याजनाभ्यां. 2. क. पिङ्गलाम्बरधरं. 3. B. कोशे गुहेति नास्ति. म. कीर्तितुष्टिभ्यां. 4. म. विस्तृतैकपादं. 5. क. B. आजानु. 6. म. असव्यं. 7. क. B. समन्वितं. 8. म. हस्तोद्धृत, 9. छ. रक्तश्वेताम्बराभ्यां 10. क. प्रवालरजितवर्णाभ्यां 11. विधानेषु. (तु?) 12. म. सार्धं सर्वमाचरत्. 13. छ. अरि. 14. क. संसारोच्छित्तिः. 15. B. द्वाराद्वारपालैः.

SGDF
Sri Gangadharan Digital Foundation

## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

### ब्रह्मणः स्वरूपनिरूपणम्

अथ विश्वतश्चक्षुर्विश्वतोमुखाङ्घ्रिहस्तं विश्वात्मकं विश्वगर्भं विश्ववेत्तृ[1] विश्वेन्द्रियगुणाभासं विश्वेन्द्रियविवर्जितमनादिनिधनं व्योमाभं यत् [2]ज्ञातृज्ञेयज्ञानविहीनं ज्ञानघनं तदेव जाग्रत्स्वप्नसुषुप्तितुर्यावस्थानगं[3] बहिःप्रज्ञान्तःप्रज्ञ[4]-प्राज्ञावस्थया वैश्वानरतैजसहृदयाकाशरूपेण[5] स्थूलं प्रविभक्तमानन्दं भुञ्जानं ब्रह्म [6]तुरीयं चतुष्पादमामनन्ति। तदेव ब्रह्म सत्त्वोत्कर्षनिकर्षाभ्यां प्राणिषु चतुर्धा भिद्यते[7] सत्त्वतः पादतोऽर्धतस्त्रिपादात्केवलाच्च। [8]धर्मज्ञानैश्वर्यवैराग्यविषयाश्चतस्रो मूर्तयस्त्विमाः[9] भवन्ति।

### ब्रह्मणो रूपकल्पनम्

[10]आसु मूर्तिषु कूटस्थः सूक्ष्ममूर्तिः सत्तामात्रः। सोऽत्र परं ब्रह्म विष्ण्वाख्यः। अन्या मूर्तयः पुरुषसत्याच्युतानिरुद्धाख्या अभ्यर्च्या भवन्ति। अतः [11]चतुर्व्यूहात्मनो ब्रह्मणः सर्वगतस्य निरवयवस्य लिपेरिव कल्प्यानि रूपाणि भवन्ति। भक्त्या नियोजितौत्सुक्याद्भूयुत्पन्नः तत्तदाकृतिः तत्तद्वाञ्छितान् ददाति। ज्ञानगम्यस्याकर्तुरविकारिणः [12]शुद्धस्याहेतुकस्यात्मनः पृथक्त्वं घटाकाशवत्। [13]अग्नेः विस्फुलिङ्गा इव [14]कालान्निमेषा इव ज्ञानांशा [15]देवा भवन्ति। [16]अंशैश्च [17]पालयन्ति लोकान्। तानेव पूजयन्त्येते भृग्वादयः।

### प्रकृतिः श्रीः

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं"[18] इति तत्संश्लेषाल्लोकयात्रामूला देवी। तस्मात् तमनयैव सह देवेशमर्चयन्ति परमर्षयः। सा देवी

---

1. A. विश्ववेत्तारं. 2. B. यज्ञानयज्ञेयं 3. B. स्थानं 4. छ. प्रज्ञप्राज्ञावस्थाया. 5. क. विभक्तरूपं. 6. क. तुङ्गं. क. तुर्यं. 7. B. विभज्यन्ते इति. 8. म. धर्मज्ञानवैराग्य. 9. छ. स्वस्तिमाचरन्ति. अत्र पङ्क्तिद्वयं ख कोशे लुप्यते. म. मूर्तयस्त्वत्र मत्याः 10. A. एतासु. 11. भ. व्यूहात्मनः 12. ख. कर्तुरविकारिणः. 13. तस्मादग्नेः इति क. 14. अत्र स्थाने- निमेषकेषु इति B. कांशेषु दृश्यते. क. हरेरावेशांशाः. 15. B. देवांशाः. 16. क. अंशैरेव. 17. पालिनं. 18. A. तत्क्लेशसंश्लेषात्. छ.B. B. छ. लोकयात्रामूला तस्मात्तयैव.



SGDF Sri Gurgeshwari Digital Foundation

श्रीरिति प्रोक्ता । सा प्रकृतिः । [1]सा शक्तिः । तदभिन्नाः स्त्रियः सर्वाः । पुरुषास्तदभिन्नास्सर्वे [2] । [3]ताभ्यां स्थितिः । तस्मात् सहैवार्चयेत् । ताभ्यां यद्वर्तितं [4]संसारचक्रं यत्सर्वलोकमरं सर्वं हृदि स्थितं हंसाख्यं [5]चेतोरूपं तच्चक्रम् । यः पृथिव्यादिपञ्चात्मा सर्वदेवमयः छन्दःपक्षः [6]सर्वगः सर्वभूतात्मा अनादिनिधनः सुपर्णो गरुत्मान् । पृथ्वीवायुसंयोगाच्चापः शार्ङ्गम् [7] । तेजोवायुमयो बाणः । विद्याविद्ये इषुधी । लोकालोकाद्रिः खेटकः । कृतान्तो नन्दकः । [8]देहवानन्तरात्मा सर्वेषां दण्डो दण्डः । ध्वजः [9]अपराजिताधारः । भेरी शब्दात्मिका । [10]लोकसन्तानभित्तिः नागः । अश्वः वायुसमवाय[11] इति श्रुतयो गृणन्ति [12] । तस्मादेतैः सहैव उभयत्र [13]विहिते (?) [14]देवमर्चयेत् ।

## स्थानभेदेन रूपभेदः

मुमुक्षुर्विजने देवेशं शङ्खचक्रधरमेव, [15]अन्यत्र आलये पञ्चबेरसमायुक्तं गर्भागारे स्थापयेत् । देवीभ्यामृषिभ्यां भृगुपुण्याभ्यां वा अर्चितं, [16]निधीशेन्द्राभ्यां नागेन्द्राभ्यां वा मया वीशेन [17]युक्तं वा, सूर्यचन्द्राभ्यां ख्यातीशपद्मापितृभ्यां वा भृगुद्रुहिणाभ्यामर्चितं वा, सङ्कर्षणप्रद्युम्नानिरुद्धसाम्बैः[18] पद्मया [19]वासुदेवमेवं स्थितमासीनं वा अन्यतमेन संस्थाप्य [20]ग्रामनगरादीनामृद्ध्यै पूजयेत् । नान्यथेति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे

भावनाकल्पो नाम पञ्चत्रिंशोऽध्यायः ॥

---

1. क. मा शान्तिः. 2. B तदभिन्ना न दृश्यते. 3. B. भक्ताभ्यां. 4. म. संसारचक्रं यत्सर्वलोकमारं. 5. चेतनरूपं. 6. घ. सर्पगः क सर्वभक्षः B. सर्वगः. 7. क शरः : A. प्रणाङ्गः. 8. क. देहान्तरात्मा. 9. A. म. पराग्रजन. 10. A.लोकमवितनं. म. लोकसंसारमितिः (?) 11. छ. वायव. 12. छ. गृह्णन्ति, 13. घ. विहाने. 14. B. देवीं म. सर्वदेवं. 15. B. अत्र छ. अत्रलक्षयेत. 16. छ. मिथयेन्द्राभ्यां. B. निधयेन्द्राभ्यां ख. निधीन्द्राभ्यां. 17. क. संयुक्तं. 18. छ. अनिरुद्धसाम्बरैः. 19. A. वासुदेवं दैविकं स्थितं 20. म. ग्रामादिनां मध्ये स्थानकं.

SGDF
Sri Gurgeshwari Digital Foundation

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

### पञ्चमूर्तिविधिः

पञ्चमूर्तिविधानेन ग्राममध्ये प्राच्यां [1]वा स्थानकं शयानं वा, दक्षिण-पश्चिमयोरासीनं स्थानकं वा, उत्तरे शयानमासीनं वा आग्नेये स्थानकं, नैर्ऋते वाराहं, वायव्ये नरसिंहमैशान्ये हरिशङ्करं, विजने योगासनं नद्युद्यानसमुद्रपार्श्वे शयानं राष्ट्रान्तरे नदीसङ्गमे स्थानकं शयानं वा अन्यत्र सुखासनमेव संस्थापयेत् ।

### पीठकल्पनम्

गर्भागारसमं पादमर्धविहीनं द्वारसमं पादाधिकमर्धाधिकं पादहीनं यजमानसमं वा, ध्रुवायामं ध्रुवायामषड्भागं [2]पीठमुत्तमम । अर्धाधिकं द्विभागं मध्यममधमं द्विभागमित्यङ्गिराः । गर्भागारत्रिभागैकमासने[3] पीठविस्तारं [4]द्वारायामषड्भागमुच्छ्रूयं तत्पादहीनं देव्योः पीठोच्छ्रूयमृत्विग्भागं[5] विभज्य एकेन [6]पादं [7]त्रिभिर्जगतीं द्वाभ्यां कुमुदमेकेन केसरं पञ्चांशैः कर्णिकां [8]पट्टिके [9]द्वाभ्यामेवं सिंहासनं विधानेन कल्पयेत् । आयामं द्वात्रिंशांशत्रिभागं[10] शयनोच्छ्रूयं चतुर्भागं विस्तारं शेषं युक्त्या कारयेत् । स्थानके द्वादशांशं पद्माकारं तदर्धोच्छ्रूयम् । अर्चायास्तु भुवङ्गसमं त्रिवेदिसहितं मण्डलं [11]चतुरश्रं वा । अथ वा एकामेव वेदिकां कारयेत् ।

### भगवद्वतारार्चनम्

यदा ग्लानिर्धर्मस्य, परिपालनाय नारायणाद्भगवतः [12]प्रत्यंशरूपाणि [13]युगे युगे प्रजातानि भवन्ति । तानि रूपाणि संस्थाप्यार्चयेत् ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
पञ्चमूर्त्याद्यालयस्थाननिर्णयध्रुवबेरमानविधिर्नाम षट्त्रिंशोऽध्यायः ॥

---

1. म. दक्षिमे. B. आसमानं वा. 2. A B. पीठमानं द्वारषड्भागात्पीठं इत्यधिकम्. 3. छ. आसनं. 4. ग. धारायाम. 5. B. ऋत्विग्विभज्य. 6. छ. पादुकं 7. छ. त्रयैः. 8. छ. पट्टिकां. 9. छ. द्वाभ्यां द्वाभ्यमेवं. A. द्वाभ्यां शिष्टमेवं सिंहासनं. 10. छ. द्विभागं. 11. B. चतुरश्रीशद्यर्धवेदिकां कारयेत्. 12. ख. प्रत्येकं रूपाणि. 13. A. तत्कर्मरूपाणि युगे.

SGDF
Sri Gargeshwari Digital Foundation

## ॥ अथ सप्तत्रिंशोऽध्यायः ॥

### दशावतारस्वरूपम्

मत्स्य कूर्म वराह नरसिंह वामन जामदग्न्यराम दशरथराम बलभद्र [1]कृष्ण कल्किन इत्येतान् बृहद्वृत्तविमाने गर्भागारं द्वादशधा विभज्य आग्नेय्यां पूर्वभागे तप्तहाटकसन्निभं रक्तपद्मारूढं वितस्तिविस्तृतं मत्स्यरूपं, पश्चिमे अञ्जनाभं[2] षोडशाङ्गुलविस्तृतं तदर्धोच्छ्रयं कच्छपं चतुरश्रपीठसंस्थितं, [3]वराहवदनं श्यामलं चतुर्भुजमुर्व्याश्रितोत्सङ्गं[4] पीताम्बरधरं शङ्खचक्रयुतं नरवराहरूपं, [5]दंष्ट्राकराल-सिंहास्यं सटाऽऽटोपं मुक्ताभकं चतुर्भुजं वीरासने संस्थितं नरसिंहं, वामनं श्यामाङ्गं ब्रह्मचारिव्रते स्थितं, जामदग्न्यं दूर्वाभं रक्तवल्कलसंवृतं [6]टङ्कहस्तं जटाधरं, रामं रम्यविभूषणं चापबाणधरं सीतादेव्या समन्वितं सिंहासनसमारूढं, हलिनं [7]शङ्खाभं नीलाम्बरं सीरिणं बलभद्ररामं, कृष्णं यौवनशालिनं नील-कुञ्चितकुन्तलं लीलायष्टिधरं, कल्किनं रक्तसप्त्यधिरूढं भिन्नाञ्जनाभं कवचो-ज्ज्वलसन्नाहं करवालकरम् एवं आग्नेयादीशानान्तं[8] [9]द्वारपादं विहाय नवभागेषु दशावतारान् संस्थाप्य[10] पश्चिमे भागे अनिरुद्धमादिमूतमनन्ताऽत्मानं स्थापयेत् एतेषां [11]पृथक् पृथग्वा विमानं कल्पयेत् । एकत्र स्थापिते सर्वदानफलं सर्वयज्ञफलं प्राप्य विष्णुलोके महीयत इति विज्ञायते ।

अथ पर्वतोत्सङ्गे नदीतीरे विष्णुच्छन्दविमाने मत्स्यकूर्मौ सहैव पूर्ववत् । ब्रह्मेशाभ्यामर्चितं सर्वतोभद्रे अञ्जनाकारे सोमच्छन्दे वा अरण्ये वाराहं मह्याश्लिष्टं शयानमासीनं स्थानकं वा वीशवासुकियुतं पुण्यधर्माभ्यां पूजितं पुष्टिकाकुमुद्वती व्याजने कुड्यद्वारोभयतः ब्रह्मश्रीः राजश्रीः चत्वारो वाहनं वेदाः शैषिकस्तु पुलिन्दाख्यो मुनिः । शेषं युक्त्या कारयेत् ।

---

1. क. ग. हलिकृष्ण. 2. B. अञ्जनाभं. 3. क. वराहवदनास्यं. 4. छ. सितोत्सङ्ग. 5. क. दंष्ट्राकरालमास्यं B. दंष्ट्राकरालस्यं. 6. नगस्थं. 7. B. शङ्खाभेद. 8. क. प्रागन्तं. 9. B. दश 10. A. संस्थाप्य मध्ये पश्चिमे. 11. एतेषां प्राग्विमानं.

SGDF Sri Gargeshwari Digital Foundation

पर्वताकारे नन्द्यावर्ते सर्वतोभद्रे पौष्टिकोर्जालपत्रस्वस्तिकान्यतमे उपरितले नृसिंहं स्फटिकोपलमध्ये वा उत्कुटिकासने स्वस्तिकासने वा आसीनं जानुप्रसारितोत्तम्भद्विबाहुं शङ्खचक्रधरं वामदक्षिणोत्तम्भजानुस्थैकहस्तं प्रसारितावलम्बितोरुस्थैकहस्तं शङ्खचक्रधरं आसने कुञ्चितैकाङ्घ्रिं प्रसारितान्याङ्घ्रिं ऊरुसमवरदैकहस्तं शङ्खचक्रधरं वा सिंहासने चतुर्भुजं ब्रह्मेशाभिष्टुतं वा देवीभ्यामृषिभ्यां यज्ञतीर्थाभ्यां ब्रह्मेशाभ्यां सामभूतीशाभ्यां वाहनशैषिकाभ्यामासीनं, गारुडभौतिकसोमच्छन्द चतुःस्फुटायतया वामनं त्रिविक्रमं श्यामलाङ्गं द्विबाहुं ब्रह्मचारिव्रते स्थितं वामहस्तधृतछत्रमन्यहस्तधृताषाढं कनकशङ्खिलाभ्यां मुनिभ्यां युतं वामनाकारं, त्रिविक्रमं जानुसमं नाभिसमं वा उद्धृतैकपादं स्थितदक्षिणचरणं चतुर्बाहुं द्रुहिणक्षालिताम्बजह्नुकन्यायुतोद्धृतचरणं बलिं वामनयुतं वीशार्दितं भृगुं चन्द्रादित्यनमस्कृतं, श्रीप्रतिष्ठितके महाशङ्खे वा जामदग्न्यं, श्रीप्रतिष्ठितके महाशङ्खे वा रामं सीतासौमित्रियुतं हनुमद्भरताभ्यां, स्वस्तिके चतुःस्फुटे वा बलभद्ररामं, गणिकाविहारकुम्भाकारत्रिकूटमहाहंसान्विते रुक्मिणीवीशाभ्यां वा संयुतं श्रीदाम्ना मायूरके कूर्मे चत्वरे वा, कर्किणं पूर्ववत् स्थापयेत् ।

वैराग्ययोगैश्वर्येप्सुः मत्स्यकूर्मौ राजराष्ट्रविवृद्धये वराहं शत्रुदस्युविनाशायापराजितत्वकाङ्क्षी नृसिंहं राज्यलाभाय विद्यार्थं वामनं त्रिविक्रमञ्च जामदग्न्यं धर्मवृद्धिसुखाकाङ्क्षी रामं योगार्थी सार्वभौम (त्व?) कामो बलभद्ररामं भोगैश्वर्यसुखप्रीत्यै कृष्णं पापौघविध्नाय कर्किणं पूजयेदिति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
दशावतारविधिर्नाम सप्तत्रिंशोऽध्यायः ॥



SGDF
Sri Gangeshwara Digital Foundation

## ॥ अथ अष्टत्रिंशोऽध्यायः ॥

### प्रकृतिपुरुषयोः स्वरूपम्

प्रकृतिपुरुषौ [1] उभावनादी । [2] ताभ्यां लोकप्रवर्तनम् । [3] विकारगुणाः सर्वे [4] प्रकृतिसमुद्भूताः । कार्यकारणकर्तृत्वे हेतुः प्रकृतिः । सा प्रकृतिः श्रीरिति व्याख्याता । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः, [5] प्रकृतिस्थः प्रकृतिजान् गुणान् भुङ्क्ते । प्रकृत्यैव सर्वाणि कर्माणि [6] । तस्मात् सर्वप्रयत्नेन श्रियं देवीं पूजयेत् । [7] सा च प्रसादानुग्रहपरा वैष्णववत्सला । ततः श्रियन्तु साधयेद्यत्नात् आमृत्योः श्रियमेव काङ्क्षेत । दुर्लभां [8] नैनामवमन्येतेत्येवमाद्याः श्रुतयो [9] गृणन्ति ।

### श्रीपूजाविधिः, श्रीस्वरूपम्

तस्मात् ग्रामनगरपत्तनादिषु नृपवेश्मसु [10] द्विजोदवसितेषु च पूजयेत् । श्रीवत्सनन्द्यावर्त [11] नन्दीविशालोत्फुल्लसर्वतोभद्रान्यतमे मन्दिरे इन्दिरां सुमुखीमाबद्धपट्टमकुटां मुक्तालङ्कारमालिकां [12] सर्वरत्नमण्डित [13] मुक्ताभरणविभूषितगात्रिकां [14] बद्धपीनस्तनीं [15] कृशमध्यां पृथुतरनितम्बबिम्बां श्वेतकौशेयवस्त्रां देवीं देदीप्यमानमेखलां [16] अनादियौवनसौभाग्यां धृतहस्तसितपङ्कजयुगां [17] वरदैकहस्तां धृतरत्नमञ्जरीं वा द्वाभ्यां हस्ताभ्यां धृतकमलां हृद्यां सहस्रादित्यसमप्रभां मन्दारमालालङ्कृतां देवीं पद्मासनसमारूढां छायायां कल्पतरोः [18] संस्थाप्य तस्याः पार्श्वे देवेशं तामुपलालयन्तं संस्थाप्य देव्याः पार्श्वे [19] स्यमन्तककौस्तुभचिन्तामणीन् शङ्खपद्मनिधी संस्थाप्य [20] क्षमाविभूतिशान्तिकान्तिभिः व्यजन-

---

1. B. उपेतावनादी. 2. B. अनादिनिधनाभ्यां. 3. B. विदुः. 4. म. प्रकृत्युत्पन्ना. A. प्रकृत्यात्पन्नाः. 5. A. प्रकृतिस्थः पुरुषः. 6. A. क्रियमाणानि करिष्यमाणानि च भवन्ति. क्रियमाणानि तस्मात्सर्वेत्यादि B. कोशपाठः. 7. A. B. सा च प्रसन्ना दासानुग्रहवरा. 8. छ. तत् A. तां. 9. छ. गृह्णन्ति. 10. A. द्विजोदवसितेषूद्यानेषु च. 11. क. नदीविशाल. 12. A. मौलिकां. 13. ग. रत्न. मण्डित. ब. 14. B. गात्राबद्धपीन. 15. छ. अङ्कुश. 16. A. आदियौवन. 17. छ. अभयवरदैक. 18. क. संस्थापितां. 19. च. सान्द्रकौस्तुभ झ. समन्दक. 20. म. लक्ष्माविभूति.

SGDF
Sri Gargeshwari Digital Foundation

हस्ताभिः इन्द्रशैत्वधिपाभ्यां द्वारपालकाभ्यां रक्तपङ्कजमध्ये[1] स्थापयेत् । एवं [2]स्थापितायां देवदेव्याममूत्यसमृद्धयलक्ष्म्यो नश्यन्ति । अथवा पार्श्वयोः गजाभ्यां उद्धृतकुम्भजलास्रावयुतमौलिकां वा स्थापयेत् । पुण्या प्रजा धनायूंषि यशः श्रीः प्रज्ञायोगर्धयश्च[3] भविष्यन्ति । अतः सम्यक् प्रयत्नेन श्रियं संस्थाप्यार्चयेदिति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
स्वतन्त्रलक्ष्मीलक्षणं नाम
अष्टत्रिंशोऽध्यायः ॥

---

## ॥ अथ एकोनचत्वारिंशोऽध्यायः ॥

### परिवारविधानम्

अथातः [4]परिवारालयविधानम् । मूलागारविस्तृतसमं पादाधिकमर्धाधिकं वा । परितः प्राकारं मण्डपं वा पुरस्तात् द्विगुणम् । तन्मध्ये वाहनागारमुत्तरे तत्सूत्रे [5]शैषिकावासं गरुडगोपुरयोर्मानं यावत्तावद्गोपुरचक्रयोः तावच्छङ्खध्वजरवमहाभूतानामेवं द्वित्रिचतुःपञ्चषट्सप्तप्राकारान् कल्पयेत् । सप्तप्राकारमत्युत्तममेकन्त्वधमाधमम् । गर्भार्धं परिवाराणामायतनम् । यद्यद्रूपं [6]ध्रुवरूपं तद्रूपपरिवाराणाम् । सेनेशमासीनं कुर्यात्सर्वत्र । शयने सर्वेषां स्थानकमासीनं वेति केचित्[7] । प्रागेव वीशमन्येषां ध्रुवद्रव्येण कारयेत् । वीशं रविं गुहं विघ्नं धिषणां ज्येष्ठामश्मनैव कारयेदिति भृगुः । गर्भागारद्वारे मणिकसन्धये द्वितीये[8] तापसवैखानसौ[9] सोपानमध्ये श्रीभूतं विमानस्य बहिः प्राच्याद्युत्तरान्तं [10]न्यक्षविश्वकर्ममित्रक्षत्तृन् , इन्द्राग्नियमनीलवरुणवायुकुबेरेशान् क्रमेणैव, गोपुराद्दक्षिणे

---

1. म. मध्यमे. 2. B. स्थापिते देवदेव्या. 3. क. योगर्धिश्च. घ. देवदेव्यामैश्वर्यसमृद्धिस्त्वाहना अलक्ष्मीर्नश्यति. 4. म. परिवारविधानम्. 5. म. शैषिकागारं. 6. यद्ध्रुवाणां रूपं. 7. छ. केचिद्वदन्ति वीशमन्येषां. 8. क. द्वितीये द्वारे. 9. म. सिद्धिदौ. 10. न्यक्षमित्यादि द्वितीयान्ताः पठ्यन्ते क कोशे.

SGDF
Sri Gangeshwari Digital Foundation

ब्रह्माणं वामे किष्किन्धं तद्बहिः वक्रतुण्डानन्तौ रविभौममन्दहेमश्यामसितभृगुसोमरुद्रान् प्रागादीशानान्तं तृतीये गुहहवीरक्षकदुर्गारोहिणीमातृधिषणाज्येष्ठापुष्परक्षकसप्तर्षिमहाभूतबलिरक्षकान् क्रमेण स्थापयेत्। मूर्तिभेदप्रतिष्ठाचेत् तत्रोक्तविधिना कारयेत्। अत्र [1]सूत्रप्रदर्शितविमानानि परिवाराणां [2]मानालङ्कारभेदाश्च तन्त्रेणैव, न कार्त्स्न्येनोक्तानि।

वर्णहीनं [3]वा उपलजम्। [4]वर्णयुक्ते नाहाद्यविहीनं प्रकल्प्य वर्णं योजयेत्। आयुःश्रीकीर्तिवृद्धिदं सौम्यं सर्वकामफलप्रदं स्थानकं, पुण्यवृद्धिदमासनं, शयनं योगैश्वर्यप्रदम्। तस्मात् स्थानकसुखासनशयनयोगासनान् क्रमेण आश्रमिणः कुर्वन्तीति भृगुः। तस्मात् सम्यक् परीक्ष्य इच्छानुरूपं कारयेदिति [5]विज्ञायते॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
परिवारालयविधानं नाम एकोनचत्वारिंशोऽध्यायः॥

---

## ॥ अथ चत्वारिंशोऽध्यायः ॥

### महापूजारूपकल्पनम्, दारुसङ्ग्रहः

अथ महापूजारूपकल्पनं व्याख्यास्यामः। महामूर्तिं आयुःश्रीकीर्तिमिच्छन् शिलया, प्रजापुण्यवृद्धिमिच्छन् ताम्रेण, योगैश्वर्यसुखार्थी दारुणा, सुवर्णभूम्यादीच्छन् मृण्मयेन कल्पयेत्। महारूपं मृदा चोपलैरेव कारयेत्। तस्य पूर्वं [6]मृदाहरणात् शूलग्रहणं कारयेत्। [7]शुभर्क्षे पूर्वोक्तगुणसम्पन्नं गुरुं स्रग्वस्त्राभरणादिभिरलङ्कृत्य अनुज्ञाप्य 'जितं त' इति भगवन्तं प्रणम्य 'प्रतद्विष्णुस्तवत' इति देवागारं प्रदक्षिणीकृत्योक्तलक्षणसम्पन्नं शिलेनमम्बरादिभिरामन्त्र्य[8]

1. क. सूत्रे. 2. छ. नामलङ्कारभेदानि तन्त्रैकासौम्येनोक्तविहीनं वा उपलक्षणं 3. A. वोपलक्षणम्. 4. क. वर्णं युक्तमन्यविहीनं. 5. A. इति कश्यपः. 6. B. मृण्मयार्थं छ. दारुणा. 7. क. शुभर्क्षे शयननक्षत्रे. 8. A. अलंकृत्याभिमन्त्र्य.

SGDF Sri Gargeshwari Digital Foundation

वास्याकुठारादीनाहृत्य[1] शैषिकचक्रौ सप्तविंशतिभेदैरभ्यर्च्यालङ्कृत्य यानमारोप्य पूर्ववद्गत्वा उक्तलक्षणसम्पन्नं द्रुममाश्रित्य संशोध्य 'वृक्षराजं देवावासं सुशाखिनं [2]विरिञ्चिनिर्मित' मिति, एतस्योत्तरे अमितं पश्चिमे अनपायिनं [3]परश्वादि 'भवते भवा' येत्युक्त्वा दारुचक्रान्तरे अभ्यर्च्य अमिताङ्घ्रिपयोर्मध्ये अग्निं समाधाय आघारान्ते अतो देवादि[4] वैष्णवं रौद्रं ब्राह्मं कौबेरं मूलहोमञ्च हुत्वा भूतेभ्यो बलिं दत्वा सहस्रशीर्षादिना तरुमभिमन्त्र्य[5] गुरवे दक्षिणां दत्वा पुण्याहं वाचयित्वा तन्मूलं 'सोमं राजान' मिति घृतेनालिप्य 'शन्नो देवी' रिति क्षीरेण च अर्घ्याचमने[6] दत्वा [7]आशीर्भिराघोष्य 'विष्णुस्त्वां रक्ष' त्विति प्रतिसरं बद्ध्वा प्रभाते स्नात्वा बलिं प्रक्षिप्य [8]पार्श्वे 'वृक्षराजाय देवावासाय [9]सुशाखिने [10]विरिञ्चिनिर्मिताय [11]सुपत्राय सुपुष्पाय वनस्पतिभ्यो द्यावापृथिवीभ्यां स्वा' हेति व्याहृत्यन्तं हुत्वा [12]विष्णवे श्रीधराय वराहायोर्वी-सन्धारणाय सर्वव्यापिने श्रियै हिरिण्यै ख्यातीशाय चिरायुषे ब्रह्मणे स्थाणवे [13]सर्वदर्शिने चक्रायामिताय देवेभ्यो ग्रहेभ्यो नागेभ्यः स्वाहेति व्याहृत्यन्तं हुत्वा अग्निं विसृज्य परश्वादीनभ्यर्च्य आदाय 'रुद्रमन्य' मित्यभिमुपस्थाय 'नमो वरुणः शुद्ध' इति जलेनाऽप्लाव्य प्रदक्षिणीकृत्य प्रत्यङ्मुखः स्थित्वा [14]आत्मानमच्युतं ध्यात्वा 'भवते भवा' येति[15] वृक्षस्य दक्षिणे 'सोमं राजान' मिति [16]पश्चिमे '[17]नाथपा' ले त्युत्तरे 'प्रससे' ति प्राच्यां छेदयित्वा पतनादीनुपलक्ष्य मुखं पार्श्वं पृष्ठमिति ज्ञात्वा त्वगादीनुन्मुच्य सारमादाय 'वसोः पवित्र' मिति [18]करीषेणालिप्य [19]ध्वजपिञ्छादिभिरलङ्कृत्याघोष्य

---

1. छ. हृत्वा. 2. B. निर्मितममितमिति. 3. छ. पार्श्वयोः भूर्भुवस्सुवरि-त्युक्त्वाऽभ्यर्च्य दारु छ. पार्श्वादेर्भवति. B. भवस्येत्युक्त्वा दारुचक्रान्तरे. 4. म. B. वैष्णवमिति न दृश्यते अतो देवादीति न दृश्यते. 5. A. अभिवन्द्य. 6. क. आचमनानि. 7. वाद्यैराघोष्य. 8. B. तत्पात्राल्लब्धपुष्पैः वृक्ष. 9. B. शाखिन इति पाठः. 10. य. इदं नास्ति. 11. B.सुक्षत्राय. 12. इतः प्रभृति पश्चाद्व्याहृत्यन्तं गलितं ख कोशे. 13. A. सर्वाशिने. 14. B. आत्मनि. 15. B. भरदेवेति. 16. A. प्राङ्मुखः. 17. ख. अर्धपात्रेति. 18. छ. कर्षेण सर्वत्र च. 19. म. इत आरभ्याघोष्येत्यन्तं न दृश्यते.



SGDF
Sri Gargeshwari Digital Foundation

[1] रथादीनारोप्य अगारं गत्वा अमितानपायिनौ संस्थाप्य देवेशं प्रणम्य शुभाशुभं ज्ञात्वा शान्तिं हुत्वा आरभेतेति [2] विज्ञायते ॥

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे महापूजारूपकल्पनं नाम चत्वारिंशोऽध्यायः ॥

---

## ॥ अथ एकचत्वारिंशोऽध्यायः ॥

### शूललक्षणम्

अथ शूललक्षणम् । [3] प्रोक्षणैः प्रोक्ष्य अतो देवादिना अग्रं 'रुद्रमन्य' मिति [4] मध्यं 'ब्रह्मजज्ञान' मित्यधस्तादभिमृश्य गोदानसूक्तेन [5] वास्येन (स्याः?) तक्षयेत् । पश्चाच्छिल्पी भगवन्तं [6] ध्यात्वा ऊर्ध्वभागे दक्षिणे [7] दक्षिणं करं वामे वामं करं मध्ये वंशदण्डं अधोभागे तथा [8] पादादूरुदण्डायामं षड्विंशत्यङ्गुलं जान्वोर्भागं जङ्घे वा ऊरुसमे चरणौ [9] जानुसमौ पार्ष्णी चतुरङ्गुले [10] पुरस्तादादित्याङ्गुलमूरू जङ्घे च भवत इत्यङ्गिराः । कटिदण्डायामं चतुर्यवाधिकं ऋत्विक्परिणाहं क्रियाङ्गुलं कोलकं शिखायामविस्तारमर्धाधिकाङ्गुलं पलाशमुकुलोपमं वंशदण्डं चतुरश्रं विस्तारं भागायाममश्विनीयुतं षष्ट्यङ्गुलं वक्षोदण्डायामं द्वात्रिंशदङ्गुलं बहुलमर्धाधिकं तालं विस्तारं पर्वपार्श्वयोर्भुजभेदेन [11] शिखाः कार्याः । शिखायामं कोलकं तदर्धविस्तारं वक्षोदण्डं त्रिभिश्छिद्रैः तद्वत्कटिदण्डश्च । पार्श्वदण्डायामं प्राजापत्यविस्तारमर्धाधिकं त्रिमात्रमूर्ध्वाधश्शिखामानं कोलकं बाहुदण्डायाममङ्गनायुतं [12] त्रिष्टुप् प्रकोष्ठदण्डायाममेकोनविंशत्यङ्गुलं भुजनाहं[13] प्रादेशपरिमण्डलं प्रकोष्ठं त्र्यस्त्र्यङ्गुलं [14] सुत्रवदानुपूर्व्येण कार्श्यवत् भवति ।

---

1. B. रथादिना. 2. इदं क कोशमात्रे दृश्यते. 3. क. दारु प्रोक्षणैः 4. छ. मध्यमं. 5. वास्येनेति क कोशे नास्ति. संलक्ष्येदित्यस्ति. 6. क. सहध्यात्वा. 7. ख. दक्षिणं 8. क. पाददण्डमूरु. 9. छ. अर्धजानु. 10. क. अङ्गुलं B. पुरस्तादित्यङ्गुलं. 11. छ. शिखरकार्यं. 12. क. त्रिकं प्रकोष्ठ. B. अनुष्टुप् प्रकोष्ठ 13. छ. नाभं 14. ग. सूत्रवानुपूर्व्येण.

SGDF
Sri Gargeshwari Digital Foundation

[1]जाम्बूनदरौप्यशुल्बान्यतमैर्वा[2] अधिकप्रादेशेन पाणितलं करोति । ऊरुमूलपरीणाहमृत्विगङ्गुलं पृष्ठफलकामानं प्राणायामाङ्गुलं वस्वङ्गुलं वा करोति । [3]अर्धाधिकपञ्चाङ्गुलं चतुरङ्गुलं त्र्यङ्गुलं विस्तारं रुक्मरूप्यशुल्बतरूणामन्यतमेन मौलिदण्डं रुक्मरूप्यताम्रान्यतमेन शूलं भवितव्यमित्याचष्टे भृगुः ॥

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे दारुशूललक्षणविधानं नाम एकचत्वारिंशोऽध्यायः ॥

---

## ॥ अथ द्विचत्वारिंशोऽध्यायः ॥

### शूललक्षणविस्तरः, पौराणिकस्थले विशेषः देव्यादीनां विधिः

[4]स्थानके चतुरश्रमासनेऽष्टाश्रं शयने वृत्तमेवं कारयेत् । मेढ्रादानाभेश्चतुरश्रं तद्ब्राह्ममिति [5]नाभेर्हिक्कान्तरमष्टाश्रं [6]भवभागमिति [7]हिक्कया मूर्धपर्यन्तं वृत्तं [8]त्रैनेत्रमित्येव [9]त्र्यंशं शूलमित्यात्रेयः । पौराणिकेऽपि पुराणं यत् तदेव कुर्यात् । अन्यथा राष्ट्रस्य यजमानस्य राज्ञो महत्तरो दोषो भवति । देवीनां वंशायामं वेदाधिकशक्करी पार्श्वायामं रसाधिकं [9]त्रिंशदङ्गुलं [10]वक्षः चतुर्विंशदङ्गुलं[11] विस्तारं रसं तदर्धं बहुलमर्धाधिकं द्विमात्रं [12]शिखायाममध्यर्धविस्तारं काव्यायाममृत्विग्विस्तारं(?)रसमुत्सेधं कोलकं शिखायामं सार्धमात्रं तदर्धमात्रं तदर्धविस्तारमूरुविस्तारं पावकमग्रं द्वियवाधिकं कोलकं जङ्घामूलविस्तारं [13]यवहीनांशुशुक्षणिः ग्रीवाविस्तारं कोलकं बाहुविस्तारं यवाधिकाग्निरग्रविस्तारं

---

1. B. नेत्यत्रावरात्रिक. 2. क. B. तामार्धाधिक. 3. अर्धाङ्गुलं वा करोति इत्यधिकं घ. कोशे. 4. आसनभेदानीत्यधिकं छ. कोशे. 5. A. छ. नाभेरष्टाश्रं 6. ख. भवगमिति. ग. B. भगवद्भागं. 7. हिक्कायां ग. छ. 8. ग. त्रिनेत्रपर्यन्तं. 9. ख. क्रमं. 10. क. पक्ष्मदण्डं. 11. ख. अङ्गुलविस्तारसं. 12. छ. शिखायां B. शिखायुक्तं. 13. आशुशुक्षाग्रविस्तारं.

SGDF
Sri Gargeshwari Digital Foundation

कोलकं प्रकोष्ठविस्तारमर्धाधिकं तत्तमग्रविस्तारं द्वियवाधिकमवं हस्तपादतलौ कर्णौ ताम्रसूत्रेण योजयेत् । न [1]कीलबन्धैः । प्रमाणहीनं सर्वप्रजामारणम् । तस्मात् ज्ञात्वैव बुद्ध्योह्य (हित्वा?) यत्नतः कारयेत् । [2]शूलानि प्रमाणयुक्तान्यादाय प्रोक्षणैः प्रोक्ष्य रात्रिसूक्तेनाभिमृश्य विष्णुगायत्र्या [3]तत्तत्स्थाने संयोज्य स्थापयेदिति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे

आसनभेदादिनिर्णयो नाम द्विचत्वारिंशोऽध्यायः ॥

---

## ॥ अथ त्रिचत्वारिंशोऽध्यायः ॥

---

### शूलस्थापनविधिः

अथ शूलस्थापनम् । उदगयने आपूर्यमाणपक्षे सुनक्षत्रे सुतिथौ पूर्वोक्तगुणसम्पन्नानुक्तदोषविवर्जिताननुज्ञाप्य तैरुक्तविधानेनाचरेत् । तत्र स्थापकाश्चत्वारः सुलुप्तश्मश्रुकेशाः सुवस्त्राः अपराह्णे उपवासव्रतं कुर्युः । सोपवासं शिष्यं हिरण्यपवमानैः "अणोरणीया" नित्यनुवाकैश्चाभ्युक्ष्य [4]गुरुः शिष्यस्त्व मित्याहरेत् । तेन शिष्यः पापात् प्रमुच्यत इति । [5]स पत्नीसहितः श्रुत्वा[6]कल्प विधिं भगवन्तं [7]ध्यात्वा श्रद्धाभक्ती पुरोधाय निशायां [8]संविशेत् । प्रभाते स्नात्वा [9]शुचिः शुचिवासस्समन्वितोऽन्तर्जलगतः अघमर्षणं कृत्वा प्राणायामं [10]सहस्रं शतं वा अष्टयुतमभ्यसेत् । प्राजापत्ये मुहूर्ते अद्भिः प्रक्षाल्य पञ्चगव्यैः स्नापयित्वा "नमो वरुणः शुद्ध" इति [11]तैलेन शूलमालिप्य "शन्नो देवीः" "सोमो धेनु" मिति मध्वाज्यमिश्रमालिप्य "भूः प्रपद्य" इति देवेशं

---

1. ग. विल. 2. B. शूलानीति न दृश्यते. 3. छ. तत्र स्थाने. 4. छ. गुरुः शिष्यस्त्वमित्युदाहरेत घ. गुरुं शिष्यत्वं. क. गुरुं शिष्यत्वमाचरेत्. 5. गुरुं स्वपत्नी सहितं कृत्वा. क. A. सपत्नी. 6. क. कल्पविधं. 7. क. स्नात्वा. 8. क. स्वपेत्. 9. शुचिरप्यशुचिः. 10. घ. अष्टसहस्रं चतुःषष्टिसंयुतं च. 11. तिलतैलेन.

SGDF
Sri Gargeshwari Digital Foundation

नमस्कृत्य "परं रंह" इति पीठादादाय "प्रतद्विष्णुस्तवत" इति श्वभ्रमध्ये देवेशं संस्थाप्य विष्णोर्दक्षिणतः शूलं "मधु वाता" इति मधुना प्रक्षाल्य "स्वस्ति दा" वीति प्रोक्ष्य "वसोः पवित्र" मिति पञ्चगव्यैः देवेशं संस्नाप्य तत्रावशिष्टगव्यैः "आपो हि" ष्ठेति तत् शूलं प्रोक्ष्य पश्चाद्देवेशं [1]क्षीरघृत-मधुसिद्धार्थोदकाक्षतोदककुशोदकगन्धोदकैः "शन्नो देवीरग्न आयाह्यग्निमीले पूनस्तस्येमा ओषधयोऽभित्वा शूर [2]चत्वारि वा" गिति [3]संस्नाप्य "आप्याय" स्वेति पुनस्संस्नाप्य वस्त्रोत्तरीयचित्रकक्ष्याभरणादिभिरलङ्कृत्याभ्यर्च्य शूलमपि सहस्रशीर्षादिना अग्रे एकाक्षरादिना मध्ये विष्णोर्नुकादिना अधस्तादभिमृश्य यवसर्षपमिश्रेण चन्दनेनालिप्य देववत् [4]ध्यात्वा स्थापकान् वस्त्रोत्तरीयाभरणादि-भिरलङ्कुर्यात् । ततो देवेशं प्रणम्याभ्यर्च्य पायसादीन् निवेद्य दक्षिणां दत्वा मूलागारस्य दक्षिणे यमपावकयोरन्तरे देवेशं संस्थाप्य तस्य दक्षिणे शूलं पुण्याहं वाचयित्वा "[5]स्वस्ति दा" इति प्रतिसरं बध्नीयात् । शूलमपि तथा कृत्वा बैल्वशयने अण्डजादीनास्तीर्य "यद्वैष्णव" मिति प्राक्शिरः [6]शाययीत । श्रीवृक्षफलके शूलं सोत्तरच्छदं शाययेदिति विज्ञायते ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
शूलस्थापनविधिर्नाम त्रिचत्वारिंशोऽध्यायः ॥

---

## ॥ अथ चतुश्चत्वारिंशोऽध्यायः ॥

### शूलस्थापनविस्तरः, प्रसङ्गादग्निस्वरूपकथनम्

एवं कृत्वा प्राकाराद्बहिरुत्तरे भूमियज्ञं तथा हुत्वा प्राच्यादिमध्यपर्यन्तं पञ्चस्वाहवनीयादीन् पूर्ववत् स्थापयेत् । [7]आघारस्थानानि अथैषां संस्थानं

---

1. च. क्षीरमधुघृत. 2. चत्वारि वेति (?) 3. संस्नाप्येति खकोशे नास्ति. 4. B. ज्ञात्वा. म. स्मरेत्. 5. च. स्वस्तिदेवेति. 6. क. शाययित्वा. 7. ख. आकार-स्थानान्यथैषां स्थानम्.

SGDF
Sri Gargeshwari Digital Foundation

लोकाः । तस्मात् चतुरश्रमाहवनीयं स्वर्गलोकमिति औपासनविधानेन । चन्द्रार्धाकृतिमन्वाहार्यमन्तरिक्षलोकमिति ऊर्ध्ववेद्यां दक्षिणोत्तरं [1]द्वात्रिंशत [2]प्राक्प्रतीच्यन्तरं षष्टिरेवं द्विवेदिसहितं विस्तारोत्सेधं भागं रसनिम्नमेवं कारयेत् । गार्हपत्यं पूर्णचन्द्राकृतिं भूलोकमिति ऊर्ध्ववेदिः षट्त्रिंशदङ्गुलं समम् । आवसथ्यं त्रिकोणं महर्लोकमिति ऊर्ध्ववेद्येकभुजं षड्यवाधिकमष्टचत्वारिंशदेवं [3]त्रिभुजं द्विवेदिसहितम् । सभ्यं चतुरश्रं जनो लोकमिति । श्रामणकाग्निकुण्डं ब्रह्मसोमपितृस्थानसमन्वितं विधिना कारयेत् । एतेषामाघारे महाप्रतिष्ठायां यथोक्तस्तथा पृथक् पृथक् भेदेनैव आघारं हुत्वा आहवनीये दौवारिकं गारुडं वैघ्नं नागराज ध्वज रव महाभूत दैवत्यं अन्वाहार्ये इन्द्राग्नि यम गुह हवीरक्षक-दुर्गामन्त्रैः गार्हपत्ये [4]नीलवरुणवायुरोहिणीमातृपुष्परक्षकदैवत्यं आवसथ्ये कुबेरेशानादित्यबलिरक्षकसरस्वतीदैवत्यं सभ्ये वैष्णवं सर्वदैवत्यं जुहुयात् । ब्राह्मं श्रीभूमिदैवत्यं गारुडं वैष्वक्सेनमार्षं पारमात्मिकमीङ्कारादीन् क्रमेणाभ्यास्ये जुहोति । प्रभाते स्नात्वा मृष्टसिक्तोपलेपनाद्यैः देवतागारं संशोध्य ध्वजपताका-पुष्पदाम धूपदीपादिभिरलङ्कृत्य शयनस्थं देवं सम्प्रगम्याभ्यन्तरं विभज्य किञ्चि-न्मानुषमाश्रित्य दैविकस्थाने स्थानकस्य आसनं चेद्ब्रह्मसूत्राद्वामे शयनं दैवमानुष-योर्मध्ये श्वभ्रं भागावगाढं [5]षोडशाङ्गुलावगाढं वा द्विगुणविस्तृतं चतुरश्रं समुपकल्प्य कारयेत् ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे

पञ्चाग्निहोमविधिर्नाम चतुश्चत्वारिंशोऽध्यायः ॥

---

1. क. त्रिंशत. 2. क. प्रागपरं. 3. म. प्राङ्निकायं निले त्रिक्षोणं 4. म. इत आरभ्य शयनस्थमित्यन्तं न दृश्यते. 5. म. षडोशेति पदं दृश्यते.

SGDF
Sri Gargeshwari Digital Foundation

## ॥ अथ पञ्चचत्वारिंशोऽध्यायः ॥

### शूलस्थापनार्थं रत्नन्यासः

[1]साक्षतोदकैः पञ्चगव्यैः प्रोक्ष्य गोमयेनोपलिप्य श्वभ्रमध्ये अधोभागे गजं "तमेकनेमि" मिति "ब्रह्मादेवाना" मिति ब्रह्मस्थाने ब्रह्ममणिं "इन्द्रं प्रणवन्त" मितीन्द्रस्थाने इन्द्राय हरितालवज्रे "अग्नावग्नि" रित्यग्निस्थाने मनःशिलामौक्तिकौ "यमो दाधार नमस्त" इति यमस्थाने अञ्जनवैडूर्यौ "वसवः प्रथम" इति निर्ऋतिस्थाने श्यामशङ्खजौ "ये ते शत" मिति वरुणस्थाने कासीसस्फटिकौ "मरुतः परमात्मे" ति वायुस्थाने पारदपुष्यकान्तौ "सोमं राजान" मिति सोमस्थाने [2] सौराष्ट्रचन्द्रकान्तौ "ईशान-ईश ईशित्र" इति ईशस्थाने गोरोचननीलाविति [3] "शन्नो निधत्ता" मिति मध्ये वायुकेरमृताश्मकं "धाता धातृ" णामिति पावकेन्द्रयोरन्तरे साध्येभ्यो [4]लोहिताश्मकं "विश्वे देवस्ये" ति यमाग्न्योरन्तरे विश्वेभ्यो देवेभ्यश्चोत्पलमणिं "अधिब्रह्मा यतता" मिति यमनीलयोरन्तरे [5]सिद्धेभ्यः प्रवालकं "इमां मूर्धन्या" इति नीलवरुणयोरन्तरे गन्धर्वेभ्यो मनःशिलां "अप्सरस्स्वति" वरुणवाय्वन्तरे अप्सरोभ्यः शुक्तिजं "यं काद्रवेया" इति वायुसोमयोरन्तरे नागेभ्यो विमलमणिं "अर्यम्णः कुम्भी" ति धनदेशानयोरन्तरे अर्यम्णः प्रवालं "[6]तं त्वोण्ये" षेतीन्द्रेशानयोरन्तरे भूतेभ्यो नीलं तस्मादुपरि "तमेकनेमि" मित्युपरि गरुडरूपं ब्रह्मस्थाने ब्रह्मणे सौवर्णं गैरिकं इन्द्राय षष्टिकव्रीहियवौ अग्नये कुलुत्थमाषौ यमाय मुद्गगोधूमौ निर्ऋतये तिलतिल्वौ वरुणाय यववंशयवौ वायवे नीवारप्रियङ्गू सोमाय गोधूमयवौ ईशानाय सर्वबीजानि तत्तन्मन्त्रेण [7]पूर्ववन्निक्षिपेत । [8]"तमेकनेमि" मित्युपरि कूर्मरूपं [9]"भूमाननोऽग्र" इति गदाचक्रासिशक्तिशरान् दक्षिणपार्श्वे वामे "तन्मा यशोऽग्र" इति शङ्खशार्ङ्गखेटकन् यथाक्रमं प्रतिष्ठापयति । श्रीवत्सपूर्णकुम्भभेर्यादर्शमत्स्ययुग्माङ्कुशशङ्खावर्तानीत्यष्टमङ्गलानि इन्द्रादीशानपर्यन्तं यथाक्रमेण

---

1. म. उदकाक्षतपञ्चगव्यैः. 2. सौराष्ट्रचन्द्रकान्तामिति सर्वत्र पाठः. 3. अत्र इतीत्यधिकं भाति. 4. छ. B. लोहिताक्षं. 5. छ. सिद्धानां. 6. तत्त्रीणीति मुद्रितपाठः. 7. छ. पूर्वं. 8. B. तमेकेति. 9. भूमानन्तोमे रेति मुद्रितपाठः.

SGDF
Sri Gargeshwari Digital Foundation

[1]"भूयाम वृत्त्या" "नमस्सुलोमि" "स एको भृत्" देवस्य त्वा" अतो देवाः" "क्ष्मामेकां" तन्मा यशोऽग्रे" "ब्रह्मा देवाना"मिति स्थापयेत्। सर्वरत्नसमन्वितं हाटकाम्बुजमध्ये कोलकोच्छ्रयं [2]जातरूपमयं श्रीरूपं कृत्वा "शं सा नियच्छ"त्विति द्वाराभिमुखं प्रतिष्ठाप्य अश्वत्थमूलशैलार्णवसरोवल्मीक-वृषशृङ्गगजदन्तजदर्भमूलगवां गोष्ठेषु मृदं सङ्गृह्य ब्रह्मादीनां यथाक्रमेण तत्तत् स्थाने तत्तन्मन्त्रेण विनिक्षिपेदिति। सरस्वतीयज्ञभाण्डस्रुक्स्रुवकमण्डलूनि सौवर्णेन वृद्ध्यर्थं ब्राह्मणानां[3] क्षत्रियाणां ध्वजशस्त्रायुधानि वैश्यानां [4]तुलातोदौ शूद्राणां हलं सुवर्णेन कृत्वा "हिरण्यरूप" इति स्थापयेदिति। मेघविद्युल्लता[5] रूपौ कृत्वा राष्ट्राभिवृद्ध्यर्थं "ये ते शत"मिति प्रतिष्ठापयेदिति ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
रत्नन्यासविधिर्नाम पञ्चचत्वारिंशोऽध्यायः ॥

---

## ॥ अथ षट्चत्वारिंशोऽध्यायः ॥

### शूलस्थापनविस्तरः

एवं कृत्वा प्रोक्षणैः प्रोक्ष्य श्वभ्रं वाससा आच्छादयेत्। स्थापकान् वस्त्राभरणादिभिरलङ्कृत्य ओङ्कारजयशब्दैः [6]तताद्यैराघोष्य "प्रतद्विष्णुस्तवत" इति ब्राह्मे मुहूर्ते शूलं संस्थापयेत्। ध्रुवसूक्तं जपति। [7]अविच्छिन्नं कनिक्रदादि जपन् सुदृढं सुस्थितं अचलं स्थापयित्वा "नमो वरुण"इति क्षीरेण क्षालयेत्। देव्योरप्युभयोः पार्श्वे तत्सूत्रे द्वियवान्तरे तथैव संस्थाप्य ब्रह्मकुड्यान्तरे किञ्चित् पश्चिममाश्रित्य ऋष्योः शूलं संस्थाप्य हिरण्येनोद्धृत्य [8]स्पृष्ट्वैव शूलं [9]अतो देवादि सहस्रशीर्षाद्येकाक्षराद्यात्वाहार्षादि विष्णोर्नुकादीन् जप्त्वा सभ्ये सर्वदोषोपशान्त्यर्थं शान्तिं व्याहृतिपर्यन्तमग्न्यास्ये जुहोति।

---

1. भूय आत्मवृत्त्या मुद्रितपाठः. 2. जातमयमय मति B. पाठः. 3. B. तमकेनि. 4.म. तुलां 5. रूपे इति स्यात्. 6.छ. ततानाद्यैः घ. तानकाद्यैः 7.ग. जप्त्वा. 8.छ. अस्पृष्ट्वैव. 9. म. वैष्णवं पुरुषसूक्तं च जप्त्वा सभ्ये इत्यादि.

SGDF Sri Gargeshwari Digital Foundation

### अग्निध्यानम् , आस्यहोमः

कुण्डमध्ये प्रत्यङ्मुखः [1]सर्वदेवावृतः स्वाहास्वधाभ्यां [2]ब्राह्ममासनमासीनः सप्तार्चिः समुज्ज्वलन्नूर्ध्ववक्त्रो वसति । कर्णे हुते व्याधिपीडनं चक्षुष्यन्धत्वं नासिकायां महाव्याधिर्मस्तके सर्वनाशः शेषेष्वपि दारिद्र्यं तस्मात्सर्वप्रयत्नेन आस्यं बुद्ध्वा शरोऽङ्गारेऽग्नौ जुहोति ।

तिलाज्यमिश्रं चरुं न्यग्रोधफलमात्रं अङ्गुष्ठानामिकामध्यमाभिः हुत्वा 'अग्नये वैश्वानराय जातवेदसे पावकाय हुताशनाय हव्यवाहनाय स्वाहाप्रियाय स्वाहा, इति हुत्वा सर्षपमिश्रं चरुं ' यज्ञमूर्तये योगमूर्तये विष्णवे वटपत्रशायिने [3]अनन्तशायिने पुष्करनाभाय [4]विश्वेश्वराय श्रियै पौष्ण्यै मृकण्डुजाय ख्यातीशाय सुपर्णाय शैषिकाय हलाय [5]जलाय स्वाहेति ' व्याहृत्यन्तं हुत्वा अग्निं विसृज्य देवं प्रणम्याभ्यर्चयति । स्थापकेभ्यः स्वशक्त्या निष्कादहीनं पृथक् पृथक् सुवर्णं दत्वा पश्चात् मृत्सङ्ग्रहणं [6]करोतीति विज्ञायते ।

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे शान्तिहोम (विधि)
रत्नन्यासविधानं नाम षट्चत्वारिंशोऽध्यायः ।

---

## ।। अथ सप्तचत्वारिंशोऽध्यायः ।।

### शूललेपनार्थं मृत्सङ्ग्रहणम् ।

अथ मृत्सङ्ग्रहणम् । [7]पुण्यनद्यद्रिसरस्तटाकतीरे शुद्धे देशे मनोरमे पूर्ववद्गत्वा संशोध्य अभ्यर्च्य श्रियं हरिणीं च [8]वीशशैषिकौ, प्रोक्षणैः प्रोक्ष्य पुण्याहं वाचयित्वा[9] उक्तलक्षणसम्पन्नामायुर्वर्णसमन्वितां शुभवृद्धिदां महीं महीसूक्तेनादाय शन्ति हुत्वा देवीभ्यां ऋषिभ्यां वीशशैषिकाभ्यां नदीभ्यः पर्वतेभ्यो

---

1. ख. देवयुतः. 2. कादन्यत्र ब्राह्ममासीन. 3. क. अनन्तशयनाय. 4. घ. विश्वाशयाय. 5. जलायेति घ. म. कोशयोः नास्ति. 6. म. भवतीति. 7. A. पुण्यनद्यादि. 8. A. न दृश्यते इदं पदम्. 9. ख. म. वाच्य.



SGDF
Sri Gargeshwari Digital Foundation

नागेभ्यो हुत्वा अग्निं विसृज्याऽऽशीर्भिराघोष्यागारं गत्वाऽभ्यन्तरं प्रविश्योत्तरे पार्श्वे पार्थिवं धूपदीपसमन्वितं स्थापयेत् ।

### मृत्संस्कारः

गन्धवर्णयुतं साद्यस्कं कापिलं घृतं [1]कांस्ये त्रिद्व्येकप्रस्थं [2]कुडुबं प्रस्थार्धं वा [3]तदर्धमादाय संशोध्य दधिपयोऽतसीस्नेहानेकैकं घृतात्पादाधिकं गृहीत्वा [4]उत्पूय [5]यवसर्षपगोधूमातसीतिल्वदीप्तीनां चूर्णं पृथक् पृथक् हृतमादायैकस्मिन् भाण्डे क्षिप्त्वा पिधाय मासमात्रं तदर्धं दशरात्रं वा निधापयेत् । नारशब्दाखुःर्णीत्रिप (?) चलच कृष्णामरदारुहरितालहारिद्रमरीचविडङ्गबाष्पीन् संशोध्याऽऽशोष्य त्रिपलं द्विपलं पलं वा चूर्णीकृत्य द्रोणे द्रोणार्धे आढके वा जले क्षिप्त्वा अर्धमासं तदर्धं वा निधापयेत् । न्यग्रोधाश्वत्थोदुम्बरप्लक्षखदिर-वञ्जुलासनादीनां निर्मोकं पृथक् पृथक् कुट्टयित्वा भागमाहृत्य तुलस्यपामार्ग-नन्द्यावर्तकरवीरभूपलबिल्वादित्यसाह्वयसहदेवीलक्ष्मीशमीपत्रसारे अश्वत्थाद्यजिनानि आक्षिप्यार्धमासं निधापयेत् । अश्वत्थोदुम्बरप्लक्षाणां क्षीरमेकैकं घृतार्धमाहृत्यै-कस्मिन् भाजने क्षिप्त्वा श्रीवेष्टरुजरसकुन्दुरगुग्गुलुकपित्थनिर्यासान् समभागं चूर्णं कृत्वा तस्मिन् दशरात्रं निधापयेदिति विज्ञायते ॥

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे मृदादिसंस्कृतिविधिर्नाम सप्तचत्वारिंशोऽध्यायः ।

---

## ॥ अथ अष्टचत्वारिंशोऽध्यायः ॥

### मृत्संस्कारविस्तरः ।

एवं कृत्वा अभिनवेषु कटेषु फलकेषु वा प्रोक्ष्य "उदुत्यं चित्र" मिति मृदमवकीर्य विश्वामित्रान् परिहृत्याऽऽतपेनाशोष्य गायत्र्या प्रोक्ष्य "मेदिनी

---

1. च. कांस्यं. 2. छ. त्रिकुडुबं. 3. छ, तदर्हं. 4. B. भुवंछित्वा (?)उत्पूय. 5. M. यवेति न दृश्यते.

SGDF Sri Gargeshwari Digital Foundation

देवी" ति पात्रेष्वापूर्य एवं क्रमेणाऽशोष्य देवागारोत्तरे उलूखलमुसलौ प्रक्षाल्य संस्थाप्य [1] ब्रह्मेश्वरावभ्यर्च्य "श्रिये जात" इत्यापूर्य अतो देवादिभिश्चूर्णयित्वा अभिनवेषु भाण्डेषु [2] धूपितेषु वकुलचम्पक [3] मल्लिकादिभिर्वासितेषु अहोरात्रमापूर्य नादेयं जलमादायोत्पूय "इदमापश्शिवा" [4] इत्यपोऽभिमन्त्र्य "इदं विष्णु" रिति पुनःपुनः मर्दयित्वा आदाय "येते शत" मिति ब्राह्मे मुहूर्ते क्षिप्त्वा सहस्रशीर्षादिनाऽभिमृश्य एकाक्षरादिना वस्त्रेण संशोध्य अहोरात्रं निधाय [5] जलमास्राव्य पूर्वोक्तस्नेहकषायचूर्णौषधैः "ब्रह्मा देवा" नामिति संसृज्य "पूषा त" इति मर्दयित्वा चन्दनागुरुकोष्ठूशीरैलालवङ्गजातीफलाञ्जनादीनि (?) [6] पेषयित्वा "यन्मे गर्भ" इति क्षिप्त्वा [7] सुवर्णरजतताम्रचूर्णैः [8] संमर्द्य कपित्थनालिकेरत्वक्चूर्णं "इन्द्रं प्रणवंत" मिति प्रक्षिप्य "वायुप" रीति पुनः पुनः मर्दयित्वा प्रोक्षणैः प्रोक्ष्य [9] वितानाच्छादिते धूपदीपसमन्वितं त्रिरात्रमेकरात्रं वा क्षिपेत् [10] । [11] सकृत्कृत्वैवमभिनवेषु दधिदुग्धनालिकेरसलिलानि कांस्ये तदर्धं प्रस्थं वा आहृत्य संस्राव्य वकुलबदरफलसारान् पृथक् पृथक् दुग्धार्धं संस्राव्य महिषाक्षयज्ञ [12] यूपसायसशल्ककापित्थकुष्ठगैरिकान् पृथक् पृथक् तदर्धं पादं वा चूर्णीकृत्य क्षिप्त्वा [13] करञ्जाश्वत्थादिनिर्यासान् पादाधिकदुग्धेन पेषयित्वा प्रक्षिप्य त्रिफलाविश्वभेषज [14] घनचपलान् एकैकं निर्यासार्धं [15] क्षिप्त्वा नदीरोहादिक्षीरदुग्धं यथालाभं प्रक्षिप्य वस्त्रेणावेष्ट्य षड्रात्रं त्रिरात्रं वा निधापयेत् । एतेन अतोदेवादिना शूलमालिप्य प्राच्यामौपासनाग्नौ शान्तिं हुत्वा विष्णवे श्रियै हरिण्यै चिरायुषे ख्यातीशाय गरुडाय शान्ताय चक्राय शङ्खाय भूतेभ्यः सर्वाभ्यो देवताभ्य स्वाहेति हुत्वा व्याहृत्यन्तं जुहुयात् । एतत्पार्षदमिति ।

---

1. क. ब्रह्मगावकौ 2. A. सुपूजितेषु. 3. A. मल्लीभिः 4. A. इत्यभिमृश्य. 5. घ. जलमास्य. 6. B. संमर्द्य पिष्ठं. घ. सम्मर्द्यापिद्धं. 7. ट. अगतादि. 8. प्रतद्विष्णुस्तवत इत्यधिकं तत्र ट कोशे. 9. क. सच्छादने छ. नच्छादने घ. छत्रादिने. 10. ग. इति सप्ततितमः खण्डः. 11. B. सर्वत्रैवं कृत्वैवं. 12. ट. धूपसायशल्कलापिद्धकुंकुष्ठ. 13. रंजाशनादि. 14. B. घन. 15. क. क्षिपेत्.

SGDF
Sri Gargeshwari Digital Foundation

रज्जुवेष्टनम् ।

अग्निं विसृज्य नालिकेरनिर्मोकनिर्मितान् त्रिवृतानृजून् [1]रज्जून् "[2]स्वस्ति दा" इति सिरावद्रज्जुबन्धनं करोति । ततः शिल्पिना तदर्हं योजयेत् । मध्याह्नेऽब्जाग्नौ अब्जहोमं कृत्वा "मेदिनी दे" वीति मृदमभिमृश्य पारमात्मिकमविच्छिन्नं जप्त्वा [3]संयोजयेत् ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे सर्वकल्कविधिर्नाम अष्टचत्वारिंशोऽध्यायः ।

---

## ॥ अथ एकोनपञ्चाशोऽध्यायः ॥

बिम्बे रत्नन्यासः ।

हृदये पद्मरागं ललाटे जातिरत्नं ग्रीवायां मौक्तिकं बाह्वोर्वैडूर्यं नाभौ ब्रह्ममणिं मेढ्रे सौवर्णं पादयोः पुष्यकान्तचन्द्रकान्तौ एकाक्षरादिसूक्तं [4]विष्णुसूक्तं पुरुषसूक्तं दुर्गासूक्तं पारमात्मिकं[5] ध्रुवसूक्तं गोदानसूक्तं क्रमेण जपन् तत्तत्स्थाने रत्नानि निक्षिपेत् । दक्षिणेऽक्षिण "सूर्योऽ" सीति सूर्यकान्तं वामे "चन्द्रोऽ"सीति चन्द्रकान्तं श्रोत्रे "मरुतः परमा" त्मेति वज्रं दक्षिणे, वामे "सोमं राजान" मिति शङ्खं नासिकापुटयोः "रुद्रमन्यं त्र्यम्बक" मित्यमृताश्मकनीलौ आस्ये "पावका न" इति प्रवालं प्रतिष्ठाप्य पश्चाच्छिल्पिना किरीटमूर्धललाटकण्ठभ्रूनयनघ्राणोत्तरोष्ठाधरोष्ठकपोलचर्च (?) ग्रीवाबाहुजत्रुवक्षोहृदयपार्श्वकक्षप्रकोष्ठकूर्परपाण्यङ्गुलिस्तनोदरनाभिकटिपृष्ठयोनिमुष्कोरुजानुजङ्घागुल्फप्रपदपाष्र्ण्यङ्गुल्याद्यङ्गप्रत्यङ्गानि लक्षणयुतं कारयेत् ।

षण्मासं तदर्धं वा मासं वा अतीत्य पूर्वोक्तगन्धपिचु (?) कपिद्धशर्कराः पेषयित्वा दक्षिणाग्नौ पार्षदं [6]वैष्णवं हुत्वा [7]शर्करामग्निरिन्द्रादिनऽभिमृश्य

---

1. रज्जूनिति घ. म. कोशयोः न दृश्यते. 2. A. B. स्वस्तिदेवेति. 3. B.M. संयोज्य. 4. ग. विष्णुसूक्तं पारामात्मिकमीङ्कारादीन् ध्रुवसूक्तं. 5. ईङ्कारादीनिति म. ङ. कोशयोरधिकं. 3. ग. घ. वैष्णवान्. 4. B. शर्करं.

SGDF
Sri Gargeshwari Digital Foundation

"दुहतां दिव" मित्यादाय सुरभिमृचमनुद्रुत्य "वाङ् म आसन्, नसोः प्राण" इति तद्द्वारे संयोज्य शिल्पिना कारयेत् ।

## पटाच्छादनम

द्विमासमर्धं [1]पक्षं वा अतीत्य सूक्ष्मावदातं [2]सुसूक्ष्मश्लक्ष्णं सुसूक्ष्मकोमल-मम्बरमादाय गार्हपत्ये सहस्राहुतीर्हुत्वा गायत्र्या अम्बरं प्रोक्ष्य "सोमस्य तनू"रसीति संयोज्य तद्बाह्ये [3]मौक्तिक [4]मृदमालिप्य किरीटोष्णीषमकरकुण्डलहारकेयूरकटकोदर-बन्धनोपवीतकटिसूत्रप्रलम्बमेखलाङ्गुलीयक [5]पादाभरणान्यम्बराणि च कारयेत् । दशरात्रं पञ्चरात्रं [6]त्र्यहं वा अतीत्याऽवसथ्ये महाशान्तिं [7]पार्षदञ्च जुहुयात् ।

## वर्णसंस्कारः ।

श्वेतसौवर्णश्यामाञ्जनवर्णाः चतुर्युगेषु हरेः रूपम् । तस्माद्युगे युगे [8]तत्तदर्हं ज्ञात्वा कापित्थादिना वर्णयेत् । शुद्ध[9]संस्कारजान् वर्णान् ज्ञात्वा "हिरण्यगर्भ" इत्यभिमृश्य [10]गायत्र्याऽऽदाय आत्मसूक्तं जप्त्वा अतो देवादिना तूलिकाग्रेण वर्णमादाय विष्णोर्नुकादीन् जप्त्वा ललाटे "चित्रं देवाना"मिति, आभरणे "तेजो वत्सव"इति अम्बरे "भूमाननोऽग्र"इति, चक्रे "अस्मादुप"स्येति पाञ्चजन्ये "गन्धद्वारा"मिति, श्रियं, "मेदिनी दे"वीति, षड्भिः महीं, "चिरायुष"मिति मार्कण्डेयं, "यतस्स्वमासी"दिति ख्यातीशं तदर्हं, वर्णं योजयेत् । [11]ततः शिल्पी भगवन्तं ध्यात्वा मूर्धादि पादपर्यन्तं क्रमेण भक्त्या युक्त्या [12]तत्तच्छरीरे क्रमेण यावत् द्रव्यं मनोहरं [13]बुद्ध्याऽऽह्लादकरं शान्तिकाद्युज्ज्वलितं कारयेत् । तप्तहाटकसङ्काशां श्रियं, महीं श्यामलाङ्गीं, भृगुं प्रवालाभं, पुराणं सुवर्णाभं, चक्रं रविमण्डलाभं, शङ्खं चन्द्राभं कनकाभं, किष्किन्धं, श्यामलाङ्गं

---

1. पक्षमिति टकोशे न दृश्यते. मासमर्धं वेत्येव. 2. सुसूक्ष्मश्लक्ष्णमिति म ट कोशयोः न दृश्यते. 3. मौक्तिकमिति B. कोशें नास्ति. 4. A. मृदाऽऽलिप्य. 5. A. आभरणानि. 6. पक्षं द्वितयं वातीत्य B. म. पक्षं सर्वर्णमाहृत्य. 7. क. B. महाशान्तिश्च हुत्वा. 8. B. अर्हमर्हं. 9. ट. संस्कारभाक्. 10. B. गायत्र्या वा. 11. छ. तच्छिल्पिनः. 12. घ. तत्तच्छदिक्रमेण. 13. B. बुध्वाह्लादकरं शान्तिकाद्युज्ज्वलं.

SGDF
Sri Gurgeshwari Digital Foundation

सुन्दरं, रक्तं भानुं, शुक्लं [1]चन्द्रं, सुवर्णवर्णं [2]ब्रह्माणं, रुद्रं प्रवालाभं योजयेत् । मणिकं जटाधरं द्विभुजं हृदयेऽञ्जलिसंयुतं [3]शुकपिञ्छाम्बरधरं पिङ्गलाक्षं उपवीतोत्तरीयाजिनधरं, सन्ध्यां, [4]तत्पत्नीं सर्वालङ्कारसंयुक्तां सुवर्णाभां सुमुखीं मनोज्ञां हृदयेऽञ्जलिपुटां शुक्लवस्त्रां, तापसं जटिलं दण्डहस्तं शुक्लाम्बरधरं भिन्नाञ्जनाभं [5]वैखानसं, दूर्वाभं दण्डिनं कपर्दिनं रक्ताम्बरधरं वीरवेषयुतं, गरुडं काञ्चनाभम् । आपादादाजान्वानाभेराकण्ठादामूर्धं पृथिव्यप्तेजोवायुमयं [6]कालाञ्जननिभं गारुडं रूपमित्यृषयो वदन्ति । तद्वद्वाऽपि [7]बृहत्पक्षाटोपं [8]भुजस्थभुजगेन्द्रं वीररौद्रसमन्वितं दंष्ट्राकरालं श्यामोत्तुङ्गमहातुण्डं [9]ललाटात्ताम्रचूडं हृदयेऽञ्जलिपुटं कटिविन्यस्तहस्तं [10]पताकादक्षिणपाणिं वा श्यामाम्बरधरं वा पन्नगविभूषितम्[11] । शैषिकं रक्तवर्णं श्यामाम्बरधरं किरीटकेयूरहारप्रलम्बयज्ञोपवीतिनं [12]द्विभुजमेव कारयेत् । अन्येषामपि सर्वेषां रूपवर्णपर्षत्प्रभृतीनि तत्र तत्रोक्तविधिना बुद्ध्या युक्त्या ऊहित्वा कारयेत् । शूलग्रहणवत् दार्वश्मनोः ग्रहणम् । तस्मादुक्तविधिनाऽऽहृत्य स्थापयेदिति विज्ञायते ।

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे शर्करालेपनवर्णसंस्कारविधिर्नाम एकोनपञ्चाशोऽध्यायः ।

---

## ॥ अथ पञ्चाशोऽध्यायः ॥

### भगवतो रूपकल्पनम् ।

अथातो भगवतो नारायणस्याऽऽकृतिलक्षणं व्याख्यास्यामः । यस्यास्यमग्निः द्यौर्मूर्धा खं नाभिः भूः पादौ चक्षुषी अर्कनिशाकरौ दिशः श्रोत्रे ज्योतींष्याभरणानि

---

1. क. बुद्ध्वाहाटकरत्नकान्त्युज्वलितं. 2. छ. ब्राह्मं. 3. रक्तवर्णं च इति ट कोशे अधिकं. 4. B. घ. ट. तन्दर्ज्ञीं. 5. B. शाततपं. 6. B.जातं शङ्खाञ्जननिभं 7. छ. पक्षारोपं. 8. A. भुजस्थलभुजगेन्द्रं. 9. ट. ललाटान्तात्तचूढं. 10. क. पतद्दक्षिणहस्तं ? 11. ग. इति त्रिसप्ततिमः खण्डः सुवर्णाभमिति तत्र क कोशे. ट. रक्तवर्णाभं. 12. जयेशमिति ककोशे ?

SGDF Sri Gargeshwari Digital Foundation

उदधयोऽम्बरं भूतानीन्द्रियाणि । अस्याकृतेः प्रमाणं [1]कल्पितं भृग्वादिभिः । तद्धेतुभिर्नावमन्तव्यममीमांस्यम् । आज्ञासिद्धमिति ज्ञात्वा तदुक्तविधिना कारयेत् ।

### शास्त्रसिद्धबिम्बस्य फलदत्वम् ।

विधिना कारितं बेरं सर्वपापहरं पुण्यं भुक्तिमुक्तिफलप्रदम् । स्वबुद्धिक्लृप्तमशुभं पुण्यकीर्तिविनाशनम् । तस्माच्छास्त्रं समालम्ब्य बुद्ध्या युक्त्या प्रमाणयुतमेवं मनोहरं कारयेत्[2] ।

### त्रिविधं बिम्बम् ।

चित्रं चित्रार्धं चित्राभासमिति चित्रं[3] त्रिविधम् । सर्वावयवसम्पूर्णं मानोन्मान [4]प्रमाणलक्षणयुक्तं चित्रम् । तदर्धदर्शनं चित्रार्धम् । [5]पटकुड्यादिलेख्यं चित्राभासम् ।

### मानविचारः ।

ऊर्ध्वमानं भवेन्मानं प्रत्यङ्गेषु च यन्मानं तदुन्मानं अङ्गानां यत्परिणाहं तत्परिमाणमिति । विष्णुब्रह्मरुद्राणां दशतालं रविस्कन्देन्द्राणां नवार्धतालं [6]देव्योर्देवर्षीणां वेदाङ्गुलाधिकं नवतालं लोकपालामितसुपर्णानां नवतालं नरजघन्यकुब्जवामनभूतकिन्नरकूश्माण्डकबन्धानां क्रमेणाष्टसप्तषट्पञ्चचतुस्त्रिद्व्येकतालानि भवन्ति । [7]उत्तममध्यमाधमभेदे न दशतालं त्रिविधं भवति । वेदत्रिष्टुबधिकाधृतिरुत्तमं मध्यमं द्वात्रिंशदधिकमधमं त्रिष्टुबधिकम् । अधिकेन देवेशं मध्यमेन हरमधमेन विरिञ्चिमाचरेत् ।

अणुस्यन्दनरेणु[8] पिचुक्षकेशाग्रतनुकतिलयवानां क्रमेण वसुगुणितं मानाङ्गुलम् । मध्यमपुरुषस्य दक्षिणहस्तमध्यमाङ्गुलिमध्यपर्वायतं मात्राङ्गुलम् । यस्य यत्तालमानं तत्सङ्ख्यया हृतं देहलब्धाङ्गुलम् । तद्विभज्य मानाङ्गुलेन क्षेत्रवस्तुनिकेतनप्रमाणानि । गृहशय्यासनयानास्त्रायुधेध्मस्त्रुक्स्रुवादीनां मात्राङ्गुलम् ।

---

1. A. कल्पितं. 2. ग. इति पञ्च सप्ततितमः खण्डः. 3. चित्रमिति ग पुस्तके नास्ति. 4. ग. प्रमाणयुतं. 5. A. पटकुड्यादिष्वालेख्यं यच्चित्राभासम् छ. उल्लेख्यमानमूर्ध्वमानं. 6. छ. देव्योरेवमृषीणां. 7. क उत्तम मध्यमाधम. 8. ट. चबुक.

SGDF
Sri Gangeshwari Digital Foundation

बेराणां देहलब्धाङ्गुलमेवं ज्ञात्वाऽऽरभेत[1]। [2]अथोष्णीषं त्रियवाधिकं तद्वच्छिरोभागं पावकं तदधस्तादक्षिसूत्रं पुटान्तं हन्वन्तमेकैकं त्रियवाधिकं भागं गलमर्धाङ्गुलं कण्ठं चतुर्यवाधिकं रुद्राक्षं कण्ठाद्वक्षसः वक्षस आनाभेर्नाभेरासीवनकान्तमेकैकं [3]मात्रार्धन्यूनं क्रिष्ट (?) कुहूः प्राणायामयुतं त्रिष्टुपू ऊरुमानं प्रतिष्ठा जानुजङ्घे चोरुसमे चरणौ जानुसमावेवं त्रिष्टुबधिका [4]धृतिरिति [5]तलायामं पर्वताधिकपङ्क्तिर्हिक्कासूत्राद्ध हुचाङ्गनायुतं [6]सद्र (?) किष्कुप्रकोष्ठमेकोनविंशद्धस्ततलं चतुर्यवाधिकं [7]सयममिति बृहतीमङ्गुलीपृष्ठेनाहत्यैतच्छीर्षोन्मानं कर्णयोरन्तरे यमं वेदाङ्गुलं पादयवाधिकपादयुगेनाग्निनाहत्यैतत्कर्णपर्यन्तं तारकं यवाधिकरुद्राक्षेण वर्धितं पृष्ठे कर्णयोरन्तरे[8] ग्रीवाग्रविस्तारं चतुर्यवाधिकवसुमन्त्रिग्रीवाघनविस्तारं अर्धाधिकं [9]ग्रहं ग्रीवामध्यमं बृहतीमग्निना (?) गुणितं यवाधिकं

---

1. अत्र ट कोशे कश्चनग्रन्थभाग अधिकः परिदृश्यते. “अथातोऽङ्गुलिसंज्ञां व्याख्यास्यामः। मानमात्रदेहलब्धाङ्गुलाश्चेति त्रिविधा भवन्ति। तत्र परमाणु पिचुककेशाग्रकनकतिलखाङ्गुल्यन्तं क्रमादेकैकोऽष्टगुणितलब्धं तन्मानाङ्गुलमिति। मध्यम पुरुषस्य दक्षिणहस्तमध्यमाङ्गुलेः मध्यमपर्वणा लब्धं मात्राङ्गुलमिति। यस्य देहेषु यदुक्तं तद्विभज्यैकैकं देहलब्धाङ्गुलमिति विज्ञायते। पादान्मूर्धान्तं स्वहस्तेनाष्टतालोच्छ्रयं मध्यमपुरुषमित्याचार्या वदन्ति। मात्रा तत्त्वं मूर्तिर्विष्णुश्चेत्येकाङ्गुलस्य संज्ञा, कीलाकाश्विनेत्रकालब्राह्मणाश्चेति द्व्यङ्गुलस्य, मध्यमाग्निरुद्राक्षसहजाश्चेति त्र्यङ्गुलस्य भागवेदकरतारकबन्धुप्रतिष्ठाश्चेति चतुरङ्गुलस्य, तीर्थेन्द्रियभूतस्मर शर सुतसु, प्रतिष्ठाश्च पञ्चाङ्गुलस्य, षडास्याङ्गाङ्गकर्मसमयरसगायत्रीति षडङ्गुलस्य, मुनिलोकपर्वतमागरप्राणायामन्त्रि (?) मातृरोहिण्युष्णिकचेत्यष्टाङ्गुल, ब्रह्मग्रहधर्मद्वारसूत्रबृहतीचेति नवाङ्गुलस्य अयोज्यः वैखानसः पङ्क्तिः कृतसत्त्वः, श्रामणकश्चेति दशाङ्गुलस्य त्रिष्टुभ् वागे (?) रुद्राश्चेत्येकादशाङ्गुलस्य, अतित्रिष्टुप् किष्कुश्चेति विंशतेः जगती धनर्मुष्टिश्चेति त्रिंशतेः, अतिजगती प्राजपत्यश्चेति चत्वारिंशतेः शक्वरीति षष्टेः, अष्टिरिति सप्ततेः, अत्यष्टिरित्यशीतेः, धृतिरिति नवतेः अतिधृतिरिति शताङ्गुलस्येत्येताः संज्ञा भवन्ति। ऋकारं च ऌकारं च व्यपोह्याकारादौकारान्तं दशादिशतसङ्ख्यासंज्ञा भवन्ति। कटपयादीन् वर्गाद्वर्गं प्रति यथाक्रमेण कादिसङ्ख्या भवन्ति। मुखं तालं यमं मुनिः प्रादेशमादित्याः कृच्छ्रं वितास्तिश्चेति द्वादशाङ्गुलस्य रत्निस्संहतमुष्टिस्स्यादरत्निः प्रसृताङ्गुलिरिति विज्ञायते. इति 3: छ. मात्रार्धान्न्यूनं. 4. छ. मूर्तिः M. मतिधृतः. 5. छ. तालायाम. 6. सद्विकिष्कुमात्रे इति ट कोशमात्रे M. धद्र. 7. च, समयमिति. M. समता बेति. 8. B. अन्तरं. 9. M. ग्रामं.

SGDF
Sri Gargeshwari Digital Foundation

[1]पङ्क्तिः पृष्ठेन वर्धितं बाह्वोः कक्षयोरन्तरं चतुर्यवाधिकं [2]अश्विनीयुतं त्रिष्टुप् कक्षं तिर्यगर्धाधिकं द्वारं तद्बाहुशिरसोरुच्छ्रयमुपबाह्वङ्गुलमुभयोरन्तरञ्च मुखं जगतीमित्युक्तेनाहत्यार्धाङ्गुलमपोह्य तच्छङ्खचक्रधृतहस्ताङ्गुल्योः[3] (?) पार्श्वकोर्परयोरन्तरं तीर्थं रसं वा प्राणायामार्धाधिकं रसं वेत्यङ्गिराः । स्तनयोरन्तरं चतुर्यवाधिकं यमं बाहुमूलं पावकं वेदयवाधिकं द्वारेणाहत्य भुजमध्योन्मानं मध्यं पादाधिकं वसुभिर्हतं कोर्परं यवाधिकं पर्वत्रयं [4]कोष्ठमध्यमं पावकाधिकं कुहूर्मणिबन्धं त्रिमात्रार्धत्रियवमङ्गुष्ठमध्यनाहं वेदं मध्यमं यवाधिकमध्यर्धकोलकं तद्यवहीनं प्रदेशिन्याः [5]तत्सममनामिकाकनिष्ठं यवाधिकं नेत्रं [6]कुक्षियवाधिकमृत्विजं सहजेन वर्धयेत् । श्रोणीवेदाधिकं[7]शकरीकां महती शकरी (?) कुहूरर्धाधिकात्युक्तेन वर्धितमूरुमूलं कृच्छ्रत्रयं द्व्यङ्गुलादधस्ताच्चतुर्यवाधिकं प्राजापत्यं मध्योरुगुह(?) कोलकत्रयं [8]जानुरभ्योजं पावकहतं यवचतुर्दशमपोह्यैतदुन्मानं जङ्घामूलं [9]त्रियवाधिकं वेदाधिकं त्रिष्टुप् जङ्घामध्यमश्विनीयुतं यूक नलिकं (?) प्रदेशोन्मानं कुहूः पादमध्यविस्तारं चतुर्यवाधिका सुप्रतिष्ठा पादाग्रविस्तारमर्धाधिकं रसं त्रयोदशार्धं नवार्धाष्टार्धाष्टसप्तयवमङ्गुष्ठादिकनिष्ठान्त त्रूर्वीमूलमध्यमजानुजङ्घान्तपार्ष्णिप्रपदाङ्गुष्ठान्तरमर्करं त्रिष्टुप्चतुर्विंशत् द्वात्रिंशच्चतुश्चत्वारिंशच्चतुष्षष्टियवानां क्रमेण गुल्फाम्बरान्तरं बर(?)सनाभेरधस्ताद्वस्त्रपर्यन्तं तथैव भवति ।

उष्णीषाल्ललाटान्त षड्यवाधिकं तीर्थमुष्णीषा[10]च्छिरोन्नतावर्तमध्यं यवाधिकं मध्यमयाहत्यैकन्यूनं पुरोगपार्श्वं[11]कक्षौ पावकं कर्णान्तं तद्यवाधिकं पङ्क्तगुष्णीषात [12]पृष्ठकेशान्तं सप्तयवाधिकानलयुतं [13]अयोज्यं प्रापुरोगं प्राणायामं [14]शङ्खचकायामं यवाधिकं वेदमपाङ्गादूर्ध्वं केशान्तं वह्निः [15]केशान्ताद्भ्रुवोर्यवार्धार्धं कोलकं

1. छ. पङ्क्तिपृष्ठे न वृद्धिदं. 2. ग. & B. अश्विन्युतं. 3. क. अङ्गुल्यैः. 4. ग कोर्परमध्यममिति. 5. च. तत्सममानादिका. 6. छ. कुक्षित्रयवाधिकमृत्युजं. 7. A. B. शकरिकां महती शकरीति न दृश्यते. 8. ट. जानुरभोज्यं पावकहतं. 9. अत्र वेदाधिकमित्यारभ्य जानुजङ्घान्त इत्यन्तं ट कोशे अधिकः पाठः. इतर कोशपाठस्तु त्रियवाधिकाष्टाधिकत्रिषट्जंघामध्यमजानुजङ्घान्त इत्यादिः. 10. ग. शिरोन्तं. 11. क. B. ऋ (रु) क्षोपावक (क) र्णान्तं. 12. छ. प्रकोष्ठ. 13. छ. भोज्यं. 14. छ. शङ्खायामं. 15. ग. दृक्केशान्तं.



SGDF
Sri Gargeshwari Digital Foundation

तस्माद्भ्रूसङ्गं षट्तिलाधिकं तत्त्वं तस्मादक्षिसङ्गं भ्रुवोरन्तरे तत्समे भ्रुवोरायामं तीर्थं भ्रूमध्यविस्तारं यवं तदर्धमग्रयोः भ्रूपुच्छात्केशान्तं यवाधिकमत्युक्तञ्यङ्गुलं ललाटमर्धाधिकमध्यर्धं भ्रूसूत्रनेत्रयोर्मध्यं[1] अध्यर्धयवं कोलकं तत्समं नेत्रयोरन्तरं वह्निसमं विस्तारं त्रियवाधिकं तत्त्वं यवप्रमाणं करवीरं तदर्धं रक्तं चतुर्यवाधिकं पक्ष्म वर्म सार्धयवद्वयं शुक्लं त्रियवाधिकं तत्त्वं तदर्धं कृष्णज्योतिः यवं दृष्टिर्यूक-प्रमाणं नवतिः पक्ष्मरोमाणि[2] एतेषामायामं त्रियवमश्रुपातं तत्त्वं तस्मात्कर्ण-पाल्यन्तमर्धाधिकं वेदं कर्णपिप्पलिकादूर्ध्वं [3]नेत्ररेखाघ्राणमूलसमत्वे नेत्ररेखा-ष्टार्धसप्तदशार्धयवाः घ्राणमध्यमूलाग्रविस्तारं [4]गोजीमूलं नासाग्रोत्सेधं यवाधिकं कोलकं पुटायामं यवाधिकं तद्वत्तद्द्वारायामविस्तारं चतुस्सप्तयवं यवप्रमाणं बहुलं पुरोत्सेधत्वं पुरस्ताद्वंशाग्रविस्तारं षडयवं पुष्करान्ताग्रविस्तारं [5]द्व्येकाध्यर्धयवं पुटं नासाग्रं लम्बविलमध्यर्धयवं [6]गोज्यायामसूत्रोत्तराधरोष्ठं यवाधिकं तत्त्वं तदर्धं गोज्यायामविस्तारं द्वियवमुत्तरोष्ठस्य विस्तारं षड्यूकाधिकं त्रियवमास्यं [7]वेद-विस्तारं यवप्रमाणा तत्पाली तत्तिर्यग्वृत्तमर्धाधिकं कोलकं तस्माद्धन्वाकृत्यायामं द्वियवाधिकं पावकमधराच्चिबुकायाममर्धाधिकं तत्त्वं तद्विस्तारं त्रियवं सृक्किण्यास्तु कपोलान्तमध्यर्धं ग्रीवाहन्वन्तं [8]यवाधिकानलं [9]कण्ठाच्चिबुकनिर्गमं [10]सार्धसहज-मक्षिसूत्रसमत्वे [11]कर्णस्रोतोभ्रुवोरुत्सेधमसाम्ये कर्णावर्तिकर्णविस्तारं यवाध्यर्धाधिकं कोलकायामं तद्द्विगुणं नाहं तत्त्वं कोलकं कर्णनिर्गमनिम्नायामविस्तारमर्धाङ्गुलं पूर्वापरनालावर्धमात्रमङ्गुलं लम्बं त्रियवाधिकं भागं तदन्तरं [12]यवहीनं तत्त्वमेवं लक्षणेन युक्त्या कारयेत् ।

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे देवेशालयविमानविधिर्नाम

पञ्चाशोऽध्यायः ।

---

1. ग. अध्यर्धं. ग. 2. छ. पक्ष्मरोमाण्येकस्य. 3. नेत्र इति ट मात्रे दृश्यते. 4. गोजीत्यादिषड्यवमित्यन्तग्रन्थः ट कोशे न दृश्यते. 5. A. द्व्येकान्ताध्यर्धयवं. 6. ट. गोज्या सत्रोत्तरोष्ठं यवाधिकं तत्त्वं. 7. A. वेदविस्तारं यवं यवप्रमाणं तत्पाली. 8. म. यवाधिकतालं. 9. ट. कर्णात्. 10. ट. सहजाक्षिसूक्ष्मसमत्वे. 11. छ. कर्णयोः स्थानभ्रुवोरुत्सेधसाम्ये. 12. च. यवहीनं तद्वदेवं.

SGDF Sri Gargeshwari Digital Foundation

## ॥ अथैकपञ्चाशोऽध्यायः ॥

बिम्बमानविभागः ।

कर्णाद्धिक्कान्तरायामं वेदं हिक्काया द्विमुखे जत्रुणी स्याताम् । हिक्कासूत्रात् स्तनाक्षं [1]कण्ठाद्वक्षसोऽन्तसमं स्तनाक्षिमण्डलं द्वियवाधिकं कोलकं [2]स्तनाक्षि द्वियवं तदर्धमूर्ध्वमुच्छ्रयं स्तनान्तरमुखायामं नाभिनिम्नं वेदयवं श्रोणीमानं यवाधिकं तीर्थं विस्तारं नयनं सीवन्या स्रोतस्तत्त्वमत्युक्तं कोर्परायामं मणिबन्धं चतुर्यवाधिकं [3]समयं तत्समा मध्यमा अङ्गुष्ठकनिष्ठे त्रियवाधिकभागे अनामिका यवाधिकं समयं [4]तत्समा प्रदेशिनी पर्वाणि त्रीण्यङ्गुलानां द्विपर्वमङ्गुष्टं पर्वार्धं नखायाममङ्गुष्ठनखविस्तारं षड्यवं मध्यमायामं चतुर्यवं शेषाणां यवहीनमङ्गुष्ठं मणिबन्धाभ्यामन्तरं दहनं पार्ष्णिभागे [5]वामाङ्गुष्ठं वेदं प्रदेशिनी तद्व्यवाधिका [6]त्रिमात्रार्धाधिकं मध्यमायामं अनामिकाया द्वियवाधिकं कोलकं कनिष्ठिकाया नेत्रं पर्वार्धनखं कृकाटिकायामं सयवं नेत्रं कृकाटिकाया ग्रीवायामं कोलकं तस्मात्ककुद्यवाधिकं भागं ककुत्कटिसन्ध्योरन्तरं कुहूरत्युक्तेनाभक्तं सहजहीनाद्वाचांसफलके चतुर्यवं तीर्थमाने स्फिक्पिण्डावूरुमूलाद्वेदाङ्गुलोन्नतौ स्याताम् । कटिसन्धिविस्तारं चतुर्यवाधिकं (?) [7]द्वारयुता पङ्क्तिः स्फिक्पिण्डायामविस्तारं अर्धाधिकं द्वारमेवं ज्ञात्वा शेषं युक्त्या बुद्ध्या हृद्यं मनोज्ञं कारयेत् ।

ब्रह्मादयोऽपि तद्रूपलक्षणनिश्चयं ज्ञातुमशक्ताश्चित्तभित्तौ तद्रूपं भक्तितूलिकया सङ्कल्प्य वर्णैरालिख्याऽलोकयन्ति । [8]तस्माद्भक्तिरेव कारणम् । [9]तत्रातोऽभीक्ष्णदर्शनयोग्यं तत् भगवद्रूपं कल्पयेत् ।

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे कतिपयावयवमानविधिर्नाम एकपञ्चाशोऽध्यायः ।

---

1. छ. कर्णात्. 2. ट. स्तनाक्षं. 3. छ. समयं. 4. ट. तद्वत्. 5. छ. पादाङ्गुष्टं. 6. ट. त्रिमात्रार्धमध्यमा वरं. 7. छ. द्वारयुतपङ्क्तिभिः. 8. ट. तस्माद्भक्त्यैककारणं तत्रातः. छ. तस्माद्दर्शनयोग्यं. 9. B. तत्रातोऽभीष्टदर्शनयोग्यं.

SGDF Sri Gargeshwari Digital Foundation

## ॥ अथ द्विपञ्चाशोऽध्यायः ॥

### दिव्यभूषणादीनां मानप्रकारः ।

किरीटायतं विंशत्यङ्गुलं मूलं शिरःपरिणाहं मध्यं त्रयस्त्रिंशदङ्गुलमग्रमष्टादशाङ्गुलं पद्मकौस्तुभयोः पञ्चाङ्गुलं मध्ये [1] मकरकूटं पार्श्वयोः [2] पत्रपूरितं विस्तारं यवाधिकमिन्द्रियं भूतकोलकायामं समात्राङ्गुलं मकरकोलकायामं तदर्धविस्तारं [3] मकरस्कन्धारूढबालकनिष्क्रान्तव्यालसंयुतं श्याममभिषेकं विलक्षणं रत्नाढ्यक्षेपणालङ्कृतमग्रे [4] रक्तपद्मयुतं तत् विस्तारं द्व्यङ्गुलं [5] मुक्तादामविभूषितमृजु तिर्यक्कर्णसूत्राभ्यां पार्श्वयोः मध्ये [6] वज्रबन्धाकृतिं शिरश्चकायामं द्विरसं प्राणायामं द्वियवं वा विस्तारं रुदनेत्रमेवं सर्वरत्नमयं द्वियवं वा जाज्वल्यमानं सहस्रादित्यप्रभं किरीटं कारयेत् ।

कुण्डले मकराकारे [7] सार्धाङ्गुलकोलकायामे तदर्धोच्छ्रयसमन्विते मुखनिष्क्रान्तसिंहास्ये [8] पादप्रलम्बितमुक्तादमाढ्ये रत्नोज्ज्वले [9] श्रीवत्सहारं पञ्चाननमध्याननविस्तारं पावकं द्विगुणायतं पद्मरागप्रबन्धाढ्यं वृत्तं तद्बाह्ये चतुरश्रं रत्नबन्धविचित्रितं पार्श्वयोः [10] सूक्तवेशकमौक्तिकावलिशोभितं पार्श्वमुखविस्तारं कोलकं शेषं युक्त्याऽतिमनोहरं रत्नैर्दीप्यमानं कारयेत् । मुक्ताकलापसंयुक्तमूरुमध्यविलम्बितं कोलकविस्तृतमपरं मुखायमं रसं तस्य विस्तारं चतुर्यवाधिकं कोलकं केयूरविस्तारमर्ध्याङ्गुलायामं मुखं द्विमात्रार्धं मकरायामं तदर्धं तारमारूढबाल [11] मकरास्योद्भूतसिंहकोलकवृत्तवेशक्तनिधिद्वयसमारूढं कोलकायामं तस्य पावकं षण्मुखं रत्नकटकमुखरत्नविचित्रितं नाभेर्भूताङ्गुलादूर्ध्वं चोदरबन्धनं तन्मध्यविस्तारं पावकं त्रिगुणायतं रत्नविचित्रितं मुक्तादामविभूषितं शेषं युक्त्या करोति । [12] कटिबन्धमष्टाननं विस्तारं [13] त्र्यङ्गुलं मध्ये कृत्रिममुखं [14] कलाप-

---

1. ट. मकरमकुटपार्श्वयोः. 2. छ. पत्रं पुरोमं पुरीमविस्तारं. 3. छ. मकरं स्कन्धारूढ. 4. क. रत्न. 5. ट. मुक्तादाममृजु. 6, छ. व्रजबन्ध. 7. छ. सार्धाङ्गुलकायामे. 8. B. पद. 9. श्रीवद्वृत्साहारं. 10. छ. व्यक्तवेश्यक. 11. छ. मकारास्योद्भूतसिंहदेहालरकावृत्तं द्वेवशकन्निधिरसद्वयसमारूढं. 12. छ. किरीटबन्धनं. 13. छ. द्व्यङ्गुलं. 14. क. कलापशारचित्रितं.

SGDF
Sri Gargeshwari Digital Foundation

पार्श्वविचित्रितं [1] नानारत्ननिबन्धनं तदधस्तात्त्रीणि सूत्राणि कल्पयेत् । एवमेवान्यत्र विस्तृतं [2] ज्ञात्वा आभरणान्यलङ्कारयुक्तानि कारयेत् ।

शङ्खचक्रायामं चतुर्ज्वालायुतं चक्रास्यविस्तारं कीलकं चतुर्दशारं मध्यग्रन्थियुतं शङ्खमध्यमविस्तारं प्राणायामं ज्वालायामं भागमेवमनुक्तं [3] तत्र ज्ञात्वा लक्षणयुतं रम्यं कारयेदिति विज्ञायते ।

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे किरीटादिमानविभागो नाम द्विपञ्चाशोऽध्यायः ।

---

## ॥ अथ त्रिपञ्चाशोऽध्यायः ॥



### स्थानकासनशयनानि;
### स्थानकम् ।

अथ स्थानकासनशयनभेदं [4] वक्ष्यामि । विमाने गर्भगृहे दैविकभागं त्रिधा कृत्वा तदपरे तद्विभागे वैकभागे वा स्थानकं स्थाप्यमेतद्योगं भोगं विरहं वीरमिति चतुर्विधं भवति । श्रीभूमिभ्यां रहितं दक्षिणे मुनिना मार्कण्डेयेन अर्चकेन वामे च भृगुणा सहितं दक्षिणे भूम्या वामे मार्कण्डेयेनार्चकेन सहितं वा योगस्थानकं तथा देवीभ्यां रहितं अर्चकेन मार्कण्डेयेन भृगुणा च सहितं दक्षिणे दण्डकेन वामे च गरुडेन युतं योगस्थानकमिति केचित् । [5] तथा देवीभ्यामर्चकमुनिभ्याञ्च संयुतं भोगस्थानकमेतैस्सर्वैश्च विरहितं वीरस्थानकं देवीभ्यां रहितमर्चकमुनिभ्यां सहितं वा [6] शङ्खचक्राभ्यां रहितं वीरस्थानकमिति ।

### आसनम् ।

तथा दैविकभागं त्रिधा कृत्वा [7] दैविकभागयुतमानुष्ये स्थाप्यमासनम् । तच्च योगं सुखं भोगं वीरमिति चतुर्विधम् । तथा देवीभ्यां रहितमर्चकमुनिभ्यां

---

1. छ. नवरत्नप्रबन्धनं. 2. ङ. ज्ञात्वाभरणन्य. लंकारयुतानि कारयेत् म. आभरणार्थः नित्यमलङ्कारयुक्तानि. 3. छ. तत्र तत्र. 4. M. शयनेषु. 5. छ. अथ. 6. छ. चक्रशङ्खाभ्यां. 7. छ. तदेव भागयुत.

SGDF
Sri Gargeshwari Digital Foundation

महीमार्कण्डेयाभ्यां मार्कण्डेयपुण्याभ्यां वा युक्तं योगासनम् । देव्यर्चकमुनिभिर्विनाकृतं वा तथा देवीभ्यामर्चकमुनिभ्यां वा[1] संयुक्तं सुखासनम् । [2]तद्देवीभ्यां तन्मुनिभ्याञ्च सहितमपरभित्त्याश्रये चामरधारिणीभ्यां मायासंह्लादिनीभ्यां किष्किन्धसुन्दराभ्यां वा युक्तं मूर्ध्नि सन्निहितहस्तेन नमस्कारकृच्चन्द्रादित्याभ्याञ्च सहितं भोगासनम् । देव्यर्चकमुनिभिः सहितं [3]रहितं वा देवस्य पादयोरूरुबद्धवस्त्रेण युतं जानूपरिविन्यस्तप्रसारितहस्तद्वयसहितं वीरासनम् । देवीभ्यां रहितमर्चकमहीमार्कण्डेयसहितं वीरासनमित्येके ।

## शयनम् ।

किञ्चिद्दैविकभागयुतं मानुष्ये स्थापनीयं शयनम् । तदपि योगं भोगं वीरमिति त्रिविधम् । उपधाने निहितं दक्षिणहस्तं प्रसारितं वामहस्तं तदुपधाननिहितमकुटमूर्ध्वाननं किञ्चिदुन्मीलितं चक्षुः प्रसारितपादं देवं शयानं कृत्वा तदुपरि भित्त्यूर्ध्वभागे नाभिपद्मे समासीनं ब्रह्माणं [4]तद्भित्त्याश्रयान् पञ्चायुधान् पादपार्श्वे स्थिताभ्यां समुद्रतरङ्गाच्छादितजानुभ्यामुग्रवेग [5]मधुकैटभासुराभ्यां अर्चकमहीमार्कण्डेयाभ्याञ्च सहितं कुर्यादेतद्योगशयनम् । किञ्चिद्द्वारनिरीक्षिताननं दक्षिणहस्तेन धृतमकुटं किञ्चित्कुञ्चितप्रसारितवामहस्तं तदुपधाने योजितदक्षिणकरमनन्तशयने समासीनं पविन्यूरुन्यस्तदक्षिणपादं तथाऽऽसीनमद्यूरुन्यस्तवामपदं शयानं देवं तत्पादे निहितद्विहस्तया [6]पादमर्दिन्या श्रिया भूम्या च संयुतं पूर्ववद्ब्रह्माणं पञ्चायुधरूपैश्च सहितं कुर्यादेतद्भोगशयनम् । उपधाने किञ्चिदस्पृष्टमकुटं यथा तथोपधाने निहितदक्षिणहस्तेन धृतमकुटं द्वारं सम्यङ्निरीक्षितलोचनाननं [7] विस्मयोत्फुल्ललोचनं प्रसारितवामहस्तं द्विहस्तयुतं [8]चक्रशङ्खयुतहस्ताभ्यां [9]चतुर्हस्तयुतं वा देवं कुर्यादेतद्वीरशयनम् ।

---

1. वा इति छ. पाठे नास्ति. 2. ट. मात्रे, तत्. 3. रहितमिति 'छ' कोशे न दृश्यते. 4. B. भित्त्याश्रयपञ्चायुधरूपैः. 5. छ. मधुकैटभाभ्यां 6. ट. पादमर्दनयिकया. 7. छ. लोचनं. 8. छ. चक्रशङ्खधरं. 9. छ. चतुर्हस्तमेव कुर्यात्.

SGDF
Sri Gangeshwari Digital Foundation

योगादिस्थापनाधिकारिणः ।

योगार्थी योगमार्गं पुत्रार्थी सुखार्थी च सुखमार्गं धनैश्वर्यभोगार्थी भोगमार्गं वीर्यार्थी वीरमार्गं विरहार्थी विरहमार्गमेतेषामभीष्टमार्गेण ध्रुवबेरं कारयेत् ।

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे स्थानकासनशयनेषु
योगादिभेदो नाम त्रिपञ्चाशोऽध्यायः ।

---

## ॥ अथ चतुःपञ्चाशोऽध्यायः ॥

ध्रुवबेरद्वैविध्यम ।

ध्रुवबेरस्यैवैष भेदो न कौतुकबिम्बस्य । ध्रुवकौतुकसंयुक्तं ध्रुवार्चनमित्यर्चना द्विविधा भवति । [1]ध्रुवबेरं कौतुकबिम्बञ्च प्रतिष्ठाप्यार्चनं ध्रुवकौतुकसंयुक्तं सर्वाङ्गमुक्तप्रमाणैः सम्पूर्णम् । ध्रुवबेरविधानेन शिलयैव कृत्वा ब्राह्मे कौतुकबिम्बस्थाने अर्चनार्थं वर्णविहीनं प्रतिष्ठाप्यार्चनं ध्रुवार्चनम् । एतत्स्थानकासनयोरेव विहितम् । नैव शयने कर्तव्यम् ।

[2]ऐहिकामुष्मिकापेक्षी ध्रुवकौतुकसंयुक्तं केवलामुष्मिकापेक्षी ध्रुवार्चनं कुर्यात् । यथैकस्मिन् गृहे त्रेताग्नीन् कल्पयति [3]तथैकस्मिन् विमाने कौतुकमौत्सवमर्चेति त्रीणि बेराणि कल्पयेत् । प्रधानार्चनार्थमुत्सवार्थं स्नपनार्थञ्चैतद्बेराणि[4] ।

कालान्तरे प्रतिष्ठायां विशेषः

प्रथमप्रतिष्ठायां त्रयाणामप्यलाभे कौतुकबिम्बमेकमेव प्रतिष्ठाप्य [5]पश्चादन्ययोर्लाभे प्रतिष्ठापनं कर्तव्यम् । ध्रुवबेरेण कौतुकबिम्बस्यैकस्यैव सम्बन्धो नान्येषाम् । तस्मात्तदेकमेव स्थापयेदित्येके ।

---

1. छ. ध्रुवंबेरं कौतुकबिम्बस्थाने प्रतिष्ठाप्यार्चनं ध्रुवकौतुकेत्यादि. 2. छ. ऐहिकापेक्षी M. ऐहिकामुत्र. 3. छ. तथैव विमाने. 4. छ. चैव तद्बेराणि. 5. छ. पश्चादपि.

SGDF Sri Gargeshwari Digital Foundation

[1]ध्रुवबेरस्यानुरूपमेव तत्कौतुकं बिम्बं कारयेत् । ध्रुवबेरे स्थिते स्थितमासीनेऽप्यासीनं शयाने स्थितमासीनं वा । तस्मिन् ध्रुवे शयाने कौतुकबिम्बं शयानं नैव कारयेत् । आसीनेऽप्यासीनं स्थितं नैवेति केचित् । सर्वत्रोत्सवमर्चां च स्थितमेवेत्यन्ये । प्रादुर्भावेष्वपि तत्तद्ध्रुवबेरानुरूपं कौतुकबिम्बं विष्णुं चतुर्भुजं वा कारयेदिति विज्ञायते ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे

ध्रुवबेरलक्षणं नाम चतुःपञ्चाशोऽध्यायः ॥

---

## ॥ अथ पञ्चपञ्चाशोऽध्यायः ॥

### भगवतो रूपद्वयम्

अथार्चनाकौतुकारम्भसत्क्रियां व्याख्यास्यामः । अचलं चलमिति द्विविधं भगवतो रूपम् । तत्र सर्वगं व्योमाभमपोहलक्षणं ब्रह्माद्यैरप्यनभिलक्ष्यं निष्कलमचलम् । तदाराधनं निरालम्बं तत्स्थानीयं ध्रुवरूपम् । तस्मादचलमात्मनो [2]यद्भिन्नं सर्वदेवात्मकं मत्स्याद्यंशजनकं[3] सकलं तच्चलम् । तदाराधनं सालम्बं तत्स्थानीयं कौतुकम् । तस्मात् [4]महाबेरे दोषेऽपि कौतुकसम्पदा[5] नश्यति । ध्रुवबेरं परञ्ज्योतीरूपं तदलक्षणमपि [6]न दोषाय भवति, अरूपत्वात्तस्य ।

### निष्फलसकलरूपे

यदा निष्कलं सूक्ष्मं परंज्योतिर्नारायण इति च कीर्त्यते तदा स्थूलः सकलस्तदा विष्णुरिति । विष्णुः सुवर्णवर्णो रक्तास्यपाणिपादाक्षः शुकपिञ्छाम्बरधरः किरीटकेयूरहारप्रलम्बकटिसूत्रोज्ज्वलितः[7] शङ्खचक्रधरः

---

1. इत आरभ्य स्थितं नैवेति केचिदित्यन्तं म ट कोशयोः न दृश्यते ततः पश्चाद्ध्रुवबेरमर्चां च स्थितमेवेत्यन्ये प्रादुर्भावेष्वित्यादि च दृश्यते. 2. B. उद्भिन्नं. 3. छ. शयनकं. 4. छ. बेरादयोऽपि. 5. क. सम्पदा तस्यापि सम्पत्. 6. च. तददोषाय. 7. क. सूत्राद्युज्ज्वलितः.

SGDF Sri Gargeshwari Digital Foundation

श्रीवत्साङ्को रक्तत्रयसमन्वितः सुवर्णरजत[1]ताम्रदारूणामन्यतमेन सलक्षणमेव कौतुकं कारयेत् । अलक्षणे तु तत्सर्वं भस्मसाद्भवति सकलत्वात्तस्य ।

उपासनाद्वयाधिकारिणः

निरालम्बाराधनं सङ्कल्पधनिनां श्रेष्ठाश्रमिणाम् । सालम्बं सम्यक् संसारनिष्ठानां भुक्तिमुक्तिफलप्रदत्वात्[2] । अभीक्ष्णदर्शनात् परिचर्यया भक्तिर्भवति । [3]नृणामभक्तानां कृतं सर्वं निष्फलम् । तस्माद्भक्तिहेतुत्वात् सलक्षणं परमपुरुषरूपं कृत्वा श्रिया सहैव संस्थाप्य प्रकृतिपुरुषावर्चयेत् । सालम्बाराधने कौतुकसम्पत् सर्वेषां सम्पदिति विज्ञायते ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे

रूपद्वयलक्षणं नाम पञ्चपञ्चाशोऽध्यायः ॥

---

॥ अथ षट्पञ्चाशोऽध्यायः ॥

—: ❀ :—

कौतुकादिद्रव्याणि

मणिलोहोपलदारूणि कौतुकार्हद्रव्याणि । तत्रोत्सवं दारुपाषाणरत्नैः नैव कारयेत् ।

रत्नभेदाः, रत्नन्यासः

वज्र मौक्तिक पद्मरागेन्द्रनील गोमेध वैडूर्य मरकत प्रवाल[4] पुष्यकान्त-चन्द्रकान्त सूर्यकान्त लोहिताक्षोत्पल[5] सौगन्धिक स्फटिक कुरुविन्द [6]महानीलाश्चेत्येते सप्तदश शुद्धजातयो मणयो भवन्ति । उपलभेदाश्चानेके तत्रेन्द्रनीलवैदूर्य पद्मराग मरतक प्रवाल वज्राश्चेत्येतेचोत्तमाः । सौगन्धिक-

---

1 ख. दारुणान्नातस्मात् सलक्षणं. 2. छ.फलप्रदं स्यात् च. फलप्रदानात्. 3. छ. नृणां भक्तिं विना कृतं 4. छ. प्रवालमरतक. 5. छ. उपल. 6. छ. महानीलनोलाश्चेत्येते.



SGDF Sri Gargeshwari Digital Foundation

पुष्यकान्त चन्द्रकान्त सूर्यकान्तोत्पला[1] मध्यमाः । शेषाः कनिष्ठाः । तत्रेन्द्रनीलमयं श्रेष्ठतमं बेरस्येत्याह भगवान्[2] पुरुषः । तस्मात्परं नापरमस्ति किञ्चित् । विगतमला निर्व्रणाः स्निग्धा मनोरमाः सुप्रभाः मणयः । स्फुटितरूक्षवर्णविहीनलघुप्रभान्[3] त्रिवर्ज्य शुभाशुभं परीक्ष्य आलयाद्दक्षिणतः पीठं कृत्वा देवं संस्थाप्यानुज्ञाप्य तस्योत्तरे त्रिवेदिसहितं पीठं कृत्वा दक्षिणे चिन्तामणिं मध्ये कौस्तुभं उत्तरे स्यमन्तकम् । चिन्तामणिं दीप्तिरूपं श्रीकरं दिव्योद्भवमिति, कौस्तुभं अमृतोद्भवं महाभद्रं[4] कोर्धशयनमिति, स्यमन्तकं सर्वदुःखविनाशनं सुखप्रदं रत्ननाथमिति रत्नत्रयमभ्यर्च्य अम्नावाघारान्ते शान्तिं रत्नत्रयञ्च घृतमिश्रचरुणा च हुत्वा आशीर्भिराघोष्य पुरुषसूक्तेनाङ्गोपाङ्गानि कल्पयेत् । [5]लक्षणयुतादन्यद्रव्यकृताद्वेरादलक्षणमपि रत्नजं श्रेष्ठम् ।

## मुक्ताफलानि

मुक्ताफलेष्वष्टसु[6] शङ्खजनागजाब्धिजान्यतीव पुण्यफलदानि । [7]अवेध्यानि तानि जातरूपमयपीठप्रबद्धान्यर्चयेत् । [8]तेष्वम्भोधिजं विष्णुरूपं परितः सहस्रयोजनस्थनृणामवृद्धचरिष्टापमृत्युदारिद्र्यादीन्विनाशयति । तस्मात्सम्यक् पूजयेत् ।

## लोहभेदाः, देवताभेदेन लोहभेदः

सुवर्णरजतताम्रकांस्यत्रपुसीसारकूटवृत्तलोहपित्तलायांसि लोहभेदा भवन्ति । सौवर्णं पौष्टिकं राजतं कीर्तिदं ताम्रजमृद्धिप्रदं कांस्यं प्रजाकरम् । तेनापि वैष्णवं रूपं न कारयेदित्यृषयो वदन्ति । कांस्येन वसवः साध्या वृत्तलोहेन मरुतः [9]पित्तलेन दानवाः त्रपुणा असुराः सीसेन पिशाचा आरकूटेन रक्षांस्ययसा भूताः सर्वलोहेन कार्याः । सुवर्णेनैव भगवन्तं उपलेन शङ्करं रजतेन विरिञ्चिञ्च ।

---

1. छ. उपलाः. 2. ख. पुरुः. 3. छ. विभज्य. 4. छ. कोर्धायमति. क. अर्चालयमिति. 5. छ. लक्षणयुतरम्यद्रव्यकृतात. 6. ट. शङ्खजनागजाब्जजानि. 7. छ. अवेध्यानि जातमयपीठबन्धानि. 8. छ. तेष्वंभोजं. 9. क. पितलोहेन.

SGDF
Sri Gargeshwari Digital Foundation

ताम्रेणादित्यं कुर्यादिति ऋषयो वदन्ति । किं बहुना [1]सुवर्णेनोत्तममिति कश्यपः ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
कौतुकादिद्रव्यनिर्णयो नाम षट्पञ्चाशोऽध्यायः ॥

---

## ॥ अथ सप्तपञ्चाशोऽध्यायः ॥

### मधूच्छिष्टक्रियाप्रकारः

अथ मधूच्छिष्टारम्भम् । [2]देवागारोत्तरे अग्निनोद्दीप्य अहतेन नववस्त्रेणोत्पूय 'अग्निमीळ' इत्यभिमृश्य शुद्धपात्रे सिक्तमादाय देवेशमाराध्य प्रोक्षणैः प्रोक्ष्य आत्मसूक्तं जप्त्वा पश्चिमेऽग्निं परिस्तीर्य महाशान्तिं [3]पार्षदञ्च हुत्वा सिक्तमभ्यर्च्य मध्येऽष्टदलं कमलं ध्यात्वा तन्मध्येऽनिरुद्धं[4] ब्रह्माणं वा अष्टदलेषु हंसं संस्थाप्यात्मज्ञः सहस्रशीर्षादिना रूपं सङ्कल्प्य शिल्पिना लक्षणयुतं कारयेत् । ध्रुवायामं त्रिधा कृत्वा एकभागमुत्तमं नवैकं हित्वा त्रिभागैकमुत्तमोत्तमं [5]भूतांशाद्वेदांशांशमुत्तमाधममाद्याद्व्यंशे द्विभागं मध्यमोत्तमं तद्रसांशाद्भूतांशं मध्यममध्यमं तत् गुणांशाद्व्यंशं मध्यमाधमं प्रथमानलभागैकमधमादुत्तमं तत्त्र्यंशाद्विभागमधममध्यममेतद्गुणांशात् द्व्यंशमधमाधममिति । प्रतिमात्रिभागैकं पीठं तत्त्र्यंशं पद्मं शेषं पूर्ववदाचरेत् ।

ज्ञानदेहालंकारजाः प्रभाः प्रोक्ताः । देवदेवस्य विष्णोस्तु प्रभास्तिस्रः रुद्रस्य द्वे धातुः श्रीभूम्यादीनामेका । इन्द्रादीनां मकुटाश्रया बिम्बकल्पितेन लोहेनैव[6] पीठबन्धादीन् कल्पयेदन्यथा [7]दोषाय भवति । प्रभाविस्तारं [8]मुखार्धं

---

1. क. सुवर्णमित्युक्तं. 2. छ. देवागारस्योत्तरे पार्श्वे अग्निनोद्दीप्यमाने. 3. ट. परिषदं. 4. ट, अनिरुद्धं ब्रह्मणा वेष्ट्य दलेषु. छ. ब्रह्मणां. 5· छ. हृतांशं उत्तमोत्तमाद्द्व्यंशे वि-ागं मध्यमोत्तमं हृतं मध्यमध्यमं तद्गुणांशाद्द्व्यंशं मध्यमाधमं. 6. छ. कल्पलोहेनैव. 7. छ. दोषाफवन्ति. 8. छ. मुखाध्यर्धमस्मिन् ज्ञानकान्धर्या (?).

SGDF
Sri Gargeshwari Digital Foundation

तस्मिन् ज्ञानभाण्डे चियोः (?) यष्टिविस्तारं कोलकं देहजाया[1]भागं यष्टीनामुपरि रश्मिज्वालास्त्रिनतानूर्ध्वाग्रान् दक्षिणे दक्षिणावर्तान् वामे वामावर्तानेवं कुर्यात् । इन्द्रचापवद्यष्टिश्च । अग्निशिखावद्रश्मिज्वाला । [2]मकुटाच्चतुरङ्गुलमाहृत्य हस्तयोर्भागं संवृत्य पीठपार्श्वयोर्योजयेत् । एवं रश्मिज्वाला अतिनिविडा नातिविरला भवेयुः । उभयोः पार्श्वयोः समग्राश्चैवं कृत्वा बहिर्मृत्तिकया आलिप्य कर्तुरनुकूलर्क्षे रात्रावेव शुभर्क्षे शुभहोरायां [3]यथोचितं लोहमादायोद्दीप्य [4]स्रावयेत् । तत्काले देवदेवमनुस्मृत्याघोष्य शक्तितो दक्षिणां दद्यात् ।

तत्राङ्गहीनादिदोषेषु पुनर्लोहवदाचरेत् । [5]बिम्बं तल्लक्षणयुतं संशोध्य पद्मपीठे रत्नानि मन्त्रतो न्यस्य तत्र संस्थाप्य ततः शिल्पिना दृढीकरणं कारयेत् ।

कौतुकौत्सवार्चाभेदेन त्रीणि बिम्बान्यगारे स्थापयेत् । ब्राह्मे कौतुकं [6]दक्षिणे स्नानं वामे चौत्सवम् । स्थापिते कौतुकेऽनवद्ये लोहगौरवसंवेशं न कुर्यात् । यदि कुर्यात् कर्तुः मृत्युर्भवति । तद्दोषदर्शने सद्यस्तयोरेकं नियोजयेत् । [7]एकस्मिन्नालये चैकमेव वपुरिति केचिद्वदन्ति । [8]एवं प्रकल्पितं बिम्बं विधिनाऽधिवास्य स्थापयेदिति कश्यपः ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे मधूच्छिष्टक्रियाबिम्बनिर्माणक्रियाविधिर्नाम सप्तपञ्चाशोऽध्यायः ॥

---

## ॥ अथ अष्टपञ्चाशोऽध्यायः ॥

### अङ्कुरार्पणम्

अथाङ्कुरार्पणविधिं व्याख्यास्यामः । देवेशस्य यानि कर्माणि भूपरीक्षादीनि तेषां पूर्वस्मिन् नवमे सप्तमे[9]ऽह्नि वा अङ्कुरार्पणं कुर्यात् [10] अङ्कुराननर्प-

---

1. छ. भवनं वरिजानामुपर्युपरि. 2. छ. मकुटात्. 3. छ. ध्रुवशुभहोरायां. 4. ङ. आस्रावयेत्. 5. बिम्बमित्यादि कारयेदित्यन्तं छ. कोशे न दृश्यते. 6. छ. दक्षिणेऽर्चां वामे चौत्सवं च स्थापयेत्. 7. च. एकस्मिन्नालये चैककं वपुरिति छ. पुरिति. 8. ट. एवं बिम्बं. 9. ऽह्नि इति छ कोशे नास्ति. 10. छ. अङ्कुरानर्पयेत्.

SGDF Sri Gargeshwari Digital Foundation

यित्वा कृतं सर्वं निष्फलं भवति । भगवत्कर्मण्यनुक्तेऽपि अङ्कुरार्पणे कृते भगवान् प्रीतो भवेत् । तस्माद्यत्नतः कुर्यात् ।

### पालिकादीनां लक्षणम्

तदर्थं पालिकाः छिद्रकुम्भांश्छरावांश्चाहरेत् । प्रत्येकं षोडश द्वादशाष्टौ चत्वारो वा ग्राह्याः । पालिकानामायामं द्वितालं [1]ध्रुवबेरमुखायामं मुखं तदर्धमूलमानुपूर्व्येण सङ्क्षिप्तं छिद्रकुम्भानां [2]सार्धतालायामं मूलं भागं चतुर्दिक्षु मध्यतो भागविस्तृतपञ्चद्वारयुतं[3] शरावाणां मुखं तालविस्तारायामं षडङ्गुलमुन्नतं मूलं भागमित्येवं सङ्गृह्य देवालयस्योत्तरे अभिमुखे वा गोमयेनोपलिप्य पञ्चवर्णैरलङ्कृत्य पञ्चहस्तायतां हस्तविस्तृतां द्वितालविस्तृतचतुर्द्वारयुतां [4]व्रीहिभिस्तण्डुलैर्वा [5]पङ्क्तिं कृत्वा तन्मध्ये षोडशाङ्गुलायामं तालोन्नतं त्रिवेदिसहितं ब्रह्मणः पीठं कृत्वा शेषादीनाञ्च यथालाभमानेन पीठं कुर्यात् । यजमानो वस्त्राद्यैर्गुरुमभिपूज्य कार्यमावेद्यानुग्राह्य कर्मेदं कुर्विति प्रणम्य [6]याचेत ।

### अङ्कुरार्पणप्रयोगः

गुरुरपि तत्कर्म करिष्यामीति सङ्कल्प्य रात्रिपूजावसाने देवस्य विशेषपूजां कृत्वाऽऽरभेत । पङ्क्तिमध्ये पीठे ब्रह्माणमभ्यर्च्य हविर्निवेद्य पूर्वद्वारपश्चिमे सोमं तत्पूर्वे शान्तमैन्द्राद्यैशानान्तं जयाद्यप्सरसोऽभ्यर्च्य यथाशक्ति हविर्निवेद्य दक्षिणां दद्यात् । पालिकाकुम्भयोर्मध्ये नववस्त्रैरावेष्ट्य गोकरीषयुतमृद्भिः सिकताभिर्वाऽऽपूर्य परितः पङ्क्तौ विष्णुगायत्र्या संस्थाप्य पालिकासु मेदिनीं छिद्रकुम्भेषु राकां शरावेषु [7]सिनीवालीं नाम्नाऽभ्यर्च्य पुण्याहं वाचयेत् । कङ्कुमुद्गयवनिष्पावप्रियङ्गुगोधूमचणकतिलतिल्वमसूरसर्षपाणि धान्यानि [8]सर्वालाभे मुद्गं वा पूर्वमेव यावदङ्कुरदर्शनं तावज्जलेषु निक्षिप्य कांस्यपात्रे धान्यान्यादाय तेषु सोममभ्यर्च्य 'सोमं राजान' मित्यभिमृश्य तूर्यघोषणं

---

1. क. ध्रुवबेरमुखं मुख तदर्धं मूलं. 2. छ. सार्धतालमायामं. म. तालायां म. 3. छ. द्वारायताः. इत्यारभ्य 'चतुर्द्वारयुतामित्यन्तं छ. कोशे न दृश्यते. 4. व्रीहिभिरित्येतत्पूर्वं कुम्भाः किञ्चिद्भेदेन पालिकावच्छरावा इत्यंशः क कोशे दृश्यते । 5. छ. परितो दण्डवत्पङ्क्तिं कृत्वा. 6. छ. याचयेत्. 7. छ. सिनीवालीमिति 8. A. सर्वाभावे.

SGDF Sri Gargeshwari Digital Foundation

कारयित्वा तद्धान्यान्यादाय विष्णुसूक्तं 'सोमं राजान' मिति च जपन् [1] अङ्कुरानर्पयित्वा वारुणमन्त्रेण जलसेकं कृत्वा [2] मृद्भिः पत्रैः पालिकादीन् पिधाय गुप्ते देशे निधापयेत् ।

[3] तदर्वाक् सद्यश्चेदेवं कृत्वा पुण्याहान्ते श्वेततण्डुलैः [4] पुष्पैश्च पालिकादीन् तत्तन्मन्त्रेण पूरयेदेतत्सद्योऽङ्कुरमित्याचष्टे भृगुः । दिवाङ्कुरार्पणं देवस्याप्रीतिकरं तस्मात् रात्रावेव कुर्यात् ।

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे अङ्कुरार्पणविधिर्नाम अष्टपञ्चाशोऽध्यायः ।

---

## ॥ अथ एकोनषष्टितमोऽध्यायः ॥

### प्रतिष्ठाविधिः ।

अथ [5] विष्णोर्देवेशस्य प्रतिष्ठाविधिं व्याख्यास्यामः । सोऽव्ययः सर्वव्याप्याकाशोपमो निष्कलः परमात्मा ज्ञानेन भक्त्या च युक्तस्य अन्तःसन्निहितो भवति । 'आत्मा गुहायां निहितोऽस्य जन्तो' रिति श्रुतिः । तस्माद्भक्तिमता तेन [6] सकलं सङ्कल्प्य भक्त्या मन्त्रैश्च प्रतिष्ठापिते बिम्बे भक्तानुकम्पया सकलः तद्बिम्बे समाविष्टः देवः प्रतिष्ठितो भवेत् । अव्यक्तं शाश्वतं अनादिमध्यान्तं [7] अतीन्द्रियं देवैरप्यनभिलक्ष्यं यद्वैष्णवं पदं तत्प्राप्तिफलं तदर्चनम् । तस्य मूलं प्रतिष्ठा । तद्विधानं शृणुध्वम् ।

### मुहूर्तविचारः ।

मासेषु फाल्गुनचैत्रवैशाखतैष्यज्येष्ठेषूत्तमम् । श्रावणाश्वयुजकार्तिकेषु मध्यमम् । प्रोष्ठपदाषाढयोरधमम् । त्वरितोऽपि मार्गशीर्षमाघौ विवर्जयेत् ।

1. A. अङ्कुरानर्पयेत् . 2. छ. मृत्पात्रैः. 3. छ. उक्तदिनादर्वाक् सद्यश्चेत् . 4. छ. पुष्पैः. 5. च. देवेशस्य विष्णो . 6. च. अनेन. 7. च. म. अतिन्द्रियं.

SGDF Sri Gargeshwari Digital Foundation

यथोक्ततिथिवारनक्षत्रे शुभे करणे शुभराशावनिन्दिते[1] शुभग्रहैर्युक्ते तदीक्षिते वा पूर्वाह्णे दिवैव प्रतिष्ठामाचरेत् ।

आचार्यवरणम् ।

तदर्थं [2] यजमानः पूर्वतो गुरुं स्थापकाद्यानध्वर्यूंश्च वरयेत् । पत्न्यपत्यरहितं दुर्वृत्तनास्तिककुब्जवामनातिदीर्घहीनाङ्गातिरिक्ताङ्गपङ्गुबधिरान्धकुनखिश्यावदन्तशिपिविष्टषण्डान् क्षयकुष्ठापस्मारोन्मादादिपापरोगयुतान् [3] वेददूषकपाषण्डान् [4] अन्यकर्मपरान् अन्यदेवताभक्तानपि [5] वर्जयित्वा वैखानससूत्रोक्तविधानेन निषेकादिसंस्कारक्रियायुक्तान मन्त्रकल्पविदः [6] नित्यस्वाध्यायपरान् मर्मज्ञानर्चनादिसर्वप्रयोगज्ञान् [7] वैखानसविदः साग्नीनाहूयाभिपूज्य तेषु ज्ञानोत्कटं श्रुतवृत्तशीलसम्पन्नं [8] भूपरीक्षादिप्रतिष्ठान्तेष्वर्चनाद्युत्सवान्तेषु क्रियाप्रयोगविशेषज्ञं यथोक्तमन्त्रांस्तत्प्रायश्चित्तञ्च सम्यग्वेत्तारमास्तिक्ययुतं प्रसन्नमानसं निष्कलसकलध्याने[9] निश्चलं शान्तिशक्तिसमायुक्तं नारायणपरायणं तत्कर्मपरं वैष्णवं [10] भक्तिमन्तमेकं गुरुं वरयित्वा तथैवंविधगुणान् [11] स्थापकांश्चतुरस्त्रीन् द्वौ वा बिम्बप्रतिष्ठापनार्थं पौण्डरीकाग्नेरध्वर्युमेकं पञ्चाग्नीनां पञ्च वास्तुहोमस्यैकं परिवार[12] होमानामध्वर्यून् ब्रह्मसोमावृत्विजौ द्वौ होतारमेकं सर्वदेवार्चनार्थं चत्वारो द्वौ वा [13] स्थापनार्थं प्रतिबेरमेकमेवं पदार्थिनः सम्यग्वरयित्वा देवयजनं करिष्यमीतिताननुज्ञाप्य तैरनुज्ञातो यजमानः [14] स्वकिल्बिषानुरूपं कृच्छ्रं चरित्वा शुद्धात्मा जितेन्द्रियो यावत्प्रतिष्ठान्तं तावद्धविष्यभोजी भूत्वा आलयार्चनमेतद्देवयजनमारभ्य पूर्वोक्तैरेव कारयेत् । तेऽपि केशश्मश्रूणि वापयित्वा शुद्धदन्ता विधिनैव स्नाता यथाकामं पुरुषसूक्तपूर्वं [15] यजुस्संहितास्वाध्यायेन ब्रह्मयज्ञं कुर्वन्तः [16] प्राजापत्यं पादकृच्छ्रं

1. ट. म. अतिद्रुते. 2. च. म. पूर्वतो यजमानः. 3. देवदूषक च. गलितं तत्र म कोशे. 4. अन्यकर्मपरानिति ठ. म. कोशयोः नास्ति. 5. च. विवर्जयित्वा. 6. च. नित्यस्वाध्यायनारायणपरायणान् जन्मज्ञानार्चनादीत्यादि. 7. वैखानसविद इति ट कोशे नास्ति. 8. ट. म. भूपरीक्षाद्युत्सवान्तेषु. 9. क. ध्याने निश्चलं. 10. च. धीमन्तं. 11. च. द्वौ स्थापनार्थं. 12. च. देवानां. 13. च. स्थापनार्थमेकं. 14. ट. म. स्वस्वकिल्बिष. 15. क. यजुस्संहितां स्वाध्यायेन. 16. ट. प्राजापत्यपादकृच्छ्रं.

SGDF
Sri Gargeshwari Digital Foundation

त्रिरात्रमेकाहं वा कृच्छ्रं चरित्वा यावत्प्रतिष्ठान्तं [1]तावदनन्यपराः त्रिषवण-स्नायिनश्च एककाले [2]हविष्याशिनो जितेन्द्रिया भवेयुः ॥

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे आचार्यलक्षणं नाम एकोनषष्ठितमोऽध्यायः ।

## ॥ अथ षष्टितमोऽध्यायः ॥

### अक्ष्युन्मेषणम् ।

अथातो नवबिम्बस्याक्ष्युन्मेषणम् । प्रतिष्ठादिवसात्पूर्वं पञ्चमेऽहन्यमन्त्रकं शिल्पिना कारयित्वा समन्त्रकञ्च कुर्यात् । देवालयस्योत्तरे प्रपायां श्रामणकाग्नि-कुण्डं कृत्वा वास्तुहोमविधिना वास्तुहोमं हुत्वा आलयाभिमुखे [3]चतुरश्रां प्रपां कृत्वा तोरणपूर्णकुम्भवितानध्वजदर्भमालादिभिरलङ्कृत्य तन्मध्ये चौपासनाग्निविधिना कुण्डं कृत्वाऽग्निमाधाय तथैवाघारं हुत्वा पुरुषसूक्तं विष्णुसूक्तं जयादीन् मूर्धादि [4] पादपर्यन्ताङ्गनामभिरङ्गहोमं हुत्वा विमानञ्चेत् नवं स्थूप्याद्युपानान्ताङ्गनामभिर्वि-मानदेवताभ्यो हुत्वा देवाभिमुखे सुवर्णशृङ्गां रौप्यखुरां पूर्णपुष्टाङ्गां वस्त्रस्कन्धां कांस्यदोहनां सवत्सां गां स्थापयित्वा गोदानसूक्तेन सर्वाङ्गमभिमृश्य अग्निं परिषिच्य भूमिदैवत्यं [5]वारुणमैन्द्रं वायव्यमाग्नेयं वैष्णवं व्याहृत्यन्तं जुहुयात् । यजमानेन वस्त्राङ्गुलीयाभरणाद्यैरलङ्कृत्याभिपूजितो गुरुः पादौ प्रक्षाल्याचम्य सुवर्णेन कृतं पात्रं तूलिकामप्यादाय तत्पात्रे [6]वर्णं गृहीत्वाऽभ्यर्च्य देवस्य दक्षिणस्यामुत्तराभि-मुखः स्थित्वा देवाभिमुखे प्रच्छन्नपटं कृत्वा महीसूक्तेन वर्णमभिमृश्य देवं ध्यायन् पुरुषसूक्तेन दक्षिणे नयने [7]वामे च एकाक्षरादिना महाभूतपरमात्माधि-दैवतानि पक्ष्मवर्मरक्तशुक्लकृष्णज्योतिर्मण्डलानि [8]यूकाचित्रेण वर्णेन कृत्वाऽक्ष्यु-

1. क. अनन्यतत्पराः. 2. A. हविष्यभोजिनः. 3. ट. म. चतुरश्रं. 4. म. पादान्ताङ्गानां. 5. म. वारुणान् मन्त्रान्. 6. म. सुवर्णं. 7. च. चैकाक्षरादिना वामे च. 8. B. यूकमात्र वर्णेन कृत्वा. म. यूक्ष्माग्रेण.

SGDF
Sri Gargeshwari Digital Foundation

न्मेषयेत् । [1]गोदानसूक्तेन देवस्य तां गां दर्शयित्वा 'श्रिये जात' इति श्रीदेव्याः [2]मेदिन्यादिना महीदेव्याश्च अन्यदेवानां तत्तन्मन्त्रेणाक्ष्युन्मेषणं [3]तथैव कृत्वा पुण्याहं वाचयेत् ।

ध्रुवबेरस्य वर्णहीनस्य च नवकौतुकबिम्बादीनाञ्च वर्णं विना सुवर्णसूचीदृढकरीभ्यामेव पक्ष्मादीनि सङ्कल्प्याक्ष्युन्मेषणं कुर्यात् । अथवा ध्रुवबेरस्य प्रतिष्ठादिनात्पूर्वं पञ्चमेऽहन्यमन्त्रकं तृतीये द्वितीये वा समन्त्रकमक्ष्युन्मेषणं कारयेदिति केचित् । अग्नौ वैष्णवं हुत्वा अन्तहोमान्ते नवकौतुकबिम्बादीनामधिवासमारभेत ।

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे अक्ष्युन्मेषणविधिर्नाम षष्टितमोऽध्यायः ।

---

## ॥ अथ एकषष्टितमोऽध्यायः ॥

---

### अधिवासनम् – पञ्चगव्येषु ।

[4]अथाधिवासनम । आलयस्योत्तरे प्रपां कृत्वा देवं प्रणम्य आपोहिरण्यपवमानैर्बिम्बं प्रमार्ज्य वस्त्रादिभिरलङ्कृत्य जलद्रोणीमादाय संशोध्य अवटे वरुणं सम्पूज्य 'वसोः पवित्र' मिति पञ्चगव्यैरापूर्य पञ्चशयनानि वासांसि वा आस्तीर्य विष्णुसूक्तेन तत्र प्राक्छिरः शाययेत् । तद्दिनेऽतीते स्नात्वा विष्णुसूक्तेन बिम्बमुद्धृत्यालङ्कृत्य जलद्रोणीं संशोध्य 'शन्नोदेवी' रिति [5]गोक्षीरेणापूर्य पद्मोत्पलादिपुण्यपुष्पाणि अवकीर्य क्षीरं क्षीरोदधिं शयनमनन्तं देवमनन्तशायिनं ध्यात्वा '[6]समुद्रवती श्रृङ्गे' इति प्राक्छिरः शाययेत् । अथवा दर्भाग्रान्, कुशाग्रान् वा निक्षिप्य जलेनैवापूर्यात्रैव शाययेदिति केचित् । तद्दिनेऽतीते [7]प्रभाते स्नात्वा विष्णुसूक्तेन बिम्बमुद्धृत्य संस्नाप्यालङ्कृत्य पुण्याहं कृत्वा वारिपूर्णं तटाकं

1. म. गोसूक्तेन. 2. ग. मेदिनी देवीति. 3. तथैवेति छ. कोशे नास्ति. 4. च. अथाधिवासम. 5. म. क्षीरेणापूर्य. 6. ट. म. समुद्र - श्रृङ्गेति. 7. प्रभात इति ट. न. कोशयोः नास्ति.



SGDF Sri Gargeshwari Digital Foundation

नदीं वा गत्वा पुण्यतीर्थं शिवं पुण्यदं देवावासमित्यभ्यर्च्य शयनमास्तीर्य जलं शीतोदधिं ध्यात्वा देवं तथैव शाययेत् । अलाभे जलद्रोण्यां वा शाययेत् । अहर्वा यामं वा मुहूर्तं वा [1]एवमेव प्रत्येकमधिवासं कुर्यादित्यन्ये । अक्ष्युन्मेषणहोमान्ते त्र्यहमेवं जलाधिवासनं [2]कुर्यात् इति केचित् ।

### प्रतिष्ठासम्भाराहरणम, यज्ञपात्राणि ।

अथाङ्कुरार्पणादूर्ध्वं प्रतिष्ठादिवसात्पूर्वं सत्रेव सम्भारानाहरेत् । शमीजातमश्वत्थं तदलाभेऽन्यमरण्यर्थमाहृत्य त्वगाद्यपोह्य संशोष्य चतुर्विंशत्यङ्गुलायामां द्विकोलकोत्सेधां षडङ्गुलविस्तृतामरणिं तावत्प्रमाणामूर्ध्वपट्टिकां द्वितालायामं प्रादेशपरिणाहं मूलाग्रयोरेकाङ्गुलशिखायुतं मन्थदण्डञ्च कृत्वा यज्ञोक्तवृक्षैः स्रुवादींश्च कारयेत् । स्रुवस्यायामं द्विप्रादेशं मूलं प्रादेशनाहं तदर्धनाहं कण्ठं शनैः कृशमग्रे प्रादेशपरिमण्डलं द्व्यङ्गुलविस्तृतं माषमात्रनिम्नयुतं [3]मध्ये सिरावद्व्रीहिमात्रोन्नतमन्तःसुषिरं, जुहाश्चायामं द्वितालं तदर्धनाहं पद्ममुकुलोपमं मूलं मूलार्धपरिणाहं कण्ठमग्रे [4]कृशमूर्ध्वप्रदेशं षडङ्गुलं चतुरश्रं चतुरङ्गुलविस्तृतमष्टाङ्गुलायामं पार्श्वत्रयसमन्वितमेकाङ्गुलविस्तारोन्नतभित्तिकं मध्ये निम्नयुतं, उपजुहाश्चायामं यमद्वयं तदर्धनाहमूलं मूलार्धनाहं कण्ठं शनैः शनैः कृशमूर्ध्वे प्रदेशे षडङ्गुलं चतुरश्रमर्धाङ्गुलोन्नतैकाङ्गुलिविस्तृतभित्तिकं मध्ये प्रादेशमात्रवृत्तं चतुर्यवावगाढनिम्नयुतं तदूर्ध्वे त्रिकोणं मुकुलोपमं षडङ्गुलनिम्नमामुकुलान्तं [5]घृतधारायुतं, दर्व्याश्चायामं द्वितालं घनमेकाङ्गुलमग्रं भागविस्तारं [6]षडङ्गुलायाममूलं पञ्चाङ्गुलायामं तदर्धविस्तारं मध्ये कोलकं शनैः संक्षिप्तं कृत्वा, तोरणार्थमश्वत्थोदुम्बरप्लक्षवटान् सर्वालाभे अश्वत्थं वा आहृत्य पञ्चहस्तोत्सेधानि तदर्धविस्तृतानि [7]चतुर्हस्तविस्तृतानि त्रिहस्तविस्तृतानि वा मध्ये अरत्निमात्रत्रिशूलयुतानि तोरणानि कारयित्वा, (दर्भमाला रज्जूः) [8]पर्वणि पर्वणि द्वितालायामलम्बदर्भ-

---

1. च. एवं प्रत्येकं. 2. म. एवं कुर्यात्. 3. च. मध्य इत्यारभ्य सुषिरमित्यन्तं तथा. 4. कृशमूर्ध्वप्रदेशं षडङ्गुलं चतुरश्रमिति ट. कोशे न दृश्यते. 5. ग. स्रुवधारायुतं. 6. क. षडङ्गुलायामार्धमूलं, च. षडङ्गुलायामवच्चमूलं ग. षडङ्गुलायाममग्राच्चमूलं. छ. षडङ्गुलायाममग्रं मूलं. 7. म. द्विहस्त. 8. पर्वणीत्येव. ट. म. पाठः.

SGDF
Sri Gargeshwari Digital Foundation

द्वयान्वितां [1]दर्भमालां रज्जुं कारयेत् । कपिलाया घृतादीनि अलाभे [2] अन्यगवां वा, पलाशाश्वत्थखदिरबिल्वशमीवटोदुम्बरसमिधः सर्वालाभे पलाशमश्वत्थं वा, साग्रान् दर्भान्, वस्त्राणि दुकूलादीनि कार्पासादीनि श्वेतानि वा आहृत्य, सुवर्णेनाष्टमङ्गलपञ्चायुधवर्णचिह्नादीनि कारयित्वा, रत्नधातुबीजानि रत्नानामलाभे सुवर्णं बीजानां यवं धातूनां पारदं वा प्रतिनिधिं, एवमादीन् सम्भारान् सम्भरति ।

[3]प्रतिष्ठादिषु यथोक्तद्रव्यहीने ग्रामस्य यजमानस्यापि द्रव्यहानिः क्रियाहीने पुण्यहानिः मन्त्रहीने स्वाध्यायायुष्यहानिः श्रद्धाभक्तिहीने सर्वहानिः । तस्मात्सर्वंसम्पूर्णं कारयेत् ।

मौञ्ज्या त्रिवृतां रज्जुं कृत्वा आलयाभिमुखे गोमयेनोपलिप्य पञ्चवर्णैरलङ्कृत्य धान्यराशिं [4]कृत्वा तत्रारणिं [5]प्राङ्मुखं सन्न्यस्य मन्थदण्डे विष्णुमरण्यां महीमूर्ध्न्रेपट्टिकायामग्निमभ्यर्च्य मौञ्जीरज्जुं गृहीत्वा मन्थमावेष्ट्य वैश्वानरसूक्तेन योजयित्वा 'जातवेदस' इति मन्थनं कुर्यात् । [6]परितः करीषेन्धनानि संयोज्य वैश्वानरसूक्तं जप्त्वोत्पन्नमग्निं पात्रे समादाय 'अयं त इध्म' इति इन्धनानि प्रक्षिप्य 'घृतप्रतीक' इति प्रज्वाल्य 'आयुर्दा' इति प्रणम्याप्रमादं[7] निदधाति । सर्वहोमानामेषोऽग्निरिति विज्ञायते ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
सम्भाराहरणं नाम एकषष्टितमोऽध्यायः ।

---

## ॥ अथ द्विषष्टितमोऽध्यायः ॥

### यागशालालङ्करणम्, कुण्डादिकल्पनम् ।

अथ ब्राह्मणान् यथाशक्ति भोजयित्वा आलयात्पुरतो दक्षिणे वा यागशालां षोडशस्तम्भयुतां [8]चतुर्हस्तविस्तृतस्तम्भमध्यां पञ्चहस्तोच्छ्रय

1. ख. मूलां रज्जुं. 2. म. अलाभे इति न दृश्यते. 3. क. प्रतिष्ठादिषु श्रद्धाभक्तिहाने सर्वहानिरिति, च कोशे न दृश्यते. 4. म. प्रक्षिप्य. 5. क. प्राङ्मुखः. 6. च. ततः. 7. प्रमादमिति सर्वत्र. 8. ग. त्रिहस्तविस्तृतस्तम्भमध्यां.

SGDF Sri Gargeshwari Digital Foundation

[1]तालोच्छ्रयतलां [2]चतुरश्रां प्रपां कूटं वा यथोचितं कृत्वा चतुर्दिक्षु हस्तमात्रं खनित्वा तोरणान्यादाय [3]वेदरूपाणि ध्यात्वा यथाक्रमेण अश्वत्थोदुम्बरप्लक्षवटैः कृतानि प्रागादिचतुर्दिक्षु 'अग्निमीले' 'इषे त्वोर्जेत्वा 'अग्न आयाहि', 'शन्नो देवी' रिति स्थापयित्वा' पूर्णकुम्भकदलीक्रमुकवितानध्वजदर्भमालास्तम्भवेष्टनमुक्तादामपुष्पमालाद्यैः यथाशक्ति यागशालामलङ्कृत्य तन्मध्ये शयनं चतुर्दिक्षु चतुर्हस्तायतं चतुरश्रं द्वितालोच्छ्रयं [4]अर्धाधिकं बिम्बमानायतं वा परिकल्प्य तथैवालङ्कृत्य शयनात्प्राच्यां [5]श्रामणकाग्निकुण्डविधिना अग्निकुण्डं सन्न्यस्य तत्प्राच्यां औपासनाग्निकुण्डविधानेनाऽहवनीयस्य शयनाद्दक्षिणस्यां त्रिंशदङ्गुलिभिः भ्रमीकृत्य [6]तद्वृत्ते दक्षिणार्धेनोर्ध्ववेदिकमन्वाहार्यस्य प्रतीच्यां [7]सार्धाष्टादशाङ्गुलिभिः भ्रमीकृत्य तद्वृत्तेनोर्ध्ववेदिकं गार्हपत्यस्य उदीच्यां सपादयवत्रयाष्टाङ्गुलिभिः। संयुक्त [8]चत्वारिंशदङ्गुल्यायतैकभुजेन त्र्यश्रोर्ध्ववेदिकं पूर्वाग्रमावसथ्यस्य अन्वाहार्यावसथ्यगार्हपत्यानां कुण्डस्य वेदिद्वयं प्रत्येकं भागोन्नतविस्तारं मध्ये निम्नं षडङ्गुलमन्यत्सर्वमौपासनकुण्डवत्। यथा मध्ये विष्णुः प्राच्यां पुरुषः दक्षिणे सत्यः प्रतीच्यामच्युतः उदीच्यामनिरुद्धः तथा तत्तद्दिक्षु [9]पञ्चमूर्त्यर्थानां पञ्चानामेवमग्निकुण्डानि कृत्वा सभ्याद्दक्षिणपूर्वे पौण्डरीकाग्निकुण्डं गार्हपत्याग्निकुण्डवत् वृत्तमेकैकं भागोन्नतं त्रिवेदिसहितं षडङ्गुलायतषोडशदलैरधोवेदिकं मध्ये निम्नमष्टाङ्गुलमन्यत्सर्वमौपासनवत्। एवमग्निकुण्डानि सिकताभिः मृदा वा कुर्यात्। सभ्याग्निकुण्डमध्यनिम्नमष्टाङ्गुलमिति केचित्।

सर्वपरिवारदेवानां बिम्बं कृत्वा तत्तदालयाभिमुखे च औपासनविधिना महाग्निकुण्डं शयनं कुम्भपूजाञ्च कारयेत्। दिग्देववीशशान्तचक्रभूतानां वा तेषां बिम्बाभावे देवेशस्यैव पञ्चाग्नीन् पौण्डरीकाग्निकुण्डानि वा कल्पयेदित्येके। बिम्बाभावेऽपि दिग्देववीशशान्तचक्रमहाभूतानां पृथगेव होमं तन्त्रतः कुर्यादिति भृगुः।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे

सम्भाराहरणं नाम द्विषष्टितमोऽध्यायः॥

---

1. म. तालोन्नततलां. 2. च. चतुर्हस्तमात्र. 3. ट. विष्णुरूपाणि च. भ. वेदिरूपाणीति. 4. च. अर्धायतं. 5. च. औपासनकुण्डविधानेन. 6. च. तद्वृत्तेन. 7. च. मनुभिश्चार्धेन सहितैः भ्रमीकृते. 8. च. चत्वारिंशदङ्गुल्यायतत्रिभुजेन त्र्यश्रोर्ध्ववेदिकं. 9. च. पञ्चमूर्त्यहीणां.

SGDF Sri Gargeshwari Digital Foundation

## ॥ अथ त्रिषष्टितमोऽध्यायः ॥

### भिन्नकाले औत्सवादिप्रतिष्ठा ।

पूर्वं प्रधाने कौतुकबिम्बे प्रतिष्ठापिते तत्पश्चादौत्सवार्चयोरेव प्रतिष्ठा चेत्सभ्यपौण्डरीकौ वा कृत्वा तदुक्तहोमं जुहुयात् । देव्योः श्रीभूम्योश्च पश्चात् प्रतिष्ठा चेत् यागशालामध्ये दक्षिणोत्तरयोः शय्यावेदिं प्राच्यां औपासनाग्निकुण्डं श्वभ्रं कृत्वा कुम्भौ सम्पूज्य तयोर्देव्यावावाह्य तदग्नौ हौत्रं प्रशंस्य देव्योर्मूर्तिमन्त्रेणैवावाहनजुष्टाकारहोमान्ते श्रीदैवत्यं श्रीसूक्तञ्च श्रीदेव्याः पञ्चभूमिदैवत्यं महीसूक्तञ्च महीदेव्याश्च [1]प्रत्येकमेकविंशतिरावर्त्य वैष्णवान्तं हुत्वा [2]तन्मन्त्रेण तत्तत् स्थाने प्रतिष्ठापयेदिति विशेषः ।

अग्न्यालयाघारादिमन्त्रस्विष्टकृत्प्रभृत्यन्तहोमानां विधानं वैखानससूत्रेण विज्ञेयम् । आहवनीयादुत्तरपूर्वे स्नपनार्थमौपासनकुण्डवच्छ्वभ्रं कुर्यात् ।

### अहोरात्रप्रयोगः

[3]अथाचार्याद्याः सर्वे पूर्वेद्युः स्नाताः कृतप्राणायामाः सायं सन्ध्यामुपास्य स्वकीयानग्नीन् हुत्वा कर्मारभेयुः । स्थापकाः शतं प्राणायामानां कुर्युः । [4]गुरुर्यजमानं शिष्यं सङ्कल्प्य द्विजातिं "अणोरणीया" नित्यनुवाकेन प्रोक्ष्य शूद्रः अनुलोमो वा कारयिता चेदमन्त्रकमभ्युक्ष्य राजानं यजमानं [5]कल्पयेत् । तद्भृत्यत्वादनधिकाराच्छूद्रानुलोमयोः । तावुभौ च समग्रं फलं लभेताम् । सूतादिप्रतिलोमो यत्किञ्चिदपि दैविकं कर्म कर्तुं कारयितुं देवार्थं द्रव्यं दातुञ्च नार्हत्येव । आचार्योऽध्वर्यूंस्तत्तद्धोमेषु [6]नियुञ्जीत । तस्यालयस्योत्तरे तथैव वास्तुहोमं हुत्वा विमानस्य गर्भगेहादि सर्वत्र पर्यग्नि[7]पञ्चगव्योक्षणाभ्यां शोधयित्वा पुण्याहं वाचयेत् । अधिवासगतं देवेशमुद्धृत्य संस्नाप्य वस्त्राभरणगन्धमाल्यैरलङ्कृत्य यानमारोप्य ग्राममालयं वा सर्ववाद्यघोषयुतं प्रदक्षिणीकृत्य यागशालां

---

1. च. प्रत्येकं विंशतिः. 2. च. तत्तन्मन्त्रेण. 3. ट. कोशमात्रे अथेति. 4. क. गुरुरध्वर्यून्. 5. च. सङ्कल्पयेत्. 6. नियुञ्जीयात् 7. च. गव्यप्रोक्षणाभ्यां

SGDF
Sri Gargeshwari Digital Foundation

प्रवेश्य स्थापयेत् । तत्काले मथितमग्निं निधाय तदलाभे श्रोत्रियागारादाहृतं वा सर्वहोमेष्वाज्येनाघारं जुहुयुः ।

पञ्चाग्निष्वाघारः ।

पञ्चाग्नीनामाघारविशेषो वक्ष्यते । श्रीवैखानस [1]सूत्रोक्तौपासनाग्न्याघारविधिना सर्वं कृत्वा [2]गार्हपत्यं गार्हपत्ययज्ञदैवतं ओं भूः पुरुषं अच्युतमिति गार्हपत्यस्य अन्वाहार्यमन्वाहार्ययज्ञदैवतं ओं भुवः पुरुषं सत्यमित्यन्वाहार्यस्य आहवनीयमाहवनीययज्ञदैवतं ओं सुवः पुरुषं पुरुषमित्याहवनीयस्य आवसथ्यं आवसथ्ययज्ञदैवतं ओं महः पुरुषमनिरुद्धमित्यावसथ्यस्य सभ्यं सभ्ययज्ञदैवतं ओं जनः पुरुषं विष्णुमिति सभ्यस्य इत्येवमावाहनजुष्टाकारस्वाहाकारैर्विशेषमाघारं विभज्य पञ्चस्वग्निषु पञ्चधैव जुहुयात् । "पञ्चधाऽग्नीन् व्यक्रामत्, विराट्सृ"ष्टेति श्रुतेः । पौण्डरीकाग्नेराघारक्रमेणैवाघारं जुहुयात् । एतस्याघारं भगवान् ऋषिः सूत्रे [3]वैखानसेऽवोचत् । पूर्ववदौपासनवत्सर्वं कृत्वा पौण्डरीकं पौण्डरीकयज्ञदैवतं ओं तपः पुरुषं [4]वासुदेवं सत्यं पुरुषं नारायणमितिपौण्डरीकस्य आवाहनाद्याघारान्तं जुहुयादित्यत्रिः । सभ्यादिषु [5]षट्सु च देवं ध्यायन् आज्यमुपजुह्वाऽऽदाय वैष्णवं हुत्वा चरुं दर्व्याऽभिघार्याऽऽदाय जुह्वा च वैष्णवं यजेत् । अन्येषु [6]स्रुवेणाज्यं जुहुयात् ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
सर्वाग्न्याघारविधिर्नाम त्रिषष्टितमोऽध्यायः ॥

---

## ॥ अथ चतुष्षष्टितमोऽध्यायः ॥

कुम्भपूजाविधिः ।

द्वात्रिंशत्प्रस्थसम्पूर्णपक्वार्कफलाकारं खण्डस्फुटितकालरहितं कुम्भं सङ्गृह्य 'इन्द्रं प्रणयन्तं, स्वस्तिदा विशस्प'तिरिति तन्तुना यवान्तरमावेष्ट्य 'शुची वो

---

1. च. सूत्रोक्तविधिना. 2. क. अत्र सर्वत्र प्रथमोपात्त द्वितीयान्तमग्निनाम ट. भिन्नकोशेषु न दृश्यते । 3. च. वैखानसः 4. वासुदेवमिति पौण्डरीकस्य श्रामणकं श्रामणकयज्ञदैवतं ओं सत्यं पुरुषं नारायणमिति क. कोशे पाठः अत आवाहनादीति ग्रन्थः 5. षट्सु श्रामणके चेत तत्र क. कोशे पाठः 6. स्रुवेणैव.

SGDF Sri Gargeshwari Digital Foundation

हव्या' इति प्रक्षाल्य दिवैव नद्यां जलं 'धारा'स्वित्यादाय वस्त्रेणोत्पूय 'इदमापश्शिवा' इत्यभिमृश्य सर्वगन्धयुतेन तज्जलेन 'विश्वतश्चक्षुः - नमस्सुलो'मीति कुम्भमापूर्याहताभ्यां दुकूलाभ्यामन्यच्छेतवस्त्राभ्यां वा कुम्भस्य कण्ठमावेष्ट्य अतो देवादिना कूर्चकुशपुष्पगन्धाक्षताश्वत्थपल्लवानि निक्षिप्य 'इयं जागृति' रित्यभिमृश्य सौवर्णान्यष्टमङ्गलपञ्चायुधानि स्रुक्स्रुवकमण्डलुजुहूपजुहूछत्रचामराङ्कुशध्वजतुलातोदयुगलाङ्गलादीनि [1]वर्णचिन्हानि सर्वाणि द्व्यङ्गुलमात्राणि [2]चातुर्वर्ण्याभिवृद्ध्यर्थं तत्कुम्भे विष्णुसूक्तेन प्रक्षिप्य देवस्याभिमुखे धान्यराशौ तत्कुम्भं सन्न्यस्य ध्यानमारभेत ।

## ध्यानप्रकारः ।

[3]उदङ्मुखः समासीनो गुरुरात्मसूक्तं जप्त्वा हृदये प्रणवं बीजाक्षरञ्च सन्न्यस्य कुम्भजले वारुणमण्डलं ध्यात्वा तन्मध्ये [4]परमं सर्वकारणं ब्रह्ममयं सुवर्णाभमादिबीजं सन्न्यस्य प्रणवैरावेष्ट्य प्रत्यगात्मवित् ध्यानयुक्तो निर्गुणं निष्कलं सर्वव्यापिनं परमात्मानं हृदये ध्यात्वा तस्मात्तत्कुम्भजले समावाह्य सुवर्णवर्णं रक्तास्यनेत्रपाणिपादं [5]पीताम्बरधरं किरीटहारकेयूरप्रलम्बयज्ञोपवीतिनं शङ्खचक्रधरं चतुर्भुजं श्रीवत्साङ्कं प्रणवात्मकं भक्त्या सकलं ध्यात्वा सङ्कल्पयेत् । विश्वव्यापिनस्तस्यावाहनं विश्वस्मादेकत्र स्मरणमिति केचित् । सूर्यमण्डलादित्यपरे । देव्यौ स्यातां चेत् देवेशेन सह तत्कुम्भे समावाह्य तत्तद्रूपं तथैव च ध्यायेत् ।

## प्रतिष्ठाविशेषे ध्यानादि ।

तरुणालयेऽर्च्यमानं बिम्बमानीय मूलालये प्रतिष्ठा चेत् देवस्य विशेषपूजां कृत्वा अभिमुखे कुम्पूजनमेवं कृत्वा तद्बिम्बाद्देवमावाहयेत् । तदर्चितं बिम्बं ध्रुवबेरस्यानुरूपं लक्षणयुक्तं [6]दोषहीनञ्चेत् तदेव मूलालये प्रतिष्ठापयेत । नाननुरूपम। लक्षणहीनं खण्डस्फुटितादिदोषैर्युक्तं दारूपलकृतञ्च यद्भवति तत् त्यक्त्वाऽन्यदादाय प्रतिष्ठापयेत् । अननुरूपमपि लक्षणयुतं दोषविहीनं लौकिकं तत्कौतुकोत्सवार्चा-

1. च, चिन्हादि. 2. चातुर्वर्ण्यहितार्थं. 3. च. उदङ्मुख 4. वरुणं. 5. पीताम्बरधरं. 6. दोषहीनं चेदित्यारभ्य नानुरूपमपि लक्षणयुतमित्यन्त. च. कोशे न दृश्यते.

SGDF
Sri Gargeshwari Digital Foundation

बिम्बानां स्थानादन्यत्र तदालये प्रतिष्ठाप्य यथालाभमर्चयेत् । पूर्वार्चितं बिम्बं दोषविहीनं यस्त्यजेत् स पापीयान् भवति । प्रथमे तरुणालये सद्यः अर्चितुमिच्छन् अलब्धे यथोक्ते कौतुके बिम्बे यथोक्तं तद्यावत्पुनः लभेत तावत् ध्रुवबेरस्योक्तवृक्षैरश्वत्थेन वा यथालाभमानेन कृतं बिम्बं प्रतिष्ठाप्यार्चयति । परिवारदेवानाञ्च तत्तद्बिम्बं सन्न्यस्य तत्तद्रूपाणि यथोक्तं ध्यात्वा आवाहयेत् ।

### कलशस्नापनम् ।

देवेशं देव्यौ कुम्भञ्च सर्ववाद्यघोषयुतं समानीय बिम्बं श्वभ्रे तद्दक्षिणे कुम्भञ्च सन्न्यस्य व्रीहिभिस्तण्डुलैर्वा पुरतो दण्डवत्पङ्क्तिं कृत्वा क्षीरघृतमधुसिद्धार्थोदकाक्षतोदक [1]गन्धोदककुशोदकैः पूर्णान् कलशान् पार्श्वे तदुपस्नानांश्च उदकपूर्णकलशानुत्तरादि च सन्न्यस्याभ्यर्च्य 'शन्नो देवीः, अग्न आयाहि, अग्निमीले, पूतस्तस्य, इमा ओषधयः, अभित्वा शूर, चत्वारि वा' इत्युक्त्वा क्रमेण तैः सप्तभिः कलशैः तदुपस्नानैः 'वारीश्चतस्र' इति देवेशं [2]संस्नाप्य तत्तद्द्रव्यैः कुम्भञ्च प्रोक्ष्य शुद्धोदकेन देवं पुनः संस्नाप्य [3]धौतवस्त्रेण विमृज्य वस्त्रोत्तरीयाभरणगन्धमाल्यैरलङ्कृत्य पाद्याद्यैरर्चयेत् । औत्सवादिबहुबेरैः सह प्रतिष्ठा चेत् स्नपनं पृथगेव विधीयते । भिन्ने गर्भालये [4]तदलाभे च कुम्भपूजनस्नपनशयनानि यथोक्तहोमञ्च पृथगेव कुर्यात् ।

### शयनास्तरणम् ।

सर्वालङ्कारयुते शयनस्थाने धान्यराशिं कृत्वा बैल्वफलकां न्यस्य तदूर्ध्वे च अण्डजं पक्षिपिञ्छकृतं मुण्डजं कार्पासकृतमाविकादि मृगरोमकृतं [5]रोमजं सिंहव्याघ्रादिचर्मकृतं चर्मजं कौशेयकृतं वामजं, एतान्युपर्युपरि क्रमेण शयनान्यास्तरेत् । तदलाभे पञ्च वस्त्राणि वा शिरःपादयोरुपधानञ्च कृत्वा शयनमभ्युक्ष्य पुष्पाण्यवकीर्य विष्णुसूक्तेन देवेशं कुम्भमप्यादाय तच्छयने समारोप्याभिमुखे तण्डुलेषु सुवर्णसूत्रं तदलाभे [6]कुतपादितन्तुं सन्न्यस्य पुण्याहं

---

1. च. कुशोदकगन्धोदकैः 2. देवेशं संस्नाप्य. 3. च. धौतेन वस्त्रेण. ग. नववस्त्रेण. 4. च. तद्भेदे च. 5. रोमजं चर्मजं वामजमिति त्रीणि पदानि पृथक् पृथक् लक्षणवाक्यानि निविष्टानि दृश्यन्ते. च. कोशे. 6. च. कुतपादिसूत्रं वा.

SGDF
Sri Gangeshwari Digital Foundation

कृत्वा तत्सूत्रं 'कृणुष्व पाज' इत्यनुवाकेनाभिमृश्य स्वस्तिसूक्तेनादाय हस्ताभ्यां[1] 'स्वस्तिदा विशस्पति' रिति देवस्य दक्षिणहस्ते देव्योस्तत्तन्मन्त्रेण वामे प्रतिसरं बद्ध्वा [2]यद्दिग्विमानद्वारं तद्दिङ्मौलिं यथा शयने कौतुकबिम्बं यद्वैष्णवमिति शाययित्वा [3]देव्यौ च तत्तन्मन्त्रेण सह पार्श्वयोः शाययेत् । तदेकशयनवेद्यां पृथगेव शयनान्यास्तीर्य अर्चामौत्सवञ्च प्रतिसरं बद्ध्वा तथैव शाययेत् । उत्तराच्छादनवस्त्रेण कण्ठादधः प्रच्छाद्य देवपार्श्वे [4]रत्नादीनि सन्न्यस्य अधिवासयेत् । ऋग्वेदादि [5]चतुर्वेदानां प्रागादिचतुर्दिक्षु अध्ययनं कुर्यात् ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
कुम्भसङ्ग्रहणादिशय्याधिवासान्तविधिर्नाम
चतुष्षष्टितमोऽध्यायः ॥

---

## ॥ अथ पञ्चषष्टितमोऽध्यायः ॥

### हौत्रशंसनम् ।

अथ प्रधानाग्नौ हौत्रप्रशंसनम् । वस्त्राभरणाङ्गुलीयैः अलङ्कृतः होता पादौ प्रक्षाल्याचम्य देवेशं प्रणम्य सभ्यात्प्राच्यां पश्चिमाभिमुखः तिष्ठेत् । तं सभ्याध्वर्युः 'होतरे' हीति वदेत् । स होताऽध्वर्युं 'अध्वर्यो देवता' इत्युक्त्वा पादौ प्रक्षाल्याचम्य पूर्ववत् स्थित्वा 'ओं नमः प्रवक्त्रे' इत्युक्त्वाऽन्ते होता स्वनाम 'शर्माण' मिति संयोज्य 'भूते भविष्य' तीति च हिङ्कारपूर्वं 'भूर्भुवस्सुवरो' मिति प्राङ्मुखः 'प्रवो वाजा' इति वदेत् । सोऽध्वर्युस्तदुक्तमोङ्कारं श्रुत्वा पलाशसमिधः अग्नौ क्षिपेत् । स होता 'अग्ने महां अ' सीत्यन्ते यजमानगोत्रनाम संयोज्यान्ते 'देवेद्धो मन्विद्ध' इत्याद्युक्त्वा देवेशं पञ्चमूर्तिनामभिरावाह्य परिवारार्चनोक्तानुक्रमेण श्रीभूमी मार्कण्डेयादीन् पाकोर्जुनान्तान् परिषद्देवानपि मूर्तिमन्त्रैरावाहयेत् । अध्वर्युरपि देवेशादिशर्वान्तान् दक्षिणप्रणिधौ

---

1. च. कोशे न दृश्यते. 2. च यतो द्वारं ततो मौलिं तथा शयने. 3. ABM. देव्योश्च. 4. छ. रत्नादि. 5. A. B. चतुर्विधानां.



SGDF
Sri Gargeshwari Digital Foundation

धात्रादिभूतान्तानुत्तरप्रणिधौ तथाऽऽवाह्य आवाहनक्रमेण जुष्टाकारं कृत्वा मूर्तिमन्त्रैस्तथैवाहुतीर्यजेत् । देवं ध्यायन् वैष्णवं [1] हुत्वा पञ्चवारुणं जयानभ्यातानान् राष्ट्रभृतो यद्देवादींश्च जुहुयात् ।

## सर्वदेवार्चनम् ।

यागशालायां परितः सर्वान् देवानेतानर्चयेयुः । शङ्कर बलिरक्षकसरस्वती रवि [2] शक्राग्नि पवित्र शौल्कशान् प्राच्यां प्रत्यङ्मुखान्, भौम गुह दुर्गा-[3]यम मन्द सप्तरोहिणी सप्तमातॄ रुत्तरमुखान् दक्षिणस्यां, निर्ऋति महाकाली-विष्णु वरुण बुध ज्येष्ठा पुष्परक्षक वायून् [4]प्राङ्मुखान् पश्चिमस्यां, शुक्रं भृग्वादिसप्तर्षीन् गङ्गा कुबेर चन्द्र महाभूतेशान् [5] दक्षिणाभिमुखान् उत्तरस्यां, द्वारेषु द्वारपालान् विमाने न्यक्षादीनभिमुखे श्रीभूत गरुड चक्र ध्वज शङ्ख महाभूतान् [6]सप्तविंशतिविग्रहैः त्रयोदशैर्वा अर्चयेयुः ।

## सहस्राहुतिः ।

[7]ततः सभ्याग्निं परिषिच्य अग्नौ 'स्वस्ति चैवेह, प्रजापतये, अग्निर्धीमतये, आदित्येभ्यो, विश्वेभ्यो देवेभ्यो, मरुद्गणेभ्यो भूरग्नये, भुवो वायवे, सुवरादित्याय, भूर्भुवस्सुव' रिति दशकैः शतशो जुहुयादेषा सहस्राहुतिः ।

## पारमात्मिककल्पः ।

पौण्डरीके [8]शतं पद्मं [9]आहृत्य कपिलाघृते समाप्लुत्य विष्णुगायत्र्या प्रत्येकं हुत्वा पद्मालाभे बिल्वपत्रेण वा आज्येन 'विष्णुः सर्वेषां, सुसूक्ष्मः, ज्योतिर्वा पारमात्मिकं, ईशो यस्मात्, रायामीशो, यो ब्रह्मशब्दो, यो वा त्रिमूर्तिर्यद्वा कृतं, कं कोशं, यं यज्ञैः-यो वा गविष्ठो, यो वा वायुः, त्वमग्ने त्रिगुणः, त्वं जीवस्त्वं, भूमेर्वितन्वन्, मनस्त्वं भूत्वा, त्वं बुद्धिर्भू, नां, यः सूक्ष्मान् ता यस्य वा भयात्, [10]यन्त्वां सर्वं - यस्त्वं भूत्वा, कामो भूत्वा, अज्ञादज्ञात्, यो मोहयन्, यो [11]द्वादशात्मा, यो ब्रह्मा ब्रह्मविदां, सारस्वतो वा, यो वा परं ज्योतिः, यो दोषो, यस्यै-

---

1. च. त्रिभिर्हुत्वा. 2. च. रविचक्रादि ? 3. च. यमुना. 4. म. प्राङ्मुखान्. 5. वीशान्. 6. ट. सप्तविंशतित्रयोदशविग्रहैर्वा. 7. ट. तस्याग्निं परिषिच्य. 8. ट. म. शतान् पद्मान्. 9. च. व्याहृत्या कपिलाघृतैः. 10. ट. A. यन्त्वं 11. यो वा दशात्मा - भाष्यपाठः

SGDF
Sri Gargeshwari Digital Foundation

ताः-वाको वा, द्वावेतौ, [1]द्वौ वा आयुः, यो वा तेजः [2]सा सम्पायात्, यो वा संयोगः, सहस्रं वा, स्वातिगा गुसयः, सत्यं वा, सत्यो ज्योतिः-सत्यं पुण्यं, सत्योद्योगः, [3]कामीमिमां, आरिणी वा, तत्सत्त्वो वा विष्णुः, तद्भूर्भूस्थं आपो वा[2] आपः, त्रयी वा, कामं, द्वौ वा मुख्यौ, स एकैक स्साधारः - स्वयमादिः [4]यत्स्वयं सृष्टं, स्वौजसा सर्वं, क्ष्मामेकां, यः कुन्धरमाणो, यो वा पृथां, [5]यां गामुशन्तीं, प्रजापते न त्वत्, योधूर्धुरं, यो वा व्यहिंसीत - तपोनिधिं, यो वा नृसिंहो, रयिः ककुद्मान्, राकामहं, वेदाहमेतं, [6]दिग्दोषा यस्य, [7]पद्मास्य वक्षो, यः पुण्डरीको, रयीणां पतिं, रायां पतत्रे - यत्सारभूतं, फलो वा एषः, धूर्णो वहन्तां, विश्वं बिभर्षि, सो वा स्वरूपो, भूर्भुवो वा, दाक्षायण्यां आशास्समस्ताः, यो जन्ममानां, यो वा दशानां - चत्वारो दोषाः, वक्षो वसत्यस्य, अणोरणीयान्, विष्णुर्वरिष्ठः, [8]अब्जो जुषन्तो, मामात्मगुप्तां, यं चिन्तयन्तः, पुण्याच्च पुण्यः, सो नो भूतः, सत्त्वेव नित्यं - या गा वरिष्ठा, [9]वाय्वन्तरात्मा, सर्वोपरिष्टात, तमः सर्वभूतं, ज्योति ज्योतिषां, सत्त्वं सत्त्वात्मकं, अनिर्भिण्णं, यस्येच्छा, यो वेदादिः, यो वा व्यक्तं - यो वा भूतेः, सत्यस्सत्यस्थः, ऋतं सत्यं अंराजिमन्तं, मामात्मगुप्ता" मिति परमात्मिकं देवेशं ध्यायन् जुहुयात्।

होमान्तराणि।

आहवनीये पुरुषसूक्तं अन्वाहार्ये विष्णुसूक्तं ब्राह्मञ्च व्याहृत्यन्तं गार्हपत्ये वैष्णवं रुद्रसूक्तञ्च। आहवनीयादिषु चतुरग्निषु एवं प्रत्येकं [10]षोडशकृत्वो हुत्वा सकृज्जयादींश्च जुहुयात्। इन्द्रादीनां होमेषु तत्तन्मन्त्रानेकविंशतिकृत्वो वीशशैषिकयोर्मन्त्रान् [11]अष्टोत्तरशतं सकृदेषां [12]मूर्तिमन्त्रैश्च जुहुयात्॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
हौत्रप्रशंसनप्रधानहोमविधिर्नाम पञ्चषष्टितमोऽध्यायः॥

---

1. यो वा आयुः भाष्य पाठ. 2. सहसम्पायत् भाष्यपाठः. 3. कामीमुमां 4. यः स्वयं सृष्टं भाष्यपाठः 5. च. यां गानुशन्तीं 6. च. दिग्द्रोषो यस्य 7. पद्मास्य वक्षाः भाष्यपाठः. 8. ट. अर्जोजुषन्तः. 9. वायुरन्तरात्मा दीक्षितीय पाठः 10. च. षोडशशो हुत्वा. 11. च. शताष्टकं. 12. च, एतेषां.

SGDF
Sri Gangeshwari Digital Foundation

## ॥ अथ षट्षष्टितमोऽध्यायः ॥

### सर्वदेवत्यहोमः ।

अथ देवेशं प्रणम्य सभ्याग्नौ [1] परिषदां होमं जुहुयात । 'चिरायुषं-पुण्यौघनिष्ठा' येति मार्कण्डेयं [2] पद्मापित्रे - भृगव इति भृगवे 'ब्रह्मजज्ञानं-हिरण्यगर्भ' इति ब्राह्मं ब्रह्मणे 'रुद्रमन्यं त्र्यम्बक' मिति रुद्राय 'द्यावापृथिव्यो' रिति धात्रे 'यस्याः श्रियो' वेति विधात्रे 'तस्थुषो धृत्या' इति [3] भूतये 'य एष बिभ्र' तीति पतङ्गाय 'वितत्यविश्व' मिति पतिराय 'यो नोऽभिरक्ष' तीति वरुणाय 'मुनीन्द्रब्र'ह्मेति मणिकाय 'सन्ध्याया' इति सन्ध्यायै 'वैखानसा' येति वैखानसाय 'तापसा' येति तापसाय 'किष्किन्धा' येति किष्किन्धाय[4]'तीर्था' येति तीर्थाय 'त्रातार'मित्याद्यैन्द्रमिन्द्राय 'अग्निर्मूर्धा - अयम' ग्निरित्यग्नये '[4] यमो दाधा' रेत्यादि याम्यं यमाय 'वसवः प्रथमः सहस्राक्ष' इति निर्ऋतये 'ये ते शत' मित्यादि वारुणं वरुणाय 'मरुतः परमात्मा - मरुतो गणाना' मिति वायवे '[5] मिश्रवाससः - एतान्घ्नतैता' निति कुबेराय 'ईशानस्सर्वलोकानामीश [6] ईशत' इतीशानाय 'उदुत्यं - चित्र' मित्यादित्याय 'ममाग्ने वर्चोऽहमग्नेऽग्निमग्न आयाही'ति त्रीन् भौमाय 'प्रभुर्देवो - ग्रहाऽधिपति' रिति शनैश्चराय '[7] बृहस्पति-र्देवानां - बृहस्पतिस्सोमो - बृहस्पते अति यत् - उपयामगृहीत' इति बृहस्पतये '[8] श्रविष्ठजो यः-तद्विष्णोः परमं पदं-तद्विप्रास' इति बुधाय 'प्रजापते न त्वत्-सुभूस्स्वयम्भू' रिति शुक्राय 'भूभामिनीष्टगामि' नीति गङ्गायै 'सोम यास्ते-याते धामानी' ति चन्द्राय '[9] रुद्रमन्यं - त्र्यम्बक' मिति रुद्राय जगद्भुवं - जगद्भुवोऽधिपतिः - सुब्रह्मण्यो बृहस्पतेः - सुब्रह्मण्यो रुद्रभुवो - जगद्भुवः सुब्रह्मण्यो-जगद्भुवो योयजद्भुव' इति सुब्रह्मण्याय 'अतो देवाः - इदं विष्णु' रिति पुरुषाय

---

1. च. पार्षदां A. परिषदां सर्वदेवानां. 2. क. कोशे एव दृश्यते नान्यत्र. 3. भूतय इत्यत्र भुवङ्गः प्रकृतः. 4. क. यमो दाधार नमस्ते निर्ऋतय इति निर्ऋतये. 5. क. मिश्रवासस इत्यादिकौबेरं कुबेराय. 6. ईशित्रे भाष्यपाठः. 7. छ. बृहस्पतिर्देवेत्यादि बार्हस्पत्यं बृहस्पतये. 8. श्रविष्ठजां यः भाष्यपाठः. 9. च. रुद्रमन्यमित्यादि रुद्राय.

SGDF
Sri Gargeshwari Digital Foundation

'या ब्रह्मचारिणी - [1]सा चारुजन्म' नीति महाकाल्यै 'एषामराणां - याम्या' नीति ज्येष्ठायै 'जातवेदस' इत्यादि दुर्गायै 'नन्दिन्या मूल - आपो विवे' शेति नन्दिन्यै 'शाखाभूत - देवी प्रवाहि' [2]णीति ग्रन्थन्यै 'बिसिनी भूता - प्रविद्युताया' इति [3]कृच्छ्रूण्यै 'गङ्गात्राणी - विद्यां नोमा' त्विति [4]कुण्ठिन्यै 'माता ह्यमेया - आयामहं' त्वेति विकारिण्यै 'यया सतम्मत्यं - प्रसविण्गङ्ग' इति दद्रुण्यै 'याभ्यो हि तप्तं[5] या मानसा वे' तीन्द्रियविकारिण्यै - 'यतस्त्वमासीत् - अस्मा अस्मा' दिति भृगवे 'कस्याङ्गिरा अभूद्विसापय' तीत्यङ्गिरसे [6]'व्यावर्धते—सस्मार सोऽग्र' इति पुलहाय 'य एषो दानः - आनन्दरो दैत्य' इति पुलस्त्याय 'प्रप्रायशो - [7]ये निःष्यन्दा' इति क्रतवे 'यो नो वसिष्ठः - सप्तोत्तमाय' इति वसिष्ठाय 'य आनसूयेशो - य एष दिग्भ्य' इत्यत्रये - 'स एको भूत् [8]- यस्त्रैष्टुभ' श्चेत्याकाशाय 'प्रक्रम्य - यो मातारिश्वे' ति वायवे 'वृषाकपेः - ओजोभिमा' नीत्यग्नये 'आपो विश्वं - चातुर्य' मिति तोयाय 'तयाऽऽदित्या - तस्त्रीण्ये' षेति हरिण्यै 'पावकानः - महो अर्ण' इति सरस्वत्यै '[9]शं सा - भूयाम' इति श्रियै 'य उत्तमो - अग्नेः पथा य' मिति न्यक्षाय 'यमर्पयन्ति - यस्संहरती' ति विवस्वते 'ऋचामधीशो - नीतां धृति' मिति मित्राय [10]येनेष्टे - समूह्यतेऽम्बे' ति महीधराय 'चरुं पचेत् - चुल्ल्यां' इति हविरक्षकाय 'चतुर्मुखी - यालो' केति ब्रह्माण्यै 'त्रिणेत्रधारी - चिह्नश्च रौद्र' मिति रुद्राण्यै 'ज्वालामाला - [11]बालान् ह' रीति षण्मुख्यै 'युगे युगे - सर्वं र' मेति वैष्णव्यै 'कल्पेषु कल्पेष्वन्तेष्वि' ति वाराह्यै 'सा सर्वदेवेषु - मालाधरी' येतीन्द्राण्यै चण्डी हरी - मोही विमो' हीति काल्यै 'धाताऽस्य - फुल्लान्ही' ति पुष्परक्षकाय [12] विश्वान् बले - [13]सौ' रेति बलिरक्षकाय 'आग्नेयः [14]प्रेक्षाम' इति विष्वक्सेनाय 'शतधारं - कदापि सृजत'

---

1. सा चारुजन्मा भाष्य पाठः. 2. प्रवाहिनीति प्रायशः पाठः 3. ट. कृच्छ्रौ. 4. म कुष्टिन्यै. 5. क. कोशे दृश्यते. 6. व्यावर्तते भाष्यपाठः. 7. ये. निष्यन्दाः भाष्यपाठः. 8. यस्त्रिष्टुभश्च भाष्यपाठः ट. यत्त्रैष्टुभस्य. 9. शंसानि यच्छतीति क कोशमात्रे. 10. येनेष्टे भाष्यपाठः. 11. बालाहरीत्येव प्रायशः पाठः. 12. विश्वान् बलिरक्षितेत्यादि भाष्यादृतः पाठः 13. म. सौचोहत. 14. प्रैषाम इति भाष्यपाठः.

SGDF Sri Gargeshwari Digital Foundation

इति गरुडाय '[1]धर्मोधमादौ - योगं धरन्त्वि' ति विघ्नाय 'यमर्पयन्ति - शन्नो निवत्ता' मिति नागराजाय 'भूमाननोग्रे - [2]वन्ध्योन' इति सुदर्शनाय 'आसाग्र - ओजो बला' येति ध्वजाय 'तन्मायशोऽग्रे - अस्मादुपास्य' इति पाञ्चजन्याय 'भूतानां - भूतो भूते' ष्विति महाभूताय 'अक्षहन्ते - ये भूता' इति पाकोऽर्जुनाय च ।

एतेभ्यः परिषद्देवेभ्यो हुत्वा देवेशाय वैष्णवं [3]त्रिर्हुत्वा विष्णुसूक्तमिन्दाहुत्याश्रावितदीन् जुहुयात् ।

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे सर्वदेवत्यविधानन्नाम षट्षष्टितमोऽध्यायः ।

---

## ॥ अथ सप्तषष्टितमोऽध्यायः ॥

### रत्नन्यासः

रात्रौ होमान् [4]समाप्य प्रभाते [5]यजमानेन स्थापकाद्यैश्च युक्तो गुरुर्विधिना कृतस्नानो देवालयं प्रविश्य देवेशं प्रणम्य अधिवासितरत्नादीन्यादाय गर्भालयं प्रविश्य ब्रह्मपदमध्ये चतुरङ्गुलविस्तारोन्नताभिः वेदिभिः तिसृभिः सहितं तालोन्नतं चतुरश्रं भुजङ्गसमं पद्माकरं वृत्तं वा कौतुकस्यार्चापीठं कृत्वा तन्मध्ये [6]भागावगाढविस्तारयुतं श्वभ्रं कृत्वा गोमयेनोपलिप्य पञ्चगव्यैः प्रोक्ष्य श्वभ्रे पञ्चविंशतिपदं परिकल्प्य रत्नादीनभ्यर्च्य 'तमेकने' मिमितित्यभिमृश्य मध्ये पदे तेनैव गजं 'ब्रह्मा देवाना' मिति ब्रह्ममणिञ्च प्रतिष्ठाप्य शूलस्थापनोक्तवत् 'इन्द्रं प्रणयन्त' मित्याद्यैः वज्रादीनैन्द्रादिषु [7]तत्तद्दिगन्तरेषु 'शन्नो निधत्ता' मित्याद्यैरमृताश्मकादीनि च रत्नानि सन्न्यस्य पश्चात्तथैव 'ब्रह्मा देवाना' मित्याद्यैः

---

1. धर्मोधर्ममिति भाष्यपाठः. 2. वन्द्यो न इति भाष्य पाठः 3. च. त्रिभिः 4. B. समारोप्य. 5. B. यजमानः स्थापकाद्यैश्च यथोक्तगुरुः विधिनैव स्नात्वा. 6. च. भागावगाढं तालविस्तारयुतं. 7. ट. तद्दिगन्तरेषु.

SGDF
Sri Gargeshwari Digital Foundation

मध्यादिषु सौवर्णं गैरिकादीन् धातूंश्च ततो बीजानि च तथैव सन्न्यस्य इन्द्रादिषु श्रीवत्साद्यष्टमङ्गलानि दक्षिणवामयोः पञ्चायुधान् तत्तन्मन्त्रैः पूर्ववत्प्रतिष्ठाप्य [1]'ब्रह्म प्रति' ष्ठेति वर्णचिन्हानि 'ये ते शत' मिति मेघ [2]विद्युल्लताश्च 'श्रिये जात' इति श्रीरूपं तेषामुपरि 'प्रजापतिं प्रथम' मिति कूर्मरूपञ्च सन्न्यस्य क्षौमेनाच्छाद्य सुधया परिलेपयेत् ।

औत्सवादीनामुक्ते स्थाने यथोचितं पीठं रत्नन्यासं विनैव कुर्यात् । सुवर्णशकलानि न्यसेदिति केचित् ।

### देवोत्थापनम्, दक्षिणादानप्रकारः ।

ततो देवेशं प्रणम्य प्रणवेन बोधयित्वा स्थापकैः सहितो गुरुः तं देवमुत्थाप्याभिवन्द्य [3]पूर्ववस्त्रादीनि विमोच्यान्यैर्नववस्त्रकक्ष्योत्तरीयाभरणैर्नवैः पुष्पमाल्यैर्गन्धैरलङ्कृत्य पाद्याद्यैरभिपूजयेत् । तत्काले यजमानोऽभिवन्द्य गुरुं स्थापकांश्च वस्त्रोत्तरीयाभरणादिभि[4]रलङ्कृत्य एतेभ्यश्चाध्वर्युप्रभृतिभ्यः सर्वेभ्यः श्रद्धाभक्तियुतो यत्नेन सोदकं दक्षिणां दद्यात् । सुवर्णमेकविंशतिनिष्कं गुरवे स्थापकेभ्यः [5]प्रत्येकं पादाधिकं पञ्चनिष्कं सभ्याग्नेरध्वर्यवे होत्रे पौण्डरीकाग्नेरध्वर्यवे च [6]प्रत्येकमेकैकशः पञ्चनिष्कमाहवनीयादीनां चतुर्णामध्वर्युभ्यः प्रत्येकं त्रिनिष्कं [7]परिवारदेवानां अध्वर्यूणां अन्येषाञ्च पृथक् पृथक् पादाधिकनिष्कमित्येवं [8]दक्षिणया सुपूर्णोऽयं यागः सफलो भवति । [9]अल्पदक्षिणो यागो यजमानस्य निष्फलो भवति ।

### आलयप्रवेशप्रकारः, प्रतिष्ठापनम् ।

ततो मुहूर्ते समनुप्राप्ते सर्ववाद्यैः नृत्तैर्गेयैः छत्रैः पिञ्छैः चामरैः बर्हिणैरन्यैः सर्वालङ्कारैः [10]हृष्टजनैश्च परिवृतो गुरुः तत्कुम्भमुद्धृत्य शिरसा धारयन् पूर्वतो गच्छेत् । स्थापकाश्च हस्ताभ्यां देवमुद्धृत्य शकुनसूक्तं जपन्तोऽनु-

1. च. ब्रह्म ब्रह्मेति वर्णचिह्नानि. 2. च. छ. विद्युल्लतां. 3. च. पूर्ववत्. 4. च. आभरणाद्यैः. 5. छ. एकं दशनिष्कं. 6. च. एकैकं पञ्चनिष्कं. 7. म. च. परिवारदेवहोमानां. 8. च. दक्षिणापूर्णोऽयं 9. ट. म. अदक्षिणः. 10. ट. कोशे न दृश्यते.

SGDF Sri Gurgeshwara Digital Foundation

गच्छेयुः । पूर्वतो जलधारां कारयित्वा शनैरालयं प्रदक्षिणीकृत्य गर्भालयं प्रविश्यार्चापीठे जितेन्द्रिया ध्यानयुक्ताः स्थापकाः 'प्रतद्विष्णु' रिति कौतुकबिम्बं भक्त्या प्रतिष्ठाप्य तद्दक्षिणे श्रियमर्चाञ्च (प्रतिष्ठापयेत)। कौतुकपूर्वे किञ्चिद्दक्षिणाश्रिते [1] अर्चास्थापनमित्येके। वामे हरिणीमौत्सवञ्च तत्तन्मन्त्रेण स्थापयित्वा देवेशस्य [2] पादौ स्पृशन्तो विष्णुसूक्तं पुरुषसूक्तं वैष्णवञ्च जपेयुः ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे कौतुकस्थापनविधिर्नाम सप्तषष्टितमोऽध्यायः ।

---

## ॥ अथ अष्टषष्टितमोऽध्यायः ॥

### न्यासप्रकारः - आवाहनम् ।

पीठस्य दक्षिणपार्श्वे तिष्ठन् अतो देवादिना तत्कुम्भं सन्न्यस्य गुरुरात्मसूक्तं जप्त्वा ध्रुवबेरस्य पादौ स्पृष्ट्वा ध्रुवसूक्तं जप्त्वा तद्बेरस्य पादमध्ये यकारं मूर्धोदरपादेषु क्रमेण 'सुवर्भुवर्भू' रिति प्रणवञ्च सन्न्यस्य हृदये [3] सर्वदेवमयं सर्वकारणं सुवर्णवर्णमादिबीजं सन्न्यस्य तं प्रणवैरावेष्ट्य एकाक्षरादिना कुम्भस्थजलं तच्छक्तियुतं कूर्चेनादाय भक्त्या भगवन्तं ध्यायन् 'इदं विष्णुः- [4] आयातु भगवा' निति देवेशमयं तज्जलं 'विष्णुमावाहया'मीति ध्रुवबेरमूर्धनि स्रावयेत । एवं तदचले प्रत्यगात्मानमविकारमशेषविशेषं [5] पञ्चमूर्तिनामभिरावाहयेत्। [6] अचले देवेशः तद्व्याप्य तिष्ठति। तथैव [7] 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इति श्रुतिः। बेरहृदये तद्बीजं सन्न्यस्य श्रियं हरिणीञ्च तत्तन्मन्त्रेणावाह्य दीपाद्दीपमिव ध्रुवबेरादेवं [8] कौतुकबिम्बे अर्चायां औत्सवे चावाह-

---

1. B. अर्चास्थानञ्च. अर्चास्थाने स्थापयेदित्येके. 2. A पादं. 3. च. सर्ववेदमयं. 4. च. आयाहि. 5. च. अविशेषविशेषं 6. च. अचलः. 7. क. तथैव हि तत्सर्वमित्यादि. 8. च. एवं तथा कौतुकबिम्बे.

SGDF
Sri Gargeshwari Digital Foundation

येत् । यथा गार्हपत्यादाहवनीयादिष्वग्निं प्रणीय [1]जुहोति ध्रुवबेरात्कौतुकबिम्बादिषु समावाह्यार्चयेत् । भित्तिपार्श्वे दक्षिणे ब्रह्माणं वामे रुद्रं यथोक्ते स्थाने भृगुं मार्कण्डेयमन्यपरिवारदेवांश्च बिम्बे तत्तद्बीजं सन्न्यस्य तत्तन्मन्त्रेणावाहयेत् । बिम्बाभावे यथोक्ते स्थाने पीठे बीजन्यासं विनैवाऽऽवाहनं कृत्वा पादौ प्रक्षल्याचम्य

### पुण्याहम्, नित्यार्चनारम्भः, प्रतिष्ठान्तोत्सवः ।

गर्भालयं प्रविश्य स्थापकाद्यैः सह पुण्याहं वाचयेत् । यथोचितै रुपचारैः नित्यार्चनाविधानेनाभ्यर्च्य, शुद्धौदन पायस कृसर गौल्य [2]यावकानि हवींषि निवेद्य नैमित्तिकादिबल्यादीनि सर्वाणि कारयेत् । प्रतिष्ठादिने सायं ध्वजाऽऽरोहणं कृत्वा सप्ताहं पञ्चाहं त्र्यहं एकाहं वा सङ्कल्प्य उत्सवोक्तक्रमेणोत्सवं कृत्वा तदवभृथान्ते स्नपनोक्तविधिना स्नपनं कारयेत् । उत्सवं कर्तुकामश्चेद्रात्रौ यथाशक्ति स्नपनं कारयेत् । अथवा शुद्धोदकस्नपनम् ।

### आचार्यसम्मानम् ।

सुवर्णपशुभूम्यादिदक्षिणां गुरवे दद्यात् । तत्प्रतिष्ठायां उपयुक्तशयनोपधानानि वस्त्राणि कुम्भप्रक्षिप्तसुवर्णादीन्यन्यानि च द्रव्याण्युपयोगार्हाणि सर्वाणि गुरुरेव गृह्णीयात् । अन्यथा यजमानस्य सर्वं निष्फलं भवति । अनुपयोगद्रव्याणि भूमौ खनित्वा पिदध्यात् । भक्तिश्रद्धायुक्तो देववद् गुरुमभिपूजयेत् । 'मा स्म नास्तिको भू' दिति ब्राह्मणम् । [3]तस्मान्न नास्तिको भूयात् ।

### प्रतिष्ठाफलश्रुतिः ।

एवं प्रतिष्ठाकर्मणि कृते यजमानस्य पूर्वजन्मस्विहजन्मनि च [4]मनोवाक्कायजातं पापं सर्वं तदहैव नश्यति । ज्ञानयज्ञाद्यैः सद्यो ब्रह्मवर्चस्वी च भूयात् । प्रतिष्ठान्तप्रभृति [5]नित्यमहीनमविच्छिन्नं समग्रं चिरकालार्चनं यथा गच्छेत् तथा

---

1. च. प्रणीयान्तहोमं जुहोति. 2. A. B. यावकादि. 3. च. तस्मान्नास्तिको मा भूयात्. 4. ग. मनोवाक्कायकृतकर्मभिः B. कर्मणि. 5. A. नित्यंमहिमाविच्छिन्नं.



SGDF
Sri Gargeshwari Digital Foundation

[1]दीर्घस्थितिमविरोधात्समवेक्ष्य नानाविध[2]भूमिभोगानत्यन्तपुष्कलान् यत्नेन भगवत्पूजानार्थं तत्पूजकादीनामाचार्यादीनां नित्यदक्षिणार्थञ्च कल्पयित्वा [3]देवस्य परिच्छदांश्च दत्वा तथैव चिरकालं नित्यार्चनं कारयेत् । चिरकालार्चनेन [4]अभीष्टान् सर्वान् चिरमवाप्नोति । तथा भोगम् । अज्ञानादर्थलोभान्मोहाद्वा न कुर्याच्चेत् महादोषो भवेत् । देवार्थं कल्पितं सुवर्णपशुभूम्यादिसर्वमन्यत् द्रव्यञ्च 'विष्णोरिद' मिति सञ्चिन्त्याऽचार्यहस्ते अर्चकहस्ते वा जलेनैव दद्यात् । तत्सर्वं विष्णोर्दत्तमेव भवेत् । [5]येन यत्रैव पतेत्तस्य तत्पात्रमित्यहुः । नरके पतनत्राणात् सर्वपात्राणामुत्तमो हरिः । तस्मादेवं तदर्थं दानं तद्दातुः सर्वकामदमक्षय्यं वर्धयेत् जगतश्च हितं भवति । सर्वदेवमयस्य देवेशस्यार्चनं [6]सर्वशान्तिकरं वेदानां वैदिकानामप्यभिबृंहणम् । एतदेवं यत्नेनापि भक्त्या यः कुर्यात स पुत्रदारक्षेत्रमित्रस्वकुलपशुभृत्यवाहनादिसमृद्धिं सुवर्णरत्नधान्यादिसर्वसम्पदं व्याध्याद्यशुभनाशनञ्च लब्ध्वाऽभीष्टानि सर्वाणि सुखानि इह लोके चिरमनुभूय तदव्ययं शाश्वतं देवैरप्यनभिलक्ष्यं अतीन्द्रियं वैष्णवं [7]परमं पदं गच्छति । [8]तस्यैकविंशति पितरः पूर्वजाश्चैकविंशत्यपरजाताश्च विष्णुलोके महीयन्त इति ब्रह्मवादिनो वदन्ति ।

ग्रामादिषु तद्वास्तुनिवासिनः सर्वेऽप्येवमेव तत्फलं सर्वसम्पदमशुभनाशनमग्निहोत्रफलञ्च चिरमनुभवन्ति ।

यत्नादप्येतत्परिपालनमुपर्यधिकविवर्धनं वा यः कुर्यात्सोऽपि प्रथमेष्टकादिसर्वकर्मफलं [9]लभेतेति विज्ञायते ॥

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे महाप्रतिष्ठाविधिर्नाम

अष्टषष्टितमोऽध्यायः ॥

---

1. छ. दीर्घस्थितिविरोधान् समवेक्ष्य नानाविधविभूतगोदानाद्यत्यन्तफलान्वितं भगवत्पूजनार्थं A. नानाविधभूतिगोदानाद्यनन्तफलान्वितं. म. दीर्घस्थित्यविरोधात्. 2. क. भूमिखण्डं कल्पयित्वा. 3. छ. देवदेवस्य. 4. छ. अभीष्टान् कामान् सुचिरं कालमवाप्नोति. 5. इतो वाक्यद्वयं A. कोशेष्वेव लभ्यते. 6. ट. सर्वशान्तिकं. 7. परममिति ट. कोशमात्रे. 8. ट. एकविंशतिः 9. छ. लभेतेति मात्रम्.

SGDF Sri Gargeshwari Digital Foundation

## ॥ अथ एकोनसप्ततितमोऽध्यायः ॥

### नित्यार्चनाविधिः ।

अथातो भगवतो [1]नित्यार्चनाविधिं व्याख्यास्यामः । यथोक्तैर्मन्त्रैः स्नात्वाऽऽचम्य [2]अग्निमुपस्थाय देवानृषीन् पितॄन् तर्पयित्वा ब्रह्मयज्ञं कृत्व द्वादशभिः सूक्तैश्चतुर्वेदादिमन्त्रैः स्वाध्यायं करोति । 'प्रतद्विष्णुः स्तवत' इति देवालयं प्रदक्षिणं करोति । 'मणिकं प्रपद्ये' इति मणिकं प्रणम्य यन्त्रिकां 'निरस्त' मित्यादाय 'हिरण्यपाणि' मिति कवाटे संयोज्य 'दिवं विवृणोतु [3]दिवः स्वर्ग' मिति कवाटोद्घाटनं करोति । ततोऽभ्यन्तरं प्रविश्य अतो देवादिना देवस्य मुखमभिसमीक्ष्य 'शाम्यन्तु घोरा' णीति स्वपाणिना पाणिं त्रिः सम्प्रहार्य 'भगवतो बले' नेति देवं प्रणम्य दीपानुद्दीप्य शिष्यो 'दुहतां दिव' मिति घटमादाय नदीतटाककूपानां अलाभे पूर्वस्योत्तरमुपतिष्ठेत । 'आद्यमभिगृह्य' मीत्याद्यावं गृह्णाति । [4]ततो देवालयं प्रविश्य शिरःस्थमुदकुम्भं 'सोमं राजान' मिति न्यसेत् ।

अर्चको 'ब्रह्म ब्रह्मान्तरा' त्मेति हृदयमभिमृश्य 'द्यौर्द्यौर' सीति शिरोऽभिमृश्य 'शिख' इति शिखोद्वर्तनम् सकृत्। 'देवानामायुधै' रिति सर्वत्र [5]रक्षां कृत्वा 'सुदर्शन' मिति दक्षिणे हस्ते सुदर्शनं धारयति । 'रविपा' मिति वामे [6]शङ्खञ्च । 'सूर्योऽसी' ति दक्षिणे 'चन्द्रोऽसी' ति वामे च चक्षुषोः न्यस्य हृदये बीजाक्षरं न्यस्य हस्तयोस्तलयोः दक्षिणवामयोः सूर्याचन्द्रमसोः मण्डले न्यस्य 'अमुरण्यं विधिं यज्ञं ब्रह्माणं देवेन्द्र' मित्यङ्गुष्ठादि कनिष्ठान्तं न्यस्य 'अन्तरस्मिन्निम' इति ब्रह्माणं स्मरति ।

कुशैर्वस्त्रेण वा 'धारासु सप्त' स्वित्यपामुत्पवनं कृत्वा 'इदमापः शिवा' [7]इत्यपोऽभिमन्त्र्य 'अवधूत' मिति मार्जन्या [8]सम्मार्ज्य पांस्वादीन् परिहृत्य

---

1. छ. नित्यपूजाविधिं 2. A. आदित्यं. 3. छ. मात्रे. 4. तत इत्यादि न्यसेदित्यन्तं वाक्यं ब्रह्माणं स्मरतीत्यनन्तरं निविष्टम् । छ. कोशे. 5. कवचमिति छ. कोशपाठः 6. शङ्खं धारयति. 7. छ. इत्यभिमन्त्र्य. 8. छ. सम्मार्जयित्वा.

SGDF
Sri Gargeshwari Digital Foundation

गोमयेनोपलिप्य 'आशासु सप्त' स्विति पञ्चगव्यैः प्रोक्ष्य नश्यन्ति जगता' मिति देवस्य निर्माल्यं [1]शोधयित्वा 'अहमेवेद' मिति पीठान्निर्माल्यमैन्द्रादीशानपर्यन्तमपोह्य 'पूतस्त' स्येति वेदिं [2]परिमृज्य [3]'नारायणाय विद्महे' इति पादपुष्पं [4]पञ्चभिः मूर्तिभिर्दत्वा 'विष्वक्सेनं शान्तं हरममित' मिति देवस्य निर्माल्यहारिणं[5] [6]भगवच्छेषैः सर्वैरर्चयेदित्याचष्टे भृगुः ।

## स्नानासनम् सम्बन्धकूर्चम्, पुष्पन्यासः ।

'भूः प्रपद्य' इति देवेशं नमस्कृत्य 'परं रंह' इति पीठादादाय 'प्रतद्विष्णुः स्तवत' इति स्नानपीठे देवं संयोज्य 'परिलिखित' मित्याम्लादिना संशोध्य 'वारीश्चतस्र' इति [7]संस्नाप्य 'नमो वरुणः शुद्ध' इति क्षीरेणाभिषिच्य 'भूरानिलय' इति गन्धतोयैः पुनः संस्नाप्य ततः प्लोतेन विमृज्य 'भूरसि भूः प्रतिष्ठित्या' इत्यादिना जीवस्थाने प्रतिष्ठाप्य कुशाक्षतैः [8]समं वारिभिः प्रणिधिं प्रणवेनापूर्य गायत्र्या ध्रुवस्थानं प्रोक्ष्य 'संयुक्तमेत' दिति ध्रुवकौतुकयोः सम्बन्धकूर्चं प्रक्षिपेत् । ध्रुवस्य पादयोर्मध्ये 'विष्णवे नम' इति प्राच्यां पुरुषाय, सत्याय दक्षिणे, प्रतीच्यामच्युतायानिरुद्धायोदीच्यां[9] - आग्नेय्यां कपिलाय नैरृत्यां यज्ञाय वायव्यां नारायणायैशान्यां पुण्यायेति प्रथमावरणे — द्वितीयावरणे वाराहाय, नारसिंहाय, वामनाय, त्रिविक्रमायेति पूर्वादि प्रदक्षिणं चतुर्दिक्षु न्यस्य-सुभद्रायेशितात्मने सर्वोद्वहाय सर्वविद्येश्वरायेत्याग्नेयादीशानपर्यन्तं न्यस्य - तृतीयावरणे इन्द्राय यमाय वरुणाय कुबेरायाग्नये वायव ईशानायेति स्वेस्वे देशे प्रणवादि नमोऽन्तं पुष्पन्यासं करोति । कर्मार्चास्थाने सुभद्राय हयात्मकाय रामदेवाय पुण्यदेवायेति पूर्वादि प्रदक्षिणं चतुर्दिक्षु न्यस्य - सर्वाय सुखावहाय संवहाय सुवहायेत्याग्नेयादीशानपर्यन्तं न्यस्य, शिवं विश्वं मित्रमत्रिमिति पीठान्ते पश्चिमादिबहिर्मुखानर्चयित्वा[10] सनत्कुमारं सनकं सनातनं सनन्दनमिति

---

1. शोधयित्वादि ईशानपर्यन्तमित्यन्तं छ. कोशे न दृश्यते. 2. A. परिमृज्य प्रक्षाल्य. 3. छ. तत्पुरुषायेति पादपुष्पं. 4. A. मात्रे एकत्र. 5. छ. हारिभ्यां 6. छ. भगवच्छेषैः. 7. छ. वारिणा संस्नाप्य. 8. M. सह. 9. उत्तरे. 10. छ. अभ्यर्च्य.

SGDF Sri Gurgeshwari Digital Foundation

वायव्यादि कोणान्तेष्वर्चयित्वा पुनः लोकपालानपि तृतीयावरणेऽर्चयति । दक्षिणे मार्कण्डेयं वामे पक्षापितरमित्यर्घ्यान्तं पूजयित्वा दक्षिणोत्तरयोः ब्रह्मेशानौ समभ्यर्च्य आत्मसूक्तं जपति ।

### आवाहनम् ।

पश्चात्सुवर्णवर्णं रक्तास्यं [1]रक्तनेत्रं सुखोद्वहं शुकपिञ्छाम्बरधरं विष्णुं प्रणवात्माकं किरीटकेयूरहारम्बप्रलम्बयज्ञोपवीतिनं श्रीवत्साङ्कं चतुर्भुजं शङ्खचक्रधरमेवं [2]परमात्मानं [3]सकलं ध्यात्वा मनसा प्रणिध्यां निवेश्य 'सुवर्भुवर्भू'रिति बिम्बस्य मूर्धनाभिपादेषु क्रमेण विन्यस्य यकारं पादयोरन्तरे पीठे न्यस्य हृदये बीजाक्षरं न्यस्य तं प्रणवैर्वेष्टयित्वा 'इदं विष्णुरायातु भगवा'नित्यूर्ध्वबाहुमुखः प्रणिधिमुद्धृत्य कूर्चेन तद्वारि बिम्बस्य मूर्धनि विष्णुमावाहयामीति संस्राव्य प्रागादि पुरुषं सत्यमच्युतमनिरुद्धमित्यावाह्य दक्षिणे श्रियं वामे हरिणीमित्यावाह्य 'प्रतद्विष्णुरस्त्वासन'मित्यासनं पृथक् पृथक् [4]पुष्पेण ददाति ।

### मन्त्रासनम् ।

'[5]विश्वाधिकानां जन'नेति स्वागतं 'मनोभिम'न्तेत्यनुमानं 'त्वं स्त्री'ति पाद्यमभिमृश्य 'त्रीणि पदेन्द्रोभिमन्ते'ति पाद्यं कूर्चेन वारि पादयोः [6]संस्राव्य 'शन्नो देवी'रिति विष्णवे 'आपो हि'ष्ठेति पुरुषाय 'योगे योग' इति सत्याय 'समाने वृक्ष'इत्यच्युताय 'पवित्रं त'इत्यनिरुद्धाय आचमनं दक्षिणे हस्ते कूर्चेन ददाति । '[7]तद्विष्णोः परमं पदं—इमास्सुमनस'इति पुष्पं 'तद्विप्रासः—इमे गन्धा' इति गन्धं 'परो मात्रया—बृहस्पति'रिति धूपं 'विष्णोः कर्माणि—शुभ्राज्योति'रिति दीपं पृथक् पृथक् मूर्तिभिः संयोज्य ददाति । 'आ मा वाज'स्येत्यर्घ्यपात्राणि संशोध्य वसिष्ठं सोमं यज्ञाङ्गमिन्दुं चन्द्रमिति [8]पात्राधिदेवमाराध्य प्रथमं सिद्धार्थकं द्वितीयं कुशाग्रं तृतीयं तिलं चतुर्थं तण्डुलं पञ्चमं दधि षष्ठं क्षीरं सप्तममक्षतमष्टमं तोयमिति सङ्गृह्य कुडुब-

1. क. रक्तनेत्रपाणिनासं छ. रक्तास्यनेत्रं. 2. क्वचित्कः पाठः. 3. च. सकृत्. 4. ग. सपुष्पेण. 5. विश्वादिकानां भाष्यपाठः । 6. स्राव्य. 7. अत्र पुष्पगन्धधूपदीपोपचारेषु छ. कोशे द्वितीय एव मन्त्रो विनियुक्तो दृश्यते. 8. ट. म. पात्रेष्वाराध्य.

SGDF
Sri Gurgeshwari Digital Foundation

मात्रं पृथक् पृथक् गायत्र्या क्षिप्त्वा घृतेनाभिघार्य '[1] अग्निरिन्द्रावरुणावुहे' त्यादिना अभिमृश्य '[2] त्रिर्देवः — इन्द्रिया' णीति विष्णवे 'हिरण्यगर्भ' इति पुरुषाय 'इदमापः शिवा' इति सत्याय [3] 'नारायणाय विद्महे' इत्यच्युताय 'कयानश्चित्र' इत्यनिरुद्धाय अर्घ्यं निवेद्याऽऽचमनं [4] पूर्ववत् ददाति ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
ध्यानावाहनादिविधिर्नाम
एकोनसप्ततितमोऽध्यायः ॥

---

## ॥ अथ सप्ततितमोऽध्यायः ॥

### अलङ्कारासनम् ।

'इषे त्वोर्जे' त्वेति [5] मन्त्रस्नानं 'मित्रस्सुपर्णे' इति प्लोतं 'तेजो वत्सव' इति वस्त्रं 'सोमस्य तनूर' सीत्युत्तरीयं 'भूतो भूते' ष्वित्याभरणं 'अग्निं दूत' मित्युपवीतं पञ्चभ्यो मूर्तिभ्यः संयोज्य ददाति । पूर्ववत्पाद्याचमनपुष्पगन्धधूपदीपान् दत्वा 'अथावनीद' मिति मण्डलं करोति ।

### भोज्यासनम् ।

तथा हविःपात्राणि संशोध्य आदित्यं भास्करं सूर्यं मार्ताण्डं विवस्वन्तमिति [6] पात्राधिदेवमाराध्य पुष्पादीन् संशोध्य 'देवस्य त्वे' [7] त्याज्येनाभिघार्य [8] पात्रे 'ष्वमृतोपस्तरणम' सीति हवींषि प्रक्षिप्य अथ फलगुडोपदंशादीन् गायत्र्या क्षिप्त्वा अन्नसूक्तेनाभिमृश्य 'यत्ते सुसीम' इति घृतमास्राव्य 'सुभूः स्वयं भू' रिति विष्णवे सर्वं हविर्निवेद्य 'हिरण्यगर्भ' इति पुरुषाय पायसं 'इह पुष्टि' मिति सत्याय कृसरं 'समाववर्ती' त्यच्युताय गौल्यं 'त्रीणि प' देत्य-

---

1. म. अग्नेरिन्द्रादिना. 2. त्रिर्देव इति छ. कोशे नास्ति. 3. छ. तत्पुरुषायेत्यच्युत.य. 4. ट. कोशमात्रे. 5. A. M. स्नानमित्येव. 6. ट. पात्रेष्वाराध्य. 7. छ. अभिघार्येत्येव. 8. छ. पात्रे अमृतोपस्तरणमसीति हविः प्रक्षिप्य.

SGDF
Sri Gargeshwari Digital Foundation

निरुद्धाय यावकं हविः निवेद्य देवीभ्यामृषिभ्यां निवेद्याग्निं परिषिच्य अतो देवादिना हुत्वा आलयगतेभ्यो देवेभ्यः [1]चतसृभिर्मूर्तिभिर्हुत्वा अग्निं विसृज्य द्वारपालेभ्यो विमानपालेभ्यो लोकपालेभ्योऽनपायिभ्यः तत्तन्नाम्ना प्रणवादि नमोऽन्तं पुष्पान्नयुतं बलिं तत्तत्प्रदेशे क्षिप्त्वा बलिशेषं पीठस्य दक्षिणे पार्श्वे 'भूतयक्षपिशाचनागेभ्यो बलिं निर्वपा'मीति निर्वाप्य आचम्य 'इदं विष्णु'रिति पानीयं दत्वा आचमनं पूर्ववद्ददाति । 'घृतात्प'रीति मुखवासं प्रदाय विधिना बलिमाराध्य प्रदक्षिणं कारयति । मस्तिष्कं सम्पुटं प्रह्वाङ्गं पञ्चाङ्गं दण्डाङ्गमिति पञ्चभिः [2]प्रकारैः विष्णुसूक्तेनानम्य विष्णुगायत्र्या पुष्पाञ्जलिं ददाति । प्रणवेन यथाशक्ति दक्षिणां दत्वा द्वादशाक्षरेणाष्टाक्षरेण प्रणम्य प्राणायामं कृत्वा देवं बेरे समारोपयेदन्त्यवेलायामिति [3]कश्यपः ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
भावनाकल्पो नाम सप्ततितमोऽध्यायः ॥

---

## ॥ अथ एकसप्ततितमोऽध्यायः ॥

### बलिविधिः, अन्नबलिः ।

अथ बलिविधिं व्याख्यास्यामः । सुवर्णरजतताम्राणामन्यतमेन द्विशतैः शतैः पञ्चाशद्भिः पलैर्वा भुवङ्गार्धसमं तद्भुवङ्गपञ्चभागं कृत्वा त्रिभागं द्विभागं वा बलिपात्रं समवृत्तं तन्मध्ये कर्णिकाकारमष्टाङ्गुलविस्तृतायतमेकाङ्गुलोन्नतं चतुरङ्गुलायतमष्टदलयुतं परितो भित्त्युन्नतं द्व्यङ्गुलमर्धाङ्गुलं समवृत्तं तत्पात्रं कृत्वा प्रस्थाधिकतण्डुलैः पक्वमन्नं सङ्गृह्य बलिपात्रं प्रक्षाल्य तन्मध्ये रविमण्डलं ध्यात्वा आदित्यं भास्करं सूर्यं मार्ताण्डं विवस्वन्तमिति पात्राधिदेवतमाराध्य 'देवस्य

---

1. M. मूर्तिमन्त्रैर्हुत्वा. 2. छ. प्रकारैरानम्य सहस्रशीर्षादिना स्तुत्वा विष्णुगायत्र्या पुष्पाञ्जलिं दत्वा द्वादशाक्षरैर्वा प्रणम्य प्राणायामं जप्त्वा देवं बेरे समारोपयेत् M. द्वादशाक्षरेण प्रणम्य. 3. क. इति विज्ञायते.

SGDF
Sri Gargeshwari Digital Foundation

त्वे'त्याज्येनाभिघार्य पात्रे 'अमृतोपस्तरणम'सीत्यन्नं प्रक्षिप्य 'यत्ते सुसीम' इति घृतमास्राव्य अन्ने 'प्रजापतिं ब्रह्माणममृतमयं सर्वभूत'मित्यन्नाधिदेवं पूजयित्वा तत्समं मध्ये सुस्थितं सुदृढं सोष्णं द्वादशाङ्गुलैरेकादशाङ्गुलैर्वोच्छ्रयं द्विगुणपरीणाहमूलं तदर्धमग्रं किञ्चित्फुल्लाम्बुजाकारं हस्ताभ्यां बलिं कृत्वा पात्रं रविमण्डलं बलिमम्बुजं स्मृत्वा तन्मध्ये सुवर्णवर्णं रक्तास्यं रक्तनेत्रं सुखोद्वहं शुकपिञ्छाम्बरधरं विष्णुं प्रणवात्मकं किरीटकेयूरहारप्रलम्बयज्ञोपवीतिनं श्रीवत्साङ्कं चतुर्भुजं शङ्खचक्रधरमेवं ध्यात्वा योगेशं परं ब्रह्माणं परमात्मानं भक्तवत्सलमिति चतसृभिर्मूर्तिभिरावाह्य अर्घ्यान्तं पूजयेत् । अन्नबलेरधिदेवो रविः ।

अर्घ्यबलिः ।

अन्नाभावेऽर्घ्यबलिः । तस्याधिदेवः शशी । तस्मात्पात्रे शशिमण्डलं ध्यात्वा वसिष्ठं सोमं यज्ञाङ्गमिन्दुं चन्द्रमित्यधिदेवमाराध्य पुष्पादीन् संशोध्याऽर्घ्यं निधाय पूर्ववद्देवमावाह्याभ्यर्चयेत् । 'ब्रह्मा देवानां - हिरण्यगर्भ' इत्यभिमृश्य 'देवस्य' त्वेति तद्बलिं देवाभिमुखे दर्शयित्वा निधाय देवमनुमान्य स्थित्वा अतो देवादीन् जपेत् ।

बलिभ्रमणम् ।

पूर्वोक्तलक्षणसम्पन्नो बलिधारको वस्त्रोत्तरीयस्वर्णसूत्राङ्गुलीयाभरणहेमपुष्पादिभिरलङ्कृतः श्रीभूतस्य पश्चिमे देवाभिमुखस्तिष्ठन् [1] सहस्रशीर्षादीन् जपेत् । तं शिष्यं [2] गरुड इति ध्यात्वा पुष्पगन्धाक्षतादिना पूजयित्वा 'आपो हि' ष्ठेति प्रोक्ष्य ततोऽभ्यन्तरं प्रविश्य देवं प्रणम्य बलिमुद्धृत्य घण्टां ताडयित्वा 'उद्यन्त' मिति[3] (?) जपन् गुरुश्शिष्यस्य शिरसि स्थापयेत् । '[4] बृहस्पते' इति बलिमादाय [5] शिरसा वहन् '[6] प्रतद्विष्णुःस्तवत' इति देवालयं प्रदक्षिणं करोति । [7] वितानछत्रपिञ्छध्वजपताकासङ्घाततत‌विततघनसुषिरादिवाद्यघोषञ्च कारयित्वा चामरैस्तालवर्हिणैरन्यैर्व्यजनैर्धूपदीपैरष्टमङ्गलैः हेमकलशादिपरिच्छदैः परिवृतः

1. ट. सहस्रशीर्षादि. 2. A. गरुडं. 3. उद्वयन्तमसः (?) 4. ग. बृहस्पतेर्मूर्ध्ना इति बलिमादाय. 5.. छ. शिरसि स्थापयित्वा. 6. ग. प्रतद्विष्णुरिति. 7. क. वितानछत्रपिञ्छैराच्छादनमग्रे ध्वजेत्यादि ।

SGDF
Sri Gargeshwari Digital Foundation

कनिक्रदादिद्विजपद्भिर्भक्तैरनुगतो गच्छेत् । न तिष्ठेत् । शीघ्रं न गच्छेन्न हसेन्न कुप्येन्नाश्रु पातयेत् । नान्यदृष्टिर्युगमात्रेक्षणो भूत्वा प्रथमायां प्रथमं द्वितीयायां द्वितीयं तृतीयायां तृतीयमेवं क्रमेणैकैकचूलिकायमलाभे प्रथमावरणे वा त्रिः प्रदक्षिणं कृत्वा ततोऽभ्यन्तरं प्रविश्य [1]श्रीभूतवीशातन्रे देवाभिमुखस्तिष्ठन् देवं प्रणम्य विसर्जयित्वा अमितस्थानं प्रविश्य बल्यग्रं खण्डयित्वा तत्खण्डं विष्वक्सेनाय निवेद्याऽचमनं दत्वा तस्याऽलयपृष्ठे चरक्यादीनां प्रक्षिप्योदपात्रयुतो भूतपीठं गत्वा 'भूतयक्षपिशाचनागेभ्यो बलिं निर्वपा'मीति सर्वपुष्पोदकानि प्रक्षिप्य बलिपात्रं प्रक्षाल्याऽचामेत् ।

त्रिसन्धिष्वन्नबलिरुत्तमं प्रातर्मध्याह्नयोर्मध्यमं मध्याह्नेऽधमम् । मध्याह्नेऽन्नबलिं न लोपयेत् ।

### अर्चनाकालविचारः

भास्करोदयात्पश्चात् आपञ्चनाडिकायाः प्रातरामध्याह्नादास्तमयाच्च पञ्चमयामे (?) तत्कालातीते पञ्चविंशतिविग्रहैः देवेशं बल्यधिदेवञ्च पूजयेत् ।

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे बलिविधिर्नाम
एकसप्ततितमोऽध्यायः ।

## ॥ अथ द्विसप्ततितमोऽध्यायः ॥

### अर्चनार्हपुष्पाणि

अथार्चनार्हपुष्पाणि । दैविकपैतृकमानुषभौतिकयक्षगन्धर्वासुरराक्षसपैशाचानीति भवन्ति । श्वेतपीतकृष्णरक्तचतुर्वर्णानि त्रिवर्णानि च दैविकान्युत्तमानि । द्विवर्णानि मध्यमानि । एकवर्णान्यधमानि । रात्रौ संफुल्लानि तदाह्नि साद्यस्कानि तत्कालोत्फुल्लानि अर्चने श्रेष्ठानि । चम्पकजातिकर्णिकारपद्ममल्लिकामालतीकुमुदरक्तोत्पलकरवीरनन्द्यावर्तपलाशाशोकतमालकुसुमोलकद्विवर्णवकुलाग्रकर्णीकङ्कण -

1. ख. श्रीभूतवाहनयोः ।



SGDF
Sri Gangeshwara Digital Foundation

केतकीकुरवकातसीपुन्नागार्जुनकालनन्दाकपित्थभद्रजश्वेतिकौदुम्बरनन्दमाधवीनाग-वृक्षाल्पायुःकपालिबहुकर्णदूर्वाङ्कुरतृणधातुककुम्भानीति दैविकानि ग्राह्याणि । तरुलताजातान्यन्यानि सुगन्धानि पीतवर्णानि च सर्वाणि । श्वेतानि शान्तिकराणि पीतानि पौष्टिकानि कृष्णानि वशीकराणि रक्तानि द्वेषकराणि ।[1] रक्तेषु पद्मोत्पल-पलाशाशोकबन्धूकानि पुण्यपुष्पाण्येव ग्राह्याणि नान्यानि ।

विष्णोः प्रियकरं[2] श्वेतम् । तस्माच्छतगुणा मल्लिका मालती च ततः श्वेत-पद्मं तस्मात्कर्णिकारः ततः जातिः ततः शतगुणम् । चम्पकं श्रेष्ठम् । श्रीदेव्याः प्रिया मल्लिका । भूमिदेव्याः कान्ता । ब्रह्मणो रक्तानि पद्मपलाशकरवीराणि ।[3] रुद्रस्यार्कनीलोत्पलनिर्गुण्ड्युन्मत्तमेषद्धिकर्णीपट्टिकानि । सूर्यस्य सुवर्चला क्षीरी च । महाकाल्या जपाकोकमाली । कालीदेव्याः द्विकर्णी । विष्णोरन्येषां सुवर्णमाली कनकम् । पत्रेषु तुलसी कृष्णभूस्तृणञ्च श्रेष्ठम् । तयोः सहस्रगुणा तुलसी । सर्वपुष्पेभ्यस्तुलसी देवेशस्य प्रियतमा भवति ।

पुष्पालऽभे अङ्कुरोक्ताः[4] सर्वेऽङ्कुराश्च स्नपनोक्तबीजानामङ्कुराश्च । अंकुरेषु च तापसाङ्कुरः श्रेष्ठः ।[5] सोऽर्चितोऽप्येकाब्दं निर्माल्यं नैव भवेत् । तावत्तावत्प्रक्षाल्यार्चयेत् ।[6] अशोकमन्त्रिबोधिनीनामङ्कुरश्च तथैव मासमर्चने योज्यः ।

## सुवर्णपुष्पाणि

सौवर्णैर्मुक्ताभिर्मणिभिश्चार्चने फलमनन्तम् । ततोऽधिकानि नैव पुष्पाणि । तेषां निर्माल्यत्वञ्च जात्वपि न विद्यते । तस्मात्तानि पुनः पुनरर्चने[7] योज्यानि ।

## त्याज्यपुष्पाणि

अथ त्याज्यानि च वक्ष्यामि ।[8] जपाकिंशुककुसुंभकनककोकमाली-चतुर्भुजसूर्यनन्दानां पुष्पाणि पैशाचानि वर्जयेत् । कुरुण्डमण्डकप्रामीलीसुकर्णानां

---

1. अत्र खकोशे किञ्चिदसङ्गतं प्रकरणान्तरस्थं दृश्यते । 2. च. तमं श्वेतं करवीरं । 3. क. रुद्रस्यालोकचक्रमालि । 4. ठ. सर्वेऽप्यङ्कुराश्च । 5. छ. म तापसांकुरः तदर्चितमपि । 6. म. किशोरक । 7. छ. श्रेष्ठानि । 8. A. किंशुककुसुंभकर्णमाली ।

SGDF
Sri Gargeshwari Digital Foundation

पुष्पाणि चण्डाल [1]पुल्कसाद्यन्त्यजातिसमीपस्थानि यत्नविकसितभग्नच्छिन्नभुग्न-विशीर्णसमुत्पाटित [2]सलेपकाजिगर्जितान्यगन्धपूतिगन्धानि भस्माक्षिप्तानि जल-जातानि सुगन्धानि जले क्षिप्तानि निर्माल्यस्पृष्टान्येकाहातिक्रान्तानि [3]नराघ्रातानि नरैरशुद्धैः स्पृष्टानि च त्याज्यानि । षट्पदाघ्रातानि न त्याज्यानि । जलजाता-न्येकाहातीतानीति केचित् । सकण्टकानि राक्षसानि । भिन्नच्छिन्नानि याक्षाणि । उत्पाटितान्यासुराणि । गृहीतपरिशीर्णानि भौतिकानि । एकरात्रोषितानि गान्धर्वाणि । अशुचिस्पृष्टानि विद्याधरीयाणि । तस्मादेतानि सम्यग्वर्जयेत् । पादौ प्रक्षाल्याऽऽचम्य 'नमो वरुण'इत्येकं वरुणाय सोमायैकं हरिपत्न्यै चैकं पुष्पं विसृज्य शुद्धे पात्रे दैविकान्युक्तानि पुष्पाणि गृह्णीयात् । पात्रालाभे चोत्तरीयं गृहीत्वा तानि गृहीतव्यानीति केचित् । वस्त्रेण हस्तेन वा न गृह्णीयात् ।

## पुष्पाहरणप्रकारः

त्यज्यानि परिहृत्य ग्राह्याणि गृहीत्वा तदुपरि [4]पत्रेणाच्छाद्य पुष्परक्ष-कायाप्येकं पुष्पं विसृज्य 'प्रतद्विष्णु' रिति देवालयं प्रविश्य निर्माल्यासंकरं न्यसेत् ।

## पुष्पप्रतिनिधिः

देवार्थमुक्तद्रव्याणामाधावं प्रधानम् । तत्सर्वार्थसाधकम् । पुष्पालाभे तदाधावेनार्चनं कुर्वन्ति । अर्चको देवेशस्य देव्योश्चैकपात्रेण अन्येनान्यस्मिन् पुष्पाणि संगृह्य गन्धादिसंभारांश्च संभृत्य द्वारदेवान् गरुडविष्वक्सेनौ त्रयोदश-विग्रहैरभ्यर्च्य पूर्ववद्द्वात्रिंशद्विग्रहैः कौतुकबिम्बस्य यथालाभैर्विग्रहैरुत्सवस्यार्चा-याश्चार्चनमारभेत ।

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे ग्राह्यत्याज्यपुष्पविधिर्नाम द्विसप्ततितमोऽध्यायः ।

---

1. क. पुष्पसलाद्यन्य. 2. छ. सलोपरूाबीककिबीकन्यागन्धः ? । 3. क. कराहृतादि । 4. म. पात्रेण ।

SGDF
Sri Gargeshwari Digital Foundation

## ॥ अथ त्रिसप्ततितमोऽध्यायः ॥

### उपचारकथनम्

अथातो विग्रहाः। पूजाङ्गोपचारा विग्रहा इत्युच्यन्ते। द्वात्रिंशन्नवविंशतिः सप्तविंशतिस्त्रयोदशाष्टौ षड्विग्रहा इति समूर्तार्चनस्योपचाराः षड्विधा भवन्ति। तेषामादौ प्रधानमावाहनं सामान्यमुद्वासनमन्ते च। आसनस्वागतानुमानपाद्याचमनपुष्पगन्धधूपदीपार्घ्याचमन स्नानप्लोतवस्त्रोत्तरीयाभरणयज्ञोपवीतपाद्याऽचमनपुष्पगन्धधूपदीपहविःपानीयाचमनमुखवासबलिप्रणामपुष्पाञ्जलिस्तुतिदक्षिणा इति द्वात्रिंशद्विग्रहाः। तथा आसनाद्याः प्रणामान्ताः नवविंशतिविग्रहाः। मुखवासान्ताः सप्तविंशतिविग्रहाः। तथा ऽर्घ्याचमनान्ते पुष्पाञ्जलिनमस्कारान्ताः त्रयोदशविग्रहाः। पाद्याद्यर्घ्याचमनान्ताः तथा अष्टविग्रहाः। पुष्पाद्यर्घ्याचमनान्ताः षड्विग्रहाः इति। एतेषामाद्यमावाहनम्। तद्द्विविधं भवत्यचलं चलमिति। यथा हि अरण्यामनलः सर्वव्याप्येकत्र मथनादुज्ज्वलति तथा निष्कलं विष्णुं सर्वव्यापिनं ध्यानमथनेन हृद्याविर्भूतं तेजोभास्वरं भक्त्या सकलं सङ्कल्प्य अचले ध्रुवबेरे कृतं यत्पूर्वमावाहनं तदचलम्। तस्मादेव सकलम्। ध्यानेन चले कौतुकबिम्बे नित्यं यत्क्रियते तच्चलम्। यद्ध्रुवबेरात्प्रणिधिजले पूर्ववद्ध्यात्वा तज्जलेन कौतुकबिम्बस्य मूर्ध्नि तत्प्राणशक्तिरिति स्रावणमावाहनम्। पुष्पदर्भकुशेष्वेकं पीठान्ते न्यस्य तत्राऽसीनं देवं ध्यायेत्तदासनम्। [1]विग्रहस्याभिमुखीकरणं स्वागतम्। अर्चनमेतत् गृहाण प्रसीदेति याचनमनुमानम्। पादप्रक्षालनायेति पादयोर्जलस्रावणं पाद्यम्। आचमनायेति दक्षिणहस्ते कूर्चेन तोयदानमाचमनम्। मूर्ध्नि दैविकपुष्पाणि [2]सर्वाणि न्यस्य पादयोः पीठे परितो दक्षिणादि भुजयोः चक्रशंखयोश्च सन्न्यसेत्पुष्पम्। चन्दनकोष्ठादीन् जलेन पेषयित्वा मौलिल्ललाटहृदयभुजेषु नाभेरूर्ध्वे सर्वत्र वा समालेपयेद्गन्धम्। गुग्गुलुकोष्ठगुरुचन्दनबिल्वघनशर्कराद्राक्षागुलाद्यैः सुगन्धधूमैः घृतमिश्रैः यथालाभैश्चतुर्दिक्षु धूपयेद्धूपम्। पिचुवर्तियुतं [3]घार्तं तैलं वा दीपं पार्श्वे दीपयेद्दीपम्। अष्टाङ्गुलोच्छ्रयाः त्र्यङ्गु-

1. छ. विगृह्योऽयमभिमुखीकरणं (?)। 2. छ. सर्वे। 3. ग. वार्क्षं म. घृतेन तैलेन वा दीपम्।

Sri Gargeshwari Digital Foundation

लोच्छ्रयाः यथालाभोच्छ्रयाश्चोत्तममध्यमाधमा दीपाः । कुडुबसंपूर्णानि पञ्च त्रीणि द्वे वा तथा अर्घ्यद्रव्यैः आपूर्य ललाटान्तमृद्धृत्यार्घ्यं दद्यादर्घ्यम् । तस्यालाभेऽक्षतं कूर्चेन तोयदानं वा । पूर्ववदाचमनम् ।

### द्विविधं स्नानम्

स्नानञ्च द्विविधमभिषेकोऽभ्युक्षणमिति । प्रातर्बिम्बशुद्ध्यर्थमभिषेकः । पूर्वमेवं कृत्वाऽर्चनाङ्गमभ्युक्षणञ्च कुर्यात् । मध्याह्नेऽभ्युक्षणमेव । रात्रौ स्नानद्वयं न कुर्यात् । अरूपेऽर्चने अभ्युक्षणमेव । वर्णयुक्ते बिम्बे स्नानं न विधीयते ।

### वस्त्रोत्तरीयाभरणादि

ततो बिम्बं धौतेन वस्त्रेण विमृजेत्प्लोतम् । सूक्ष्मदुकूलपट्टेनान्येन वाससा वा आच्छादयेत् तद्वस्त्रम् । तथा तेनैवोत्तरीयञ्च । किरीटकेयूरहार-प्रलम्बकटिसूत्रोदरबन्धनाद्यैराभरणैः सौवर्णैः मुक्तामणिमयैर्वा अलङ्कुर्यादाभरणम् । तदलाभे पुष्पाणि तत्तदङ्गेषु योजयेत् । सौवर्णं तान्तवं वा उपवीतम् । नित्यार्चनायां प्लोतवस्त्रोत्तरीयोपवीतानामलाभे अङ्कुरदर्भकुशपुष्पाणामन्यतमं वा दत्वा तथा पाद्याचमनपुष्पगन्धधूपदीपांश्च दद्यात् । देवं ध्यायन् तत्तद्द्रव्याणामलाभे प्रतिनिधिं वा सङ्कल्प्य पृथक् पृथक् दत्वा नमस्कारञ्च कुर्यात् ।

### हविर्विभागादि

ततो विधिना पक्वानि शुद्धान्नपायसकृसरगौल्ययावकानीति पञ्चविधानि हवींषि अभिघार्य पृथक् पृथक् पात्राणि प्रक्षाल्य एकपात्रं वाऽभिघार्य स्थालीषु चतुर्थभागं विना [1]त्रिभागानि हवींषि [2]पात्रे पूर्णं प्रक्षिप्य उपरि पुष्पमेकं सन्न्यस्य सर्वालाभे शुद्धान्नं वा यथाभागोपदंशघृतगुलदधिफलैर्युतं प्रभूतं हविर्देवेशाय निवेद्य तत्कालेऽग्नावमूर्तार्चनञ्च कुर्यात् । आलयस्य दक्षिणेऽग्निकुण्डे छुल्ल्यां वा अग्निं परिषिच्य उत्कुटिकासनमासीनः साज्यं चरुं अतो देवादिना मूर्तिमन्त्रैश्च देवेशाय हुत्वा तदालयगतपरिषद्देवेभ्यो जुहुयादेतदुत्तमम् । देवेशाय देवीभ्यामर्चकमुनिभ्यां मध्यमम् । देवेशायैवाधमम् । वस्त्रोत्पूतं शुद्धं शीतलं स्वादु-

1. ङ. द्विविभागानि 2, म. पात्रे इति न दृश्यते.

SGDF
Sri Gangeshwari Digital Foundation

सुगन्धि (तं) वारि पात्रे पानीयं दत्वा आचमनान्ते कर्पूरजातीफलैलालवङ्गसहितं [1]सक्रमुकं ताम्बूलं दद्यान्मुखवासः। विधिना बलिमाराध्य देवमनुमान्य बलिमुद्धृत्य प्रदक्षिणं कारयित्वा विष्णुसूक्तेन मस्तिष्कादि पञ्चप्रणामांश्च कुर्यात्।

पञ्च प्रणामाः

देवं ध्यायन् [2]मस्तकेऽञ्जलौ न्यस्ते स मस्तिष्कप्रणामः। हृदयेऽञ्जलिपुटे न्यस्ते स संपुटः। हृदयेऽञ्जलिं विन्यस्यानतशरीरे [3]स प्रह्वाङ्गः। पाणीव्यत्यस्यैवं स्वस्तिबन्धनं कृत्वा पादाङ्गुलिभ्यां जानुभ्यां ललाटेन च पञ्चाङ्गैः भूमिस्पर्शने कृते स पञ्चाङ्गः। पादौ हस्तौ प्रसार्याधोमुखं भूमौ दण्डवच्छयिते स दण्डाङ्ग इति प्रणामाः।

अष्टाक्षरेण मन्त्रेण पुष्पाञ्जलिं दत्वा पुरुषसूक्तपूर्वं वैष्णवैः ऋग्यजुस्सामाथर्वभिः मन्त्रैः यथाकामं संस्तूय रत्नं सुवर्णं वा दक्षिणां दत्वा, यथा उक्तहोमान्ते अग्निमाहवनीयाद्गार्हपत्ये समारोपयति तथा कौतुकबिम्बाद्ध्रुवबेरे देवं समारोपयति। ध्रुवकौतुकसंयुक्ते प्रातरावाहनं कृत्वा रात्रिपूजान्ते [4]विसर्जनमाचरेत्। एकबेरार्चने तरुणालये च तावावाहनविसर्गौ प्रतिषिद्धौ। पाद्यादिभिरर्चयेत्।

प्रातरर्चितानि पुष्पाणि उद्वासनान्ते रात्र्यन्ते वा निर्माल्यानि भवन्ति। तावता पीठे न्यस्तपुष्पाणि नोद्धरेत्। उपर्युपरि पुष्पन्यासं कुर्यात्। बिम्बेऽर्चितानि पुष्पाण्यादाय पीठे न्यस्य मध्याह्ने पाद्याद्यैः सर्वैः सायं स्नानप्लोतौ विनाऽन्यैरर्चयेदुत्तमम्। अर्घ्याद्यैरुपवीतान्तैर्विनान्यैर्विग्रहैः मध्यमे च। अधमे च हविष्य लब्धे त्वर्घ्याचमनान्तैरर्चयेत्। त्रिकालार्चनायुक्ते रात्रिपूजान्तेऽर्चनापरिसमाप्तिः [5]। तदैव विसर्गः [6]। स्थण्डिले चाऽवाह्यार्चनान्त एव विसर्जनम्।

[7]अर्चनाकाले सर्वे प्रतिलोमा वेददूषकाः पाषण्डिनोऽप्यदृश्याः। [8]तस्मात्प्रच्छन्नपटं कृत्वा देवस्य दक्षिणे वामे वा तिष्ठन् एकजानुना आसीनो वा बिम्बस्य

1. B. क्रमुकफलं 2. ङ. मस्तिष्के 3. ङ. आनतांशरा: 4. म. उद्वासनमाचरेत्। 5. B. समाप्तिरित्येव. 6. म. उद्वासना. 7. म. एवमर्चनाकाले. 8. ङ. तत्तस्मात्।

SGDF
Sri Gargeshwari Digital Foundation

यथाऽर्हमर्चको मौनी नित्यार्चनमारभेत । प्रतीपगदृशयानो वा न कुर्यात् । अभिमुखे द्विजानुभ्यामासीनस्तिष्ठन्[1] वा तत्तद्बिम्बार्हकं स्नपनं कुर्यात् ।

### निमित्तविशेषे विग्रहनिर्णयः

विमानार्चनार्थमेवं द्वात्रिंशद्विग्रहा नवविंशतिविग्रहाश्च । लब्धे हविषि सर्वत्र सप्तविंशतिविग्रहाः । हविष्यलब्धे त्रयोदश विग्रहाः । कलशैः स्नपनान्तरेऽष्टौ विग्रहाः । होमे षड्विग्रहाः । देवं दृष्ट्वा 'विष्णवे नम' इति पुष्पपत्रादीनामेकं विसृज्य शिरस्यञ्जलिं कुर्यादेतौ द्वौ विग्रहौ । तथा केवलनमस्कार एको विग्रहः । पूर्वेषामशक्तानामेतौ विधीयेते ।

### अर्चनाङ्गानि

सुभोगयुता भूमिरेतद्विधं विमानं देवरूपं [2]प्रतिष्ठासंस्कारः [3]सम्यगर्चकः सुध्यानावाहनाद्युपचारा यथोक्ता मन्त्राः पूजांगद्रव्याणि तैः यथोक्तप्रयोगमर्चनमेतेषां पुरस्सरा भक्तिरित्येतैः[4] संपूर्णं [5]साकलमर्चनमित्याहुः । स्थानकासनशयनेषु मत्स्यादिप्रादुर्भावेष्वन्यदेवेषु च यत्र विशेषो नैवोक्तः । तत्र सर्वत्रायं विधिः [6]सामान्यः । विष्णोः पञ्चमूर्तिमन्त्रैरन्येषां चतुर्मूर्तिनाममन्त्रैरावाहनाद्युपचारान् करोति । द्विजातिरतन्द्रितो देवेशस्यार्चनं भक्त्या नित्यं तद्बेरे कुर्यात् । बेराभावे कूर्चं निधाय देवं ध्यायन् [7]जले वा अर्चनमारभेत ।

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे उपचारकथनं नाम त्रिसप्ततितमोऽध्यायः ॥

---

## ॥ अथ चतुस्सप्ततितमोऽध्यायः ॥

### आवाहनमन्त्रविशेषाः

अथावाहनाद्यर्चने मूर्तिमन्त्राः । 'विष्णुं पुरुषं सत्यमच्युतमनिरुद्ध' मिति विष्णुं देवेशं, 'श्रियं धृतिं पवित्रीं प्रमोदायिनी' मिति श्रियं, 'हरिणीं,

---

1. A. झ. नमस्कारान् . 2. A. तत्प्रतिष्ठा. 3. छ. सम्यगर्चकस्तु. 4. इत्येके इति A कोशे दृश्यते. 5. सकलार्चनं. 6. ग. समानः 7. म. जलेन वाऽर्चनमाचरेत्.

SGDF Sri Gargeshwari Digital Foundation

पौष्णीं, क्षोणीं मही'मिति हरिणीं, 'मार्कण्डेयं पुण्यं पुराणममित'मिति मार्कण्डेयं, 'पद्मापितरं धातृनाथं ख्यातीशं भृगु' मिति भृगुं 'ब्रह्माणं प्रजापतिं पितामहं हिरण्यगर्भ' मिति भित्तिपार्श्वे दक्षिणतो ब्रह्माणं, 'गङ्गाधरं वृषभवाहनमष्टमूर्तिमुमापति' मिति वामे रुद्रं, द्वारेषु 'धातारं दंमिनं सनिलं [1]गन्धर्व' मिति दक्षिणकवाटे धातारं, 'विधातारं कीनाशं [2]मुरुंडं [3]न्यर्ण' मिति वामे विधातारं, [5]'भूतिं भुवंगमुत्सङ्गं पीठ' मिति भूतिं दक्षिणे, 'पतंगमुत्करमपदानं कपर्दिन' मिति पतंगं वामे, 'पतिरं बल्लिदं मध्यगं [4]वंखर' मिति पतिरं दक्षिणे, 'वरणं तेजस्विनं दंशिन तरस्विन' मिति वरणं वामे, मणिकादिद्वारपालानन्यान् परिवारदेवानपि यथोक्तस्थाने-'मणिकं महाबलं विमलं द्वारपाल' मिति मणिकं, 'सन्ध्यां [6]प्रभावतीं ज्योतिरूपां दृढव्रता' मिति सन्ध्यां, 'तापसं सिद्धिराजं सर्वदोषविवर्जितं सहस्राश्वमेधिन' मिति तापसं, [7]विखनसं तपोयुक्तं सिद्धिदं सर्वदर्शिन' मिति वैखानसं, 'किष्किन्धं बहुमर्दं बहुसेनं दृढव्रत' मिति किष्किन्धं, तीर्थमुद्वाहकं सर्वयोग्यं उदावह'[8] मिति तीर्थं, 'इन्द्रं शचीपतिं पुरुहूतं पुरन्दर' मितीन्द्रं 'अग्निं जातवेदसं पावकं हुतशान' मित्यग्निं, 'यमं धर्मराजं प्रेतेशं मध्यस्थ' मिति यमं, आरंभाधिपतिं निर्ऋतिं नीलं सर्वरक्षोधिपति' मिति निर्ऋतिं, 'वरुणं प्रचेतसं रक्ताम्बरं यादस्पति' मिति वरुणं, 'वायुं जवनं भूतात्मकमुदान' मिति वायुं 'कुबेरं धन्यं पौलस्त्यं यक्षराज' मिति कुबेरं 'ईशानमीश्वरं देवं भव' मितीशानं, 'आदित्यं भास्करं सूर्यं मार्ताण्डं विवस्वंत' मित्यादित्यं 'अङ्गारकं वक्रं रक्तं धरासुत' मित्यङ्गारकं, 'सूर्यपुत्रं मन्दं रैवत्यं शनैश्चर' मिति सूर्यपुत्रं, 'पीतवर्णं गुरुं तैष्यं बृहस्पति' मिति बृहस्पतिं, 'बुधं श्यामं सौम्यं श्रविष्ठज' मिति बुधं, 'शुक्रं भार्गवं काव्यं परिसर्पिण' मिति शुक्रं 'नलिनीं जाह्नवीं गङ्गां लोकपावनी' मिति गङ्गां 'वसिष्ठं सोमं यज्ञांग-

---

1. मं. पा. गन्धर्द. 2. मूरुण्डं गन्त्रर्वमिति प्राधिकः पाटः 3. न्यर्णकं मन्त्रपाठः 4. क. भूतीशं. 6. A. मंखरं मं. पा. वंखनं. 6. मं. पा. मुनिपत्नीमित्यधिकः पाठः 7. क. शातातपं तपोयुक्तं सिद्धिदं सर्वदर्शनमिति 8. अनन्तरं प्रदर्श्यमानाः सर्वे प्रायः भाष्यपाठाः. 8. क. उद्वाहकं.

SGDF
Sri Gargeshwari Digital Foundation

मिन्दुं चन्द्र' मिति चन्द्रं, 'भवं शर्वमीशानं पशुपतिमुग्रं रुद्रं भीमं महादेव' मिति भवं, 'जगद्भुवं यजद्भुवं विश्वभुवं [1]रुद्रभुवं ब्रह्मभुवं भुवद्भुव' मिति सुब्रह्मण्यं, [2]'पुरुषं सत्यमच्युतमनिरुद्ध' मिति पुरुषं, 'धात्रीं महोदरीं रौद्रीं महाकाली' मिति धात्रीं, 'भूर्ज्येष्ठायिनीं भुवर्ज्येष्ठायिनीं सुवर्ज्येष्ठायिनीं कलिराजायिनीं कलिपत्नी' मिति ज्येष्ठां, 'दुर्गां कात्यायनीं वैष्णवीं विन्ध्यवासिनी' मिति दुर्गां, 'कुण्ठिनीं नन्दिनीं धरित्रीं रजतप्रिया' मिति कुण्ठिनीं, 'ग्रन्थिनीं वेगिनीं प्रजयां प्रवाहिणी' मिति ग्रन्थिनीं 'कृच्छ्रूणीं शाखिनीं वाहिनीं योक्त्रिणी' मिति कृच्छ्रूणीं, 'कुण्ठिनीं जारिणीं छर्दिनीं प्रवाहिणी' मिति कुण्ठिनीं, 'विकारिणीं दामिनीं [3]बैसिनीं विद्युता' मिति विकारिणीं, 'दद्रुणींमिन्दुकरां[4] सौमनसीं प्रविद्युता' मिति दद्रुणीं, 'इन्द्रियविकारिणीमर्वतीं गङ्गावाणीं सृजन्ती' मितीन्द्रियविकारिणीं - तथा भृगुं, 'संभूतीशं मरीचिं शोचिष्मन्तं पौर्णमासभृत' मिति मरीचिं, 'क्षमाधवं पुलहं [5]कर्दमं महाधृति' मिति क्षमाधवं, 'पुलस्त्यं प्रीतिभर्तारं [6]वशङ्करं [7]दांतोनिराज्य' मिति पुलस्त्यं,[8] सिद्धिदं निष्कसूनुं सन्नतीशं क्रतु' मिति क्रतुं, 'ऊर्जापतिं राजपूर्वं वसिष्ठं वाक्पति' मिति वसिष्ठं, 'अत्रिं नियामकं सत्यनेत्रगुरुमनसूयापति'[9] मित्यत्रिं, 'गविष्ठं त्रैष्टुभ[10] मिभ्यमाकाश' मिति गविष्ठं, 'असुं समीरणं वायुं पृषदश्व' मिति वायुं, 'वीतिहोत्रं आभुरुण्यं शुद्धमग्नि' मित्यग्निं, पवित्रममृतं तोयं गह्वर' मिति तोयं, हरिणीं पूर्ववत्, '[11]सिद्धिं विश्वां भृगुपत्नीं सरस्वती' मिति सरस्वतीं, श्रियं पूर्ववत्, 'न्यक्षं [12]अधित्यकं पीवरमार्यक' मिति न्यक्षं, 'विवस्वन्तं भरतं विश्वकर्माणं मरीचिमन्त'मिति विवस्वन्तं, 'मित्रं [13]सत्वरं हविष्मन्तं रमणक'मिति मित्रं, क्षत्तारं महीधरमुर्वरोहं शेवधि' मिति क्षत्तारं, '[14]हवीरक्षकमाग्नेयं शैलूष पचन्त' मिति हवीरक्षकं, 'सर्वेश्वरं जगन्नाथं चामुण्डं सर्वेश्वर' मिति चामुण्डं,

1. A. ब्रह्म भुवं रुद्रभुवमिति व्यत्ययेन. 2. पुरुषं परमपुरुषं पुरुषात्मकं धर्ममयं. 3. बैसिनीं. 4. इन्दुकरीं. 5. कर्दमार्य. 6. वशंकरं. 7. दान्तिनीराजं. 8. सिद्धिराजं. 9. अनसूयावरं. 10. गुह्यं. 11. वाग्देवीमिति सिद्धिमितिस्थाने 12. B. दाधित्यकं. 13. हित्वरं. 14. ख. हविरक्षकं.



SGDF Sri Gangeshwari Digital Foundation

'ब्रह्माणीं पिङ्गलां गौरीं सर्वतोमुखी' मिति ब्रह्माणीं, 'सरित्प्रियां विश्वरूपामुग्रां गणेश्वरी' मिति सरित्प्रियां, 'वैशाखिनीं [1]शिखण्डिनीं गायत्रीं षण्मुखीमिति षण्मुखीं, 'विश्वगर्भां विषोर्मिणीं कृष्णां रोहिणी' मिति विश्वगर्भां, 'वाराहीं वरदामुर्वीं वज्रदंष्ट्रिणी' मिति वाराहीं, 'जयन्तीं कौशिकीमिन्द्राणीं घनाघनी' मिति जयन्तीं, 'कालीं नालिकदंष्ट्रीं [2]विषहां वेदधारिणी' मिति कालीं, 'पुष्परक्षकं हरितमधिवासं फुल्ल' मिति पुष्परक्षकं, 'बलिरक्षकं [3]दण्डं [4]सर्वदं सम' मिति बलिरक्षकं, 'विष्वक्सेनं शान्तं हरममित' मिति विष्वक्सेनं, 'श्रीभूतं श्वेतवर्णं वैष्णवं मुखपालिन' मिति श्रीभूतं, 'गरुडं पक्षिराजं [5]सुवर्णपक्षं खगाधिप' मिति गरुडं, 'वक्रतुण्डमेकदंष्ट्रं विकटं विनायक' मिति वक्रतुण्डं, '[6]शेषं सहस्रशीर्षं नागराजमनन्त' मिति शेषं, 'सुदर्शनं चक्रं सहस्रविक्रमनपायिन' मिति सुदर्शनं, 'जयमत्युच्छ्रूतं धन्यं ध्वज' मिति ध्वजं, 'पाञ्चजन्यं शङ्खमंबुजं विष्णुप्रिय' मिति पाञ्चजन्यं, 'यूथाधिपं नित्यमुग्रं महाभूत' मिति यूथाधिपं[7], 'पाकोऽर्जुनं हस्तमगमक्षहन्तं[8] विष्णुभूत' मिति पाकोर्जुनञ्चैवं परिवारदेवानावाह्याभ्यर्चयेत् ।

एवमेव हौत्रशंसनेऽप्यादिमूर्तेर्विष्णोस्तद्देव्योश्च तत्परिषद्देवानां मार्कण्डेयाद्यक्षहन्तान्तानाञ्च क्रमादावाहनं कुर्यात् ।

अनन्तशयनप्रतिष्ठाचेत् विष्णुं 'अनन्तशयनमनादिनिधनममितमहिमानमत्यन्ताद्भुत' मित्यनन्तशयनं देवं ब्रह्माणं चक्रं शङ्खञ्च पूर्ववत् । 'असिं कुन्तात्मकं तृप्तिदं तीक्ष्णधार' मित्यसिं, 'गदां सुसंगतां दिव्यां कौमोदकी' मिति गदां, 'धनुर्वरं कार्मुकं वरायुधं शार्ङ्ग' मिति धनुरित्यनन्तशयने विशेषः । अन्यपरिवारदेवानां पूर्ववत् ।

पञ्चमूर्तिप्रतिष्ठा चेदर्चनायां प्रादुर्भावानाञ्च तत्तत्प्रतिष्ठायामेव तत्तन्मूर्ति-

---

1. क. खंडिनीम्. 2. वृषभवाहनां. 3. दंडधं. 4. B. सर्पजं. 5. सुपर्ण. 6. नागराजं सहस्रशीर्षं मनन्तं शेषं. 7. पावकोर्जुनं. 8. अक्षहं.

SGDF
Sri Gurgeshwari Digital Foundation

मन्त्रविशेषान् वक्ष्यामि । एवं सर्वदेवांश्च धर्मं ज्ञानमैश्वर्यं वैराग्यमिति चतुर्भिर्गुणैर्युक्तांश्चतुर्भिर्नाममन्त्रैरेवाभ्यर्च्य हविर्निवेदयेत् ॥

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे मूर्तिमन्त्रक्रमो नाम चतुःसप्ततितमोऽध्यायः ॥

---

## ॥ अथ पञ्चसप्ततितमोऽध्यायः ॥

### हविर्विधिः - उक्तधान्यानि

अथातो हविषां विधिः—तदर्थं व्रीहिशालिप्रियङ्गुनीवारषाष्टिकयववेणूनि प्रशस्तानि धान्यानि । कृष्णानि वर्जयेत् । व्रीहिभ्यो दशगुणा शाली ततश्शतगुणः प्रियङ्गुः तत्सहस्रगुणो नीवारः तद्द्विगुणं षाष्टिकमनन्तं वेणुयवौ । एतानि चातुर्वर्ण्यैरेव हारयेत् । तदलाभे पण्यधान्यानि वा । त्रिवर्षातीतधान्यान्यप्रशस्तानि मासातीततण्डुलाश्च । विश्वामित्रं परिहृत्य आपोहिष्ठेति प्रोक्ष्य देवालये यजमानगृहाङ्गणे वा गोमयेनोपलिप्य वस्त्रेषु कटेषु वा प्राङ्मुखो धान्यान्यास्तीर्य आतपेन शोषयित्वा मण्डलमुपलिप्योलूखलमुसलौ संस्थाप्योलूखले सोमं मुसले चक्रमभ्यर्च्य संशोध्योलूखले धान्यानि प्रक्षिप्य प्रयताभिः चतुर्वर्णस्त्रीभिः मूलमन्त्रेणावघातं कारयित्वा स्वेदश्वासौ परिहृत्य शूर्पेण तुषादीन् कणांश्च शोधयित्वा वैकुण्ठपुष्पसदृशांस्तण्डुलान् 'देवस्य' त्वेत्याहरेत् ।

### हविःपरिमाणः

विष्णोः द्रोणं द्रोणार्धमाढकं वा हविरवरमशक्तानां त्रिविधम् । द्रोणादिनवद्रोणान्तानि प्रत्येकं द्रोणाधिकान्यधममध्यमोत्तमभेदैः नवधा हवींषि प्रशस्तानि भवन्ति शक्तानामेतानि । देव्योर्देवेशस्य हविषोऽर्धमाढकं द्विप्रस्थं वा परिवारदेवानामाढकं द्विप्रस्थं विधीयते । शक्तः श्रद्धया युक्तः तण्डुलानाहृत्य बृहतीचूतकदलीपनसोर्वारुककूश्माण्डक्षुद्रकन्दमहाकन्दकुलवत्सरीब्रह्मपिण्डीराजमाषमहामाषश्यामतिलतिल्वनिष्पावाद्या येऽन्ये हविष्याश्चोपदंशा ग्राह्याः । तेषु षट् चत्वारो द्वावप्याहरेत् । आढकतण्डुलस्य प्रत्येकमुपदंशाश्चतुष्पलाः । प्रस्थार्धं मुद्गासारं

SGDF
Sri Gangeshwari Digital Foundation

कुडुबं घृतमेकपलं गुडं प्रस्थं दधि तदर्धं वा कदलीचूतपनसाद्यानां फलानि यथालाभानि षड्भिश्चतुर्भिर्वा क्रमुकफलैः तत्त्रिगुणैः द्विगुणैर्वा ताम्बूलपत्रैर्युक्तो मुखवासः । चतुःप्रस्थाधिके तण्डुलेऽपि तथैव वर्धयेत् ।

## द्रव्यान्तराणि - पञ्चविधहविः

देवेशस्य शुद्धौदनञ्च मौद्गिकं पायसं कृसरं गौल्यं यावकमिति हवींषि षड्विधानि च पाचयेत् । तण्डुलैरेव पक्वं शुद्धौदनं - तण्डुलस्य समेनार्धेन पादेन वा मुद्गसारेण च युक्तं - मौद्गिकं तण्डुलस्यार्धेन मुद्गसारेण त्रिगुणेन पयसा पक्वस्य पायसस्य गुडं घृतञ्च पादं पादं तण्डुलस्यार्धेन तिलचूर्णेन युक्तकृसरस्यापि गुडं घृतञ्च पादं पादं - यावत्तण्डुलस्य त्रिगुणदुग्धेन दुग्धार्धतोयेन तण्डुलमष्टभागं कृत्वा तत्पञ्चभागेन मुद्गसारेण च युक्तं तण्डुलसमेन गुडेन तदर्धघृतेन मिश्रं गौल्यं - तण्डुलस्यार्धेन यवेन पक्वं यावकमस्यापि गुडं घृतञ्च पादम् । सर्वालाभे शुद्धौदनमेव । मृद्भाण्डे पचनं श्रेष्ठम् । अलाभे लोहपात्रे वा । पुराणे मृद्भाण्डे न कुर्यात् । द्रोणार्धादधिकतण्डुलमेकपात्रे न पाचयेत् । आढकाधिकमिति केचित् ।

## पाचककृत्यम्

पाचकश्च स्नात्वा 'दुहतां दिव' मिति जलमादायोत्पूय 'प्रजास्थली' मिति स्थालीमाहृत्याभिमृश्य 'इमा ओषधय' इति संशोध्य 'विष्णवे जुष्ट' मिति तण्डुलान् प्रक्षिप्य 'इदमापः शिवा' इति प्रक्षाल्य 'विष्णवे जुष्ट' मिति चुल्ल्यामारोपयेत् । तेनैवावरोपणञ्चाचरेत् । देवतीर्थेनाग्नौ तण्डुलान् 'अग्नय इत्यमृता' येति च हुत्वा आग्नेय्यां हवीरक्षकाय निक्षिप्य दुर्धूमातिधूमजन्तुकंटकविवर्जितैरिन्धनैः सुगन्धिभिः समाग्निना हवींषि पाचयेत् । पाचकस्तानि हवींषि विहायेषुमात्रमपि नैव गच्छेत् । अस्मिन्नभ्यन्तरे स्विन्नं चाशुभं दैविकं हविर्भवति । तस्मात्सोऽपि वर्जनीयः । एवं सम्यक् पक्त्वा तदुपरि 'विष्णो हव्यं रक्ष' स्वेति किञ्चिद् घृतमास्रावयेत् । उपदंशानि प्रक्षाल्य पृथक् पात्रे रसगन्धयुतमेवं पाचयेत् । तुषकेशकीटपतंगादीनपि अपक्वविरसान्यगन्धविवर्णश्वासप्राणद्रप्सलङ्घनविवृतान्यपात्रप्रवेशनादिदोषान् परिहृत्य स्थालीमद्भिः प्रमार्ज्य भस्मना

SGDF Sri Gangeshwari Digital Foundation

ऊर्ध्वपुण्ड्रमालिप्य त्रिपादे संस्थाप्याधो वामेनोर्ध्वं दक्षिणहस्तेन चोद्धृत्य देवालयं प्रविश्योत्तरपार्श्वे निधाय ततस्तदा निवेदयेत् ।

### भूतहविषोः लक्षणम्

चतुस्सन्धिषु निवेदनमुत्तमं, त्रिसन्धिषु मध्यमं, प्रातर्मध्याह्नयोरधमम् । मुख्यं हविः नित्यं मध्याह्ने कुर्यात् । नित्यं हविर्द्विविधं भवति । भूतं हविरिति । विधिना यथाभागोपदंशघृतगुडदधिफलयुक्तं भूतम् । यथाशक्त्युपदंशाद्यैर्युक्तं हविः । द्वात्रिंशतिके भूतमेव हविर्निवेदयेत् सप्तविंशतिके अन्यदिति । विशेषतश्च हविर्द्विविधं भवति प्रभूतं महाहविरिति । तथैवोपदंशाद्यैर्युक्तं द्विद्रोणादिशत-प्रस्थान्तं प्रभूतम् । नानाविधैरुपदंशैः घृतगुडदधिफलादिभिः संयुक्तं द्विशत-प्रस्थादि प्रत्येकं सहस्रप्रस्थान्तं नवविधं महाहविः । विशेषपूजायां प्रभूतं काम्यके महाहविः कुर्यात् । प्रभूते महाहविषि च आलयावरणे ब्रह्मसूत्राद्दक्षिणे यद्विम्बमा-नद्वारं तद्दिङ्मुखे पादहीनायतविस्तारे विष्टरमासनं न्यस्य तत्र देवेशं संस्थाप्य मण्डलमुपकल्प्य व्रीहींस्तण्डुलांश्चावकीर्य कदलीपत्राणि प्रक्षाल्यास्तीर्य 'हविष्मन्त' मिति घृतेनाभिघार्य पात्रेषु हविः प्रक्षिप्य बह्वन्नं बहूपदंशाद्यैर्युक्तं घृतगुड-दधिफलैर्युक्तं निवेद्य पानीयाचमने दत्वा ताम्बूलं मुखवासञ्च निवेद्यालङ्कृत्य देवं प्राणस्थाने स्थापयेत् । सर्वहविःपात्रेषु शिष्टमन्नं सर्वं पूजका गृह्णीयुः ।

### निवेदितस्य विनियोगः

यथा गुरोरुच्छिष्टं पुत्रशिष्याणां भोज्यं तथा सर्वस्य रक्षितुः सौम्यमूर्तेः सर्व-व्यापिनो विष्णोः जगद्गुरोर्निवेदितमन्नाद्यं विश्वं चातुर्वर्ण्यानां भक्तिमतां सर्वेषां भोज्यम् । अन्येषामपि सौम्यदेवानां तत्पूजकानां तद्भक्तानां भोज्यम् । रुद्राद्यन्य-क्रूरदेवानां निवेदितं तत्पूजकानां तद्भक्तानामप्यभोज्यमेव । तस्मादेतत्सर्वं जलेऽग्नौ वा क्षिपेत् । यावत्तण्डुलैः विष्णोर्हविर्दत्तं (तावद्वर्षसहस्राणि) विष्णुलोके मही-यते । यद्यत्कामेन देवेशस्य हविर्दीयते तत्सर्वमचिरादेव लभेत इति विज्ञायते ।

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे हविर्निवेदनविधिर्नाम पञ्चसप्ततितमोऽध्यायः ।

SGDF
Sri Gangeshwari Digital Foundation

## ॥ अथ षट्सप्ततितमोऽध्यायः ॥

### नवविधार्चनम्

अथ नवविधमर्चनम्:—अधमं मध्यममुत्तममिति त्रिविधं भवति । तदेकैकं त्रिधा कृत्वा नवधा भवति । उत्तमे विमानादौ सर्वमुत्तममेव कुर्यात । तदुत्तमे न्यूने कृते कर्तुर्महान् दोषो भवति । न्यूनेऽप्यधिकं कार्यं श्रेष्ठमेव । तस्मान्न्यूनेऽप्यधिकमाचरेत । प्रातर्मध्याह्नयोर्द्वावेको वा रात्रौ चत्वारो द्वौ वा सन्ध्यादीपाः त्रिषु कालेषु पूर्ववदर्चनं प्रातर्मध्याह्नयोः यथालाभोपदंशादियुक्तमाढकतण्डुलैः पक्वं हविर्देवेशस्य मध्याह्ने वा तदेव्योश्च मध्याह्ने प्रस्थाधिकतण्डुलैः पक्वं हविरेषां रात्रौ पाद्याद्यर्घ्यान्तैरेवार्चनं धात्रादिद्वारदेवविमानपालद्वारपालैर्युक्तं विष्वक्सेनस्य परिवारदेवस्यैकस्यार्चनमेकोऽर्चको द्वौ वा परिचारकावित्येयैर्युक्तमधमाधमम् । एतस्मात् द्विगुणा दीपास्तथैव त्रिषु कालेषु चाढकं हविर्देवेशस्य मध्याह्ने मूर्तिहोमोऽष्टांगुलमानान्नबलिर्देव्योः द्विप्रस्थं हविश्च प्रातर्निशि चार्घ्यबलिः पूर्ववद्द्वारदेवादियुतं विष्वक्सेनगरुडौ परिवारदेवावेकोऽर्चकः पञ्च चत्वारो वा परिचारकाः यथाशक्ति वाद्यघोषणमेतैर्युक्तमधममध्यमम् । एतन्मूर्तिहोमबलिवाद्यघोषणैर्विना कारयेत् । पूर्वस्माद्द्विगुणाः सन्ध्यादीपाः द्वावहोरात्राविच्छिन्नदीपौ त्रिसन्धिषु हविष्पाकविधौ यथोक्तभागोपदंशघृतगुडदधिफलयुक्तमाढकं हविर्देवस्य पूर्ववन्मूर्तिहोमोऽन्नार्घ्यबली च प्रातर्मध्याह्नयोर्देव्योर्हविः द्विप्रस्थं रात्रिपूजान्तेऽर्धयामेऽतीते देवस्यार्चनं द्विप्रस्थं हविर्निवेदनञ्च यथाविधि मुखवासः तथा द्वारदेवादियुतं विष्वक्सेनगरुडेन्द्राद्यष्टदिग्देवा आदित्या इत्येकादशपरिवारदेवाः तेषां यथालाभमर्चनं बलिदानञ्च द्वावर्चकौ सप्त परिचारकाः षड्भिर्वाद्यवादकैरुषःकाले मज्जने (?) चार्चनान्ते भक्तप्रणामार्थं यवनिकोद्धरणं मध्याह्ने हविर्निवेदनबल्युद्धरणे च शङ्खादिवाद्यघोषणं[1] त्रिष्वेतेषु नैव कालनियतिरेवमेतैर्युक्तमधमोत्तमम् । एतद्द्विगुणा दीपाः हविर्विधिनैव यथोक्तभागोपदंशघृतगुडदधिफलैर्युक्तं द्रोणार्धं हविर्मध्याह्ने प्रातर्निशायामर्धयामे चाढकं

1. म. त्रिष्वित्येव.

SGDF
Sri Gargeshwari Digital Foundation

हविर्देवस्य त्रिसन्धिषु देव्योर्मध्याह्ने पूजकमुनिविष्वक्सेनानाञ्च द्विप्रस्थं हविः यथोक्तो मुखवासः प्रातर्मध्याह्ने च तथा मूर्तिहोमः द्वादशांगुलमानान्नबलिः निश्यर्ध्यबलिः तथैव विष्वक्सेनाद्येकविंशतिपरिवारदेवाः त्रयोऽर्चकाः नव परिचारकाश्च अष्टभिः वाद्यघोषणं कालः पञ्चनाडिकः मासि मासि श्रवणपूजनमेतैर्युक्तं मध्यमाधमम् । एतस्माद्द्विगुणा दीपाः तथोपदंशादिभिर्युक्तं द्रोणार्धं हविः प्रातर्मध्याह्नयोर्निशायामर्धयामे चाढकं हविर्देवेशस्य तद्देव्योस्त्रिसन्धिषु द्विप्रस्थं मुनिविष्वक्सेनगरुडचक्राणां द्विकालमेककालं वा हविः प्रातर्मध्याह्नयोर्विष्णुसूक्तयुतो मूर्तिहोमः तथा अन्नबलिश्च निश्यर्ध्यबलिः पञ्चनाडिकः कालो यामो वा तत्तद्विमानेषु विष्वक्सेनादिद्वात्रिंशत्परिवारदेवानामर्चनं बलिदानं चत्वारोऽर्चकाः दश परिचारकाः चतुस्सन्धिषु शङ्खकाहलादिवाद्यैर्द्वादशभिः वाद्यघोषणं यथाशक्ति गेयञ्च श्रवणे द्वादश्योः पर्वणोश्चैतेषु विष्णुपञ्चकेषु विशेषपूजनमेतैर्युक्तं मध्यममध्यमम् । एतद्द्विगुणा दीपाः त्रिषु सन्धिषु पूर्ववदुपदंशादिभिर्युक्तं द्रोणार्धमर्धयामे चाढकं हविः कर्पूरसहितो मुखवासः देव्योः पूर्ववन्मुन्यादीनां त्रिकालं द्विकालं वा द्विप्रस्थं हविः प्रातर्मध्याह्नयोरष्टाशीतियुतो मूर्तिहोमो द्वादशाङ्गुलमानान्नबलिः दिग्देवानाञ्च मध्याह्ने हविर्द्विप्रस्थं तथा अष्टचत्वारिंशत्परिवारदेवाः याम एव कालः शीतादिधूपो मासि मासि विष्णुपञ्चकेष्वयनेषु च विशेषपूजनं षडर्चका षड्विंशतिपरिचारकाः विंशतिभिर्वाद्यघोषणमेतैर्युक्तं मध्यमोत्तमम् । एतद्द्विगुणा दीपाः प्रातर्मध्याह्नयोः बहूपदंशादिभिर्युक्तं द्रोणं तथा रात्रावर्धयामे च द्रोणार्धं हविरेलातक्कोलजातीफलकर्पूरसहितो मुखवासः त्रिसन्धिष्वीङ्कारा्द्यष्टाशीतियुतो मूर्तिहोमः द्वादशाङ्गुलमानान्नबलिश्च देव्योः प्रातर्मध्याह्नयोराढकं[1] रात्रौ द्विप्रस्थं मुन्यादीनामिन्द्रादीनाञ्च पूर्ववद्विष्वक्सेनाद्येकपञ्चाशत्परिवारदेवाः विष्णुपञ्चकायनविषुवेषु च विशेषपूजनमष्टावर्चकाः चत्वारिंशत्परिचारकाश्चतुर्विंशतिभिर्वाद्यघोषणं पञ्चचर्यायुताभिः (?) रूपयौवनसम्पन्नाभिः द्वादशाभिः चतुर्विंशतिभिः त्रिशद्भिर्वाऽप्सरोभिः त्रिसन्धिषु नृत्तगेयैश्च पूजनं तथैव कालश्चैतैर्युक्तमुत्तमाधमम् । एतद्द्विगुणा दीपाः त्रिसन्धिषु

1. चाढकम्.

SGDF
Sri Gargeshwari Digital Foundation

तथा बहूपदंशयुतानि यथाविधि पक्वानि शुद्धौदनपायसकृसरगौल्ययावकानि पञ्चविधानि हवींषि तदर्धमर्धयामे च हविः त्रिसन्धिषु वैष्णवमीङ्काराद्यष्टाशीति-विष्णुसूक्तयुतो मूर्तिहोमः पूर्ववदन्नबलिर्मुखवासश्च देव्योर्मुन्यादीनामिन्द्रादीनां च त्रिकालं हविः पूर्ववत्तथा षष्टिः परिवारदेवाः पञ्चदशार्चकाः षष्टिः परिचारकाः द्वात्रिंशद्भिः पंचाशद्भिर्वा वाद्यघोषणं तथाऽप्सरोभिः नृत्तगेयैश्च पूजनं दशनाडिकाः यामो वा कालः तथैवमेतैर्युक्तमुत्तममध्यमम् । द्वादशतलं विमानं कृत्वा तत्तले देवेशं प्रतिष्ठाप्य नित्यं सप्तकलशैः स्नापयित्वा नववस्त्रैः सुगन्धिभिःगन्धमाल्यैश्चालङ्कृत्य यथोक्तमर्चनं कारयेत् । पूर्वस्माद्द्विगुणा दीपाः हवींषि च मुखवासमूर्तिहोमान्नबलिप्रभृतानि सर्वाणि पूर्ववदेव । विष्णुपञ्चकायन-विषुवमासर्क्षेषु नित्यञ्च विशेषपूजनं महाहविर्निवेदनञ्च नित्योत्सवं विशेषोत्सवञ्च कारयेत् । विष्वक्सेनादिसप्तत्येकोत्तरपरिवारदेवानाञ्च सप्तविंशतिविग्रहैरर्चनं नित्यं त्रिसन्धिष्वाचरेत् । साष्टशतं त्रिशतं पञ्चशतं सहस्रं वा तथा अराधकाः परिवारकाः द्विशतैः वाद्यघोषणं द्विशताभिर्वा अप्सरोभिः नृत्तगेयवाद्यैश्च पूजन-मित्येतैर्युक्तमुत्तमोत्तमम् । एतत्कर्तुमशक्तानां पञ्चमूर्तिविधानेनार्चनमुत्तमोत्तम-मिति विज्ञायते ।

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे
षट्सप्ततितमोऽध्यायः ।

---

## ॥ अथ सप्तसप्ततितमोऽध्यायः ॥

अथ पंचमूर्तिविधानं पूर्वं सङ्क्षेपादुक्तम् । तदेव सविशेषं सविस्तरं व्याख्या-स्यामः । विष्णुः पुरुषः सत्योऽच्युतोऽनिरुद्ध इति पञ्च मूर्तयः । तेषामदिः परमो विष्णुः युक्तो धर्मं ज्ञानमैश्वर्यं वैराग्यमिति चतुर्भिर्गुणैः । तस्मादादि-मूर्तेरेव भिन्नाः पुरुषाद्याश्चतस्रो मूर्तयः । धर्मेण गुणेन भिन्नः पुरुषमूर्तिः ज्ञानेन सत्यमूर्तिरैश्वर्येणाच्युतमूर्तिर्वैराग्येणानिरुद्धमूर्तिः । एता मूर्तयश्चतुर्युगाः चतुर्वर्गाः चतुर्वर्णाः चतुर्वेदाः चतुर्वर्णसमृद्धिप्रदा भवन्ति । आदिमूर्तेरेकस्यैव

Sri Gargeshwari Digital Foundation

पंचभेदकल्पनं पंचमूर्तिविधानम् । अभिन्नसंकल्पने चैकमूर्तिविधानेऽपि पंचमूर्तिनाभिरेवार्चनं विहितं चातुर्वर्ण्यसमृद्ध्यर्थम् । तस्मात्पंचमूर्तिविधानेनार्चनं श्रेष्ठम् । यथैकस्याग्नेः कुण्डदिङ्नाममन्त्रैः क्रियाभेदैः पंचधैवाग्निहोत्राहुतिः तथा देवेशस्यैकस्यैव दिग्गर्भालयमूर्तिनाममन्त्रक्रियाभेदैः पंचधाऽर्चनमेतच्छान्तिकम् । पौष्टिकं सर्वसुखकरं[1] सर्वलोकप्रदमपत्यवर्धनं धनधान्यादिसर्वसम्पत्प्रदं ज्ञानादिकवैदिककर्माभिबृंहणं ब्रह्मवर्चसकरमायुरारोग्यकरञ्च भवति । नलिनकाष्टाङ्गनन्द्यावर्तचतुर्मुखसर्वतोभद्रश्रीप्रतिष्ठितकविमानानामेकस्मिन् प्राग्द्वारे पंचमूर्तिविधिना देवेशं प्रतिष्ठाप्यार्चयेत् । सहस्रविप्रावासग्राममध्ये पंचमूर्तिविधिना विष्णोरर्चनं न कारयेत्तद्वास्तु सर्वविनाशायैव भवति । सहस्रन्यूनेऽपि शताधिके च कुर्याच्चेत्तद्वास्तु सर्वसम्पन्नं भवति । एतच्छूद्रोऽनुलोमश्च नैव कारयेत् । सहस्रान्यूनग्राममध्ये चैकमूर्तिविधिना वाऽर्चयेदिति केचित् । कर्षणादिकर्म सर्वं[2] पूर्वमेवोक्तम् । विमानं त्रितलं चतुर्दिक्षु चतुर्मुखं मध्ये चतुर्दिक्षु पंचगर्भालयं चतुर्दिक्षु मुखमंडपचर्यासोपानसंयुक्तं कृत्वा मध्यगर्भालयादिभूमिं सिकताभिरापूर्य सम्यक् [3]घट्टनं कुर्यात् । देवानासीनान् स्थितान्वा कारयेत् । प्राच्यां सितवर्णं पुरुषं रक्तनेत्रास्यपाणिपादं दक्षिणवामयोर्देव्यौ सुवर्णाभां श्रियं, रक्ताभां मेदिनीं च [4]वीजयन्तीं सुरां रक्तां सुन्दरीं कनकाभामर्चकं भृगुं प्रवालाभं मार्कण्डेयं श्वेताभं च कृत्वा भित्तौ दक्षिणवामयोः, यथोक्तवर्णां [5]सावित्रीं गायत्रीं [6]स्वयम्भुवं रुद्रमपि प्रागादि नैर्ऋत्यन्तं सौपर्णाद्यांश्च पश्चिमादीशानान्तं [7]विघ्नं निधिपतिं शंखं पद्मं च विलिखेत । दक्षिणस्यामञ्जनाभं सत्यमूर्तिं देवीं धृतिं रक्ताभां पौष्णीं श्यामाभां चैव द्वे व्याजिन्यौ जयां श्यामां भद्रां रक्तां मुनिं धातृनाथं कनकाभं चिरायुषं श्यामं कृत्वा विरिंचिं गुहं सिद्धान् ज्ञानरूपान् दक्षिणे सोमं रुद्रं वह्निं धर्मं च वामे विलिखेत् । पश्चिमे कनकाभमच्युतं देवीं पवित्रीं कनकाभां क्षोणीं

---

1. दुःखहरं. 2. B. सर्वमेवोक्तं. 3. A. घट्टनं. 4. A. बीजयन्तीम् सुरां रक्तां सुन्दरीम कनकप्रभं. 5. सावित्रीम. 6. म. स्वायंभुवात्मनात् (?). 7. विघ्नं निद्रानिधिपतीन्.



SGDF Sri Gargeshwari Digital Foundation

शुक्लामर्चकं ख्यातीशं प्रवालाभं पुराणं रक्तं वीजयन्तीं विजयां रक्तां विन्दां श्यामां कृत्वा नरनारायणौ दक्षिणे कामं रतिं वामे क्षमां लिखेत् । उत्तरे [1]प्रवालाभमनिरुद्धं अनन्तोत्सङ्ग आसीनं वीरासनेनानन्तं तस्य सहस्रफणान् कर्तुमशक्यं, द्वादश सप्त पञ्च वा फणान् कृत्वा देवीं प्रमोदायिनीं प्रवालाभां महीमिन्दीवराभामर्चकं भृगुं दक्षिणे [2]रौहिणेयं सिताभं नारसिंहं वन्दमानमेक-जानुनाऽऽसीनं वामे वराहरूपं च लिखेत । तदूर्ध्वे तले द्वितीये मध्यमगर्भालये विष्णुं श्यामाम्बुदप्रभमादिमूर्तिं देवीभ्यां सहासीनं कृत्वा अर्चकमुनिं मार्कण्डेयं भृगुं वीजयन्त्यौ मायासंह्लादिन्यौ द्वारपालं दक्षिणे बलिन्दं वामे तुहणं च कृत्वा तदूर्ध्वे तले तृतीये अनन्तशयनं देवेशं कारयेत् । अथवा द्वितीयतले नारसिंहं सिंहासने समासीनं शङ्खचक्रधरं कृत्वा [3]तदधस्तात् देवस्याग्नेये ब्रह्माणं ऐशान्ये रुद्रं देवेशमुद्वीक्ष्य विस्मयोत्फुल्ललोचनं प्रवालाभं वन्दमानं ब्रह्माणं श्वेताभं रुद्रं च [4]प्रह्लादं बृहद्वादकं गरुडं च कुर्यात । तृतीये तले विष्णुमादिमूर्तिं पूर्ववत्कारयेदिति केचित । एतद्विमानं त्रिभिः पञ्चभिः सप्तभिर्वा प्राकारैर्युक्तं कृत्वा परिवारदेवांश्च कारयेत् । प्रथमावरणे [5]वैनतेयं पश्चिमोन्मुखं देवमुद्वीक्ष्य स्वस्तिकासनेनाऽऽसीनं [6]स्थितं वा ईशानरविशक्राग्नीन् [7]प्रत्यङ्मुखान गुहदुर्गायमानुदङ्मुखान् निर्ऋति[8]बुधवरुणवायून् प्राङ्मुखान् ब्रह्मकुबेरविष्वक्सेनान् दक्षिणमुखान् द्वाराद्बाह्ये दक्षिणतो विघ्नमुत्तराभिमुखं [9]वामतः शेषं दक्षिणाभिमुखं च द्वितीयावरणेऽभिमुखे चक्रं गोपुराद्बाह्ये तथा ध्वजं शङ्खं च रक्षागारात्पुरस्तात् भूतपीठं दक्षिणपश्चिमयोरुद्यानमुत्तरस्यामर्चका-नामावासं चाऽऽचार्यगृहं विष्वक्सेन[10] सूत्रेण कारयेत् । तथैव पञ्चमूर्तीनां प्रतिष्ठां कुर्यात् । पुरुषाद्याश्चतस्रो मूर्तीरेवैवं स्थापयेच्चेत्तच्चतुर्मूर्तिविधानमिति । अनि-

---

1. ग. अग्निसन्निभमनिरुद्धं. 2. A. दक्षिणे रौहिणेयं सिताभं. A 3. तदधस्ता देवमाग्नेये. 4. प्रह्लादं बृहद्वादकं गरुडमिति B. कोशेषु नास्ति. 5. A. पश्चिमाभिमुखं वैनतेयं. 6. स्थितं वेति ग. कोशे नास्ति. 7. A. प्राङ्मुखान्. 8. A. बुधवायून्. 9. A. उत्तरत. 10. A. सूत्रे.

SGDF Sri Gurgeshwari Digital Foundation

रुद्धं विना [1]पुरुषाद्याः त्रिमूर्तयः । प्रथमे नैव संस्थाप्ये । पृथगनिरुद्धं स्थापयेत् ।

इति श्रीवैखानसे कश्यपप्रोक्ते ज्ञानकाण्डे पञ्चमूर्तिविधिर्नाम सप्तसप्ततितमोऽध्यायः ।

## ॥ अथ अष्टसप्ततितमोऽध्यायः ॥

### पञ्चमूर्तिप्रतिष्ठाविशेषः

अथ पञ्चमूर्तिप्रतिष्ठायां विशेषो वक्ष्यते । विमानात्पुरतो विष्णोरादिमूर्तेर्यागशालां पूर्ववत्कृत्वाऽलंकुर्यात् । तन्मध्ये शयनवेदिं तस्याः परितः पञ्चाग्नीनां तथा कुण्डादीनि कल्पयित्वा आहवनीयस्य पूर्वे स्नपनश्वभ्रं पङ्क्तिं च कल्पयेत् । तस्याः पूर्वस्यां पुरुषमूर्तेर्यागशालां दक्षिणायतां पूर्ववत्कृत्वा तन्मध्ये शयनवेदिं तदुत्तरे पूर्ववदाहवनीयाग्निकुण्डं तत्प्राच्यां श्वभ्रं पङ्क्तिं च कुर्यात् । विमानाद्दक्षिणे तद्गर्भालयाभिमुखे सत्यमूर्तेर्यागशालां दक्षिणायतां पूर्ववत्कृत्वा तन्मध्ये शयनवेदिं [2]तद्दक्षिणे अन्वहार्याग्निकुण्डं [3]तत्प्राच्यां श्वभ्रं पङ्क्तिं च कृत्वा अच्युतमूर्तेर्यागशालां तद्गर्भालयाभिमुखे पश्चिमायतां कृत्वाऽलंकृत्य तन्मध्ये शयनवेदिं [4]तत्पश्चिमे गार्हपत्याग्निकुण्डं [5]तदुत्तरे श्वभ्रं पङ्क्तिं च कृत्वा [6]अनिरुद्धमूर्तेश्च तद्गर्भालयाभिमुखे यागशालामुत्तरायतामलंकृत्य तन्मध्ये शयनवेदिं [7]तदुत्तरे चावसथ्याग्निकुण्डं तदुत्तरे श्वभ्रं पङ्क्तिश्च, पञ्चमूर्तीनामेवं यागशालाः कृत्वा पुरुषमूर्तेर्यागशालायाः प्राच्यामनन्तशयनस्य यागशालामूर्ध्वतलार्धं कृत्वा-अलंकृत्य आदिमूर्तिवदग्निकुण्डादीनि सर्वाणि कारयेत् । तले द्वितीये नारसिंहश्चेत् तस्याप्यादिमूर्तिवद्यागशालामग्निकुण्डादीनि, तृतीये विष्णुमूर्तिश्चेत्तस्यापि पूर्ववदेव । द्वारेषु तोरणानि पुरुषमूर्तेराश्वत्थं[8] सत्यमूर्तेरौदुम्बरमच्युतमूर्तेः

1. A. पुरुषाद्या मूर्तयश्चतस्रः प्रथमो नैव संस्थाप्यः 2. A. तदुत्तरे पूर्ववत्. 3. A. तद्दक्षिणे. 4. A. तदुत्तरे. 5. A. तत्पश्चिमे. 6. इतः परं घ. कोशे त्रुटितम्. 7. A. दक्षिणस्यां. 8. अश्वत्थादीनां व्यत्ययेन निवेशः A कोशेषु दृश्यते.

SGDF Sri Gargeshwari Digital Foundation

प्लाक्षमनिरुद्धमूर्तेर्वाटमादिमूर्तेः सर्वाण्यपि [1]स्थापयेत् । तद्विमानादुत्तरे वास्तुहोमं हुत्वा पर्यग्निपञ्चगव्याभ्यां[2] शोधयित्वा गर्भालयेषु पृथगेव पुण्याहं वाचयेत् । नवबिम्बप्रतिष्ठा चेत् अक्षिमोचनाधिवासने पूर्ववत्कृत्वा षट्कुम्भान् सङ्गृह्य तथैव कुम्भपूजनं कृत्वा तत्कुम्भैः सह पूर्ववदादिमूर्तिं विष्णुं ततः पुरुषं सत्यमच्युतमनिरुद्धं च क्रमेणाऽनीय श्वभ्रे देवान् तत्तत्पार्श्वे कुम्भांश्च सन्न्यसेत् । यजमानो गुरुपूर्वान् ऋत्विजः वस्त्राभरणैरलङ्करोति । ते च पादौ प्रक्षाल्याचम्य आदिमूर्तेर्यागशालायां पञ्चाग्नीनामाघारं [3]कृत्वा पुरुषादीनामपि होमेष्वाघारान्ते वैष्णवं जुहुयुः । दण्डवत्पङ्क्तिमादिमूर्तेः [4]पुरुषमूर्तेश्चोत्तरादि दक्षिणान्तं सत्यमूर्तेः प्रागादि पश्चिमान्तं अच्युतमूर्तेर्दक्षिणाद्युत्तरान्तं अनिरुद्धमूर्तेः पश्चिमादि प्रागन्तं कृत्वा तत्रोपस्नानेन कलशान् सह सन्न्यस्य तैः पूर्ववत्स्नापयेत् । तथा शयनान्यास्तीर्य अलङ्कृतासु वेदिषु देवान् कुम्भैः सह समारोप्य प्रतिसरं बद्ध्वा 'यद्वैष्णव' मिति मन्त्रेण तत्तन्नाम संयोज्य [5]यत्र यत्र गर्भालयद्वारं तत्र तत्र मौलिं[6] शाययित्वा [7]होता हौत्रं प्रशंस्य तत्तन्मूर्तिमन्त्रैः देवं देव्यौ च दक्षिणप्रणिधौ समावाह्य जुष्टाकारं च कृत्वा तत्तन्मूर्तिमन्त्रैराहुतीर्यजेत् । सभ्ये सर्वदैवत्यं पारमात्मिकं जयादीनींकारादीनष्टाशीतिं यद्देवादींश्च जुहुयात् । नारसिंहप्रतिष्ठा चेत् तत्राप्येवं हुत्वा 'यो वा नृसिंह' [8]इत्येवं मन्त्रं व्याहृत्यन्तमष्टाधिकशतमावर्त्य नारसिंहं स्मरन् जुहुयात् । पुरुषमूर्तेः पुरुषसूक्तं व्याहृत्यन्तं सत्यमूर्तेः 'सत्यः सत्यस्य' इति व्याहृत्यन्तं अच्युतमूर्तेः विष्णुसूक्तं व्याहृत्यन्तं अनिरुद्धमूर्तेरेकाक्षरादिसूक्तं व्याहृत्यन्तं हुत्वा सर्वासां मूर्तीनां होमेषु[9] यावत्सङ्ख्याः तदाहुतयः तावतीः पलाशसमिधो हुत्वा आज्येन जुहुयात् । अनन्तशयनस्याप्यादिमूर्तेरिव जुहुयात् । एवं रात्रौ होमान् समाप्य प्रभाते गुरुर्यजमान ऋत्विजश्च स्नात्वा आलयं प्रदक्षिणीकृत्य सभ्यादि सर्वानग्नीन्

---

1. A. कारयेत्. 2. A. गव्याभ्यामुक्षणाभ्यां. 3. A. हुत्वा. 4. A. पुरुषमूर्तेः प्रागादि पश्चिमान्तं सत्यस्य दक्षिणाद्युत्तरान्तं. 5. A. यत्र यत्र दिशि. 6. A. मौलिमनतिक्रम्य शयनं कृत्वा. 7. घ. कोशः पुनरारभ्यते. 8. A. इत्येतन्मन्त्रं. 9. A. यावत्संख्या आहुतयः तावत्यः

SGDF
Sri Gangadhareswar Digital Foundation

परिषिच्य आज्येन वैष्णवं विष्णुसूक्तं पुरुषसूक्तं च जुहुयुः । गर्भालयेषु सर्वेषु पूर्ववद्रत्नन्यासं कृत्वा मुहूर्ते समनुप्राप्ते शयनादादिमूर्तिं विष्णुमनन्तशायिनं चोत्थाप्य नारसिंहं विष्णुं वा पुनः पुरुषादिमूर्तीः क्रमादुत्थापयेत् । अथ पाद्यादिभिरभ्यर्च्यालङ्कृत्य शिरसा कुम्भानादिमूर्तिं पुरुषादिमूर्तीरपि क्रमादानीय तत्तद्गर्भालयं प्रविश्य 'प्रतद्विष्णु' रिति बिम्बानि स्थापयित्वा पुरुषसूक्तेन कुम्भान् मन्त्र्यस्य [1]सर्वदेवीश्च पूर्ववत्प्रतिष्ठाप्य तथाऽऽवाह्य यथोक्तान् परिषद्देवांश्चाऽवाहयेत् । पुण्याहान्ते देवालयाद्दक्षिणे[2] नित्यहोमार्थमौपासनविधिना कृतेऽग्निकुण्डे सभ्याग्निं निदध्यात् । आहवनीयमित्येके । अन्यानग्नीन् विसर्जयित्वा आदित्यं प्रणम्य अर्चनाक्रमेणाभ्यर्चयेत् । गुरुं [3]पूर्ववदृत्विजश्च सम्पूज्य यथोक्तां दक्षिणां दद्यात् । अन्यत्पूर्ववत् । सर्वान् कामानवाप्नुयादिति ।

## पञ्चमूर्त्यर्चनम्

अथ पञ्चमूर्त्यर्चनम् । विष्णुं पुरुषं सत्यमच्युतमनिरुद्धमित्यादिमूर्तिं पूर्ववदर्चयेत् । 'श्रियं धृतिं पवित्रीं प्रमोदायिनी' मिति श्रियं 'हरिणीं पौष्णीं क्षोणीं मही' मिति हरिणीं 'पद्मापितरं धातृनाथं ख्यातीशं भृगु' मिति भृगुं 'चिरायुषं मार्कण्डेयं रौहिणेयमुदग्रिण[4]' मिति मार्कण्डेयं, द्वारे 'तुहणं दैत्यराजं विष्णुभक्तं गदाधर'मिति दक्षिणे तुहणं 'दैतेयं महावीर्यं बलिन्दं [5]शूलपाणि'मिति वामे बलिन्दं च । अन्यान् पूर्ववदेव । 'पुरुषं पुरुषात्मकं परमपुरुषं धर्ममय' मिति पुरुषमूर्तिं, देवीं 'श्रियं कमलां पुरुषप्रियामानन्दा' मिति श्रियं 'मेदिनीं धरणीमुर्वीं सर्वाधरा' मिति मेदिनीं, [6]अर्चकं 'भृगुं मुनिवरं शुद्धमग्निवर्णं तपोमय' मिति भृगुं 'पुराणं भक्तिमन्तं भार्गवं चिरजीविन' मिति [7]पुराणं, द्वारदक्षिणे 'शङ्खं निधिवरं धनदसखं मौक्तिकोद्भव' मिति शङ्खं, 'पद्मं निधिवरं रक्ताङ्गं भूतनायक' मिति पद्मं वामेऽर्चयेत् । [8]'सत्यं सत्यात्मकं सत्यनिष्ठं सत्यनित्यं सत्याधार' मिति सत्यं, देवीं 'धृतिं क्षमां दक्षसुतां सत्य-

1. A. सर्वमूर्तीः देवीश्च. 2. A. दक्षिणे प्रथमावरणे । 3. B. पूर्वमृत्विजश्च
4. A. मुनिमिति. 5. B. शूलपाणिनम्. 6. A. अर्चकमुनिं. 7. B. पुण्यं.
8. अत्र सर्वत्र ग्रन्थपातः उपलभ्यते. ग. सत्यं सत्यात्मकं सत्यनिष्ठं सत्याधरं सत्यमिति केचित्.

SGDF
Sri Gargeshwari Digital Foundation

पत्नी' मिति धृतिं 'पौष्णीं वरदामुर्वीं [1]पृथ्वी' मिति पौष्णीं, 'धातृनाथं पूतकायं ब्रह्मसम्भवं [2]वाग्देवीपति' मिति धातृनाथं [3]'पुण्यं विश्वं शुद्धं वरिष्ठ' मिति पुण्यं, द्वारदक्षिणे 'शङ्खचूलं वृक्षदण्डं श्वेताङ्गं घोररूपिण' मिति शङ्खचूलं 'चक्रचूलं महानादमुग्ररूपं भयानक' मिति चक्रचूलं वामेऽर्चयेत् । 'अच्युतमपरिमितमैश्वर्यं श्रीपति' मित्यच्युतं, 'पवित्रीमिन्दिरां लक्ष्मीमच्युतप्रिया' मिति पवित्रीं [4]'क्षोणीं वरांगीं वरदां पुण्यदायिनी' मिति क्षोणीं, 'भृगुं ख्यातीशं तपोयोनिममृतयोनि' मिति ख्यातीशं 'सिताङ्गमुग्रतपसं [5]चिरायुषमनन्तग' मिति सिताङ्गं, द्वारदक्षिणवामयोः शङ्खनिधिपद्मनिधी समर्चयेत् । 'अनिरुद्धं महान्तं वैराग्यं सर्वतेजोमय' मित्यनिरुद्धं, 'प्रमोदायिनीं वरारोहामब्धिकन्यां रमा' मिति प्रमोदायिनीं 'महीं गां पृथुलां ध्रुवा' मिति महीं, 'भृगुं तपोनिधिं [6]वेदरूपं महाप्रभ' मिति भृगुं 'मार्कण्डेयममितं दीप्तं पुण्यभावन' मिति मार्कण्डेयं, द्वारपालौ तथा शङ्खचूलचक्रचूलावर्चयित्वा - मणिकं शङ्खिलमसुरं व्यासं धर्मं वेदव्यासं सावित्रीं वेदमातरं गायत्रीं व्याहृतिं चतुर्दशमनून् वैखानसवालखिल्यान् वैराजं कालं ब्रह्माणं हरिशाङ्कररूपं निद्रां विघ्नञ्चाभ्यर्च्य – 'धर्मं सत्यं [7]शुभं पुण्य' मिति धर्मञ्च दक्षिणे पार्श्वे, सरस्वतीं वह्निं रुद्रं चक्रं सूर्यं सोमं गन्धर्वराजं गुह्यञ्च पश्चिमे, 'कामं मनोभवं रतीशं मकरध्वज' मिति कामं, 'नारायणं पुराणेशं [8]त्रयीमयं विश्वरूप' मिति नारायणं, 'सर्वाङ्गं नरं सर्वयोनिं सनातन' मिति नरं, 'नारसिंहं तपोनाथं महाविष्णुं महाबलमनन्तबल' मिति नारसिंहं, 'वराहं वरदमुर्वीसन्धारणं [9] वज्रदंष्ट्रण' मिति [10]वराहं, 'गङ्गां सरस्वतीं सिन्धुं कौशिकीं नर्मदां वीपां यमुनां चन्द्रभागाञ्च पूजयेत् । तदूर्ध्वे तृतीयतले शयानं विष्णुं 'मनन्तशयनमनादिनिधनममितमहिमानमत्यन्ताद्भुत' मिति देवेशमन्यानपि पञ्चायुधांश्च नाभ्यम्बुजसमासीनं ब्रह्माणञ्च श्रियं भूमिं मार्कण्डेयं वीशशेषिकौ तथैवार्चयेत् । द्वितीये तले

1. छ, प्रक्रमां. 2. A. वाग्देवं. 3. A. विश्वं शुद्धं पवित्रं वरिष्ठमिति. 4. A. पौष्णीम्. 5. ग. चिरायुमानन्दं. 6. A. देवरूपं. 7. B. शुभदं पूर्णमिति. 8. क. धीमयं. 9. B. उर्वीधारणं. 10. ख. वाराहम्.

SGDF Sri Gargeshwari Digital Foundation

नारसिंहप्रतिष्ठा चेत् 'नारसिंहं तपोनाथं महाविष्णुं महाबलमनन्तबल' मिति नारसिंहं देवेशं, दक्षिणे 'विरिंचिं वरदं ब्रह्माणं पद्मसम्भव' मिति ब्रह्माणं, वामे 'रुद्रं त्र्यम्बकं शर्वं गौरीश' मिति रुद्रं, 'यज्ञं [1] सुतपसं शुद्धं भाविताmान' मिति पूजकं दक्षिणे, 'तीर्थं वहनं मन्त्रसिद्धं महामति' मिति वामे च, 'विद्वांसं [2] संस्तुतिजं सुमतिं महाप्रभ' मिति शैविकं, [3] एतैः मन्त्रैः यथोक्तैः विग्रहैश्च पूर्ववदभ्यर्च्य बलिदानस्नपनादीनि कारयेत् । [4] बलिदानस्नपनोत्सवान् सर्वमूर्तीनां कर्तुमशक्तो विष्णोरादिमूर्तेरेव कारयेत् [5] । अथवा यस्यां यस्यां मूर्तौ नृणां भक्तिः सञ्जायते तस्या एवादिमूर्तेः सह वा पृथगेव वा पुण्यर्क्षे पूजां विशेषपूजाञ्च कारयेत् ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे पञ्चमूर्तिप्रतिष्ठार्चनाविधिर्नाम अष्टसप्ततितमोऽध्यायः ।

---

## ॥ अथ एकोनाशीतितमोऽध्यायः ॥



अथ प्रादुर्भावाणां पृथग्विमाने बेरकल्पनं पूर्वं सङ्क्षेपादुक्तम् । इदानीं विस्तरात्सुव्यक्तं [6] सविशेषमेतेषां पृथक् पृथक् भेदं प्रतिष्ठाञ्च ब्रवीमि । मत्स्यः कूर्मो वराहो नारसिंहो वामनो जामदग्न्यरामो राघवरामो बलरामः कृष्णः कल्की इति दश प्रादुर्भावान् सर्वेऽप्याहुः । एतेषामेकविमाने [7] सह प्रतिष्ठा चेत् [8] एकयागशालायां मध्ये दक्षिणतो मत्स्यस्य तदुत्तरे कूर्मस्य प्रागाद्यष्टदिक्षु तथा वराहादीनाञ्च तथा शयनवेदिं तत्प्राच्यामेकैकमग्निकुण्डं पृथगेव कुम्भपूजनञ्च कृत्वा तेषां यथोक्तमेकस्मिन्नेवाग्नौ जुहुयात् । पृथक् प्रतिष्ठा चेत् पञ्चस्वग्निषु पूर्ववज्जुहुयात् ।

---

1. B. सुतापमं. 2. A. विद्वांसं स्तुतिजं. 3. A. एतैः मूर्तिमन्त्रैः. 4. A. स्नपनोत्सवार्चामूर्तीनां प्रतिश्रं कर्तुमशक्तो विष्णोरादिमूर्तेः 5. क. वा. 6. A. बेरकल्पनमेतेषां. 7. A. सहप्रतिष्ठायां. 8. A. एकयागशालां.

SGDF
Sri Gargeshwari Digital Foundation

मत्स्यः

महाजलैः सर्वचराचरप्रलये सम्भूते जगत् पुनः स्रष्टुं तज्जलोपसंहारार्थं देवेशो महामत्स्योऽभूत् । अस्य नैव भेदः । पूर्ववदेव रूपम् ।

कूर्मः

प्रथमो द्वितीयश्चेति द्विविधो भवति कूर्मः । स्वस्थानाच्चलित [1] जगदण्डभरणार्थं प्रथमः । [2] अमृतमन्थने मन्थराचलभरणार्थं द्वितीयः । तयोश्च तु रूपं पूर्ववत् । मत्स्यकूर्मयोः ध्रुवबेरमेव । कौतुकं बिम्बं विष्णुं चतुर्भुजमेव कारयेत् । तद्विपरीतमित्येके । तयोः पूजकौ ब्रह्मेशौ । प्रतिष्ठायां विशेषो वक्ष्यते । मत्स्यस्य पौण्डरीके प्रधानाग्नौ हौत्रं प्रशंस्य मूर्त्यावाहनजुष्टाकारस्वाहाकारप्रधानहोमांश्चाऽऽचरेत् । 'मत्स्यं जलजं भद्रं क्रीडात्मक' मिति [3] मत्स्यस्यावाहनादि । पारमात्मिकमन्त्रेषु मन्त्रानन्यान् विना 'यस्स्वयं सृष्ट' मिति मन्त्रेणैकेनैव अष्टाधिकशतमावर्त्य जुहुयात् । कूर्मस्य गार्हपत्ये प्रधानाग्नौ हौत्रप्रशंसनादीनि कुर्यात् । 'अकूपारं जलजं कूर्मं कच्छप' मित्यस्यावाहनादीनि । 'रायामीश' [4] इत्येकेन अष्टाधिकशतमावर्त्य जुहुयात् । अन्यपरिवारदेवानामावाहनादीन्यन्यान्यनुक्तानि सर्वाणि च पूर्ववदेव । एष विशेषः । वैराग्यैश्वर्याभ्युदयप्रतिष्ठाकामः मत्स्यकूर्मौ सहैव कुम्भाकारे त्रिकूटे हस्तिपृष्ठे सोमच्छन्दे नन्द्यावर्ते वा विमाने प्रतिष्ठाप्यार्चयेदिति ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
मत्स्यकूर्मद्वितयप्रतिष्ठा विधिर्नाम एकोनाशीतितमोऽध्यायः ।

---

## अथ अशीतितमोऽध्यायः

---

वराहः

अथ वराहः त्रिविधो भवति । आदिवराहः प्रलयवराहो यज्ञवराह इति । महाभारनिपीडितां रसातलमग्नां महीमादावुद्धर्तुं देवेशो महावराह-

1. A. जगदण्डाहरणार्थं. 2. क. अमृतमन्थनमन्थराचलोद्धरणार्थं. 3. A. मत्स्यस्य पारमात्मिकमन्त्रेषु यस्स्वयम. 4. A. इत्येतेन.

SGDF Sri Gargeshwari Digital Foundation

रूपोऽभूत् । तस्मादादिवराहः । स तां [1]रसातलादुद्धृत्योत्थितः । तस्मादुपलालनवराह आसीत् । तस्य मुखं वराहवदन्यद्रूपं नरवत् । वर्णो नीलाम्बुदवत् सस्यनिभो वा । भुजाश्चत्वारः [2]पादौ द्वौ, दक्षिणो भूमौ पीठे स्थितो वामो रसातलादुत्क्रमणायाऽकुञ्चितः[3] । तदूर्वोर्द्वयोः पञ्चतालमानेन महीं श्यामाभां प्राञ्जलीकृतोभयहस्तां प्रसारितोभयपादां पुष्पाम्बरधरां देवमुद्वीक्ष्य [4]क्रीडाहर्षयुतां देवीञ्च कारयित्वा, देवस्य दक्षिणहस्तेन देव्याः पादौ गृहीत्वा देवस्य परपार्श्वे बाह्वोरधस्तात् वामहस्तमाधारवत्कृत्वा [5]महीमुद्धृत्य अन्यहस्ताभ्यां [6]चक्रशङ्खधरं देवीं मूर्ध्नि मुखेन जिघ्रन्तं सर्वाभरणभूषितं देवं, तत्पूजकौ श्यामाभौ पुण्यधर्मौ प्रथमद्वारपालौ, श्वेताभां ब्रह्मश्रियं रक्ताभां राजश्रियञ्च, वाहनं श्वेताभं चतुर्वेदं शैषिकं, श्यामाभं पुलिन्दञ्च कारयेत् । एवमादिवराहं सर्वतोभद्रे अञ्जनाकारे सोमच्छन्दे [7]कुम्भाकारे त्रिकूटे हस्तिपृष्ठे वा विमाने राजराष्ट्रविवृद्धिकामो [8]बहुभूमिधनसस्यादिप्राप्तिकामो वा प्रतिष्ठापयेत् ।

[9]अथ अवान्तरे महाजलैः जगत्प्रलये प्राप्ते तज्जलमुपसंहर्तुं महावराहः अभवत् । स प्रलयवराहः । [10]तज्जलं रोमकूपेषूपसंहृत्य जगत्पुनः स्रष्टुं [11]नरवराहः आसीत् । तस्यापि भुजाश्चत्वारो द्वौ शङ्खचक्रधरौ दक्षिणो न्यस्ताभयहस्तो वामः कट्यवलम्बितः पीतवर्णमम्बरं नीलं वा । अन्यानि पूर्ववत् । एवं सुखासनेनासीनं देवं कारयित्वा दक्षिणपार्श्वे देवीं हस्तेन दक्षिणेन पद्मधरां वामेन कट्यवलम्बनकरां आसीनां महीञ्च तत्सिंहासनादधस्तादुत्तरपार्श्वे द्विहस्तं वीणाधरं [12]रक्ताभं नारदं, दक्षिणोत्तरयोः पूजकौ पीताभौ मार्कण्डेयभृगू च कारयेत् । एवं प्रलयवराहमपमृत्युजयकामः[13] स्वकुलवर्धनकामो वा पूर्वोक्तविमाने प्रतिष्ठापयेत् । सर्वयज्ञविश्रेषणकरं[14] हिरण्याक्षं हत्वा यज्ञस्थापनार्थं तथा [15]नरवराहः । [16]तस्यापि प्रलयवराहवदेव रूपम् । श्वेतवर्णो विशेषः । तथा देवीभ्यां श्रीभूमिभ्यां सह

---

1. A. रसातलादुद्धृत्यं तस्य मुपलालनवरवराहरूप आसीत्. 2. क पादः 3. क. उत्क्रमणाय कुञ्चितः. 4. A. लीला. 5. क. महीमुद्धृत्य समुत्थितं. 6. क. शङ्खचक्रधरं. 7. क. कूटाकारे. 8. क. बहुभूमिधनादि. 9. अथान्तरे. 10. म. यस्तज्जल रोमकूपेषु संहृत्य. 11. ख. नरवराहवत्. 12. क. रक्तनिभं. 13. म. काम इति न दृश्यते. 14. क. विद्वेषणकरं. 15. क. नरवराहवदासीत् 16. यज्ञवराहस्यापि.



SGDF Sri Gargeshwari Digital Foundation

सिंहासने [1]सुखासीनं देवं कारयित्वा, पूजकं कनकाभं यज्ञं श्यामाभं तीर्थञ्च कारयेत् । [2]देवं यज्ञवराहं यज्ञादिब्रह्मवर्चसकामः पूर्वोक्तविमाने प्रतिष्ठापयेत् । एतद्वराहत्रयस्यापि सभ्ये प्रधानाग्नौ हौत्रप्रशंसनादीनि । [3]'वराहं वरदं भूमिसन्धारणं वज्रदंष्ट्र' मित्यादिवराहस्य 'गां पृथुरां [4]महीमुर्वी' मिति मह्याः, 'पुण्यदं शुभं सुकृतं धन्य' मिति पुण्यस्य, 'धर्मं परमं वृषं सत्य' मिति धर्मस्य, 'ब्रह्मश्रियं धर्ममयीं विद्यांगीं [5]शुद्धात्मिका' मिति ब्रह्मश्रियः, 'राजश्रियं महाभोगां नीतिमयीं सुदीक्षा' मिति राजश्रियः 'ऋङ्मयं यजुर्मयं साममयमथर्वमय' मिति चतुर्वेदस्य, 'पुलिन्दं सुप्रसन्नं तपोमुख्यं पुण्यनिधि' मिति पुलिन्दस्य, 'प्रलयवराहं भूमीशं जगन्नायक' मिति प्रलयवराहस्य, देव्याः पूर्ववत् । 'नारदं मुनिवरं वीणाधरं [6]सर्वज्ञ' मिति नारदस्य, 'यज्ञवराहं वेदमयं यज्ञेशं यज्ञवर्धन' मिति यज्ञवराहस्य 'यज्ञं क्रतुवरं यज्ञाङ्गं यज्ञमुख्य' मिति यज्ञस्य, 'तीर्थं पापहरं वरदं [7]कामरूपिण' मिति तीर्थस्य, तथा अन्यपरिवारदेवानामावाहनादीनि । 'क्ष्मामेका' मित्यादिवराहस्य 'स्वयमा' दिरिति प्रलयवराहस्य 'यं यज्ञै' रिति यज्ञवराहस्य पारमात्मिकमन्त्रेषु [8]एकमेकमेवाष्टाधिकशतमावर्त्य जुहुयादिति विशेषः । अन्यानि पूर्ववदेव । यथेष्टं वराहं प्रतिष्ठाप्यार्चयेत् ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे वराहत्रयलक्षण-वराहत्रयप्रतिष्ठाविधिर्नाम अशीतितमोऽध्यायः ।

---

## ॥ अथ एकाशीतितमोऽध्यायः ॥

### नारसिंहः

अथ [9]नारसिंहश्च गिरिजः स्थूणजश्चेति [10]द्विविधो भवति । धर्मतपःक्षयकरस्य हिरण्यकशिपोः वधार्थं नारसिंहरूपी गिरेः प्रादुरभूत् । स गिरिजो

---

1. क. सुखासनेनासीनं. 2. ग. एवं. 3. क. वराहं. 4. म. उर्वी महीम्. 5. क. शुद्धाधिकां. 6. म. सर्वयज्ञं. 7. क. कामरूपमिति. 8. क. एकमेकशतं. 9. छ. नारसिंहस्तु. 10. म. द्विधा भेदो भवति.

SGDF
Sri Gargeshwari Digital Foundation

नारसिंहः। तं [1]दैत्यवधं दृष्ट्वा देवाः देवेशस्य 'अहो बल'मित्यूचुः। तस्मादहोबलमित्येनं [2]प्रशंसन्ति। तद्देवस्य मुखं सिंहस्येव केसरसटामण्डलसहितं चतुर्दंष्ट्रं करालं विवृतास्यं सिंहस्येव कण्ठञ्च नरस्येवान्यद्रूपम्। भुजाः चत्वारो द्वौ शङ्खचक्रधरौ [3]दक्षिणोऽन्यो दानकरो वामोऽपि तदूरौ न्यस्तश्च। एवं [4]देवेशं शङ्खकुन्देन्दुधवलं किरीटमकुटाद्याभरणयुतं सिंहासने [5]सुखासनेन वीरासनेन वा समासीनं देवीभ्यां [6]सहितं रहितं वा कारयित्वा तत्पृष्ठपार्श्वे अनन्तस्य सप्तभिः पञ्चभिर्वा फणैः छादितमौलिं चतुर्भुजं द्वाभ्यां चक्रशङ्खधरं अन्याभ्यां स्वकर्णौ स्पृशन्तं अनिरुद्धं अथवा विना तथैवानन्तफणैश्च छादितमौलिं नारसिंहदेवं कारयित्वा, सिंहासनादधस्तात् दक्षिणतः तथा वन्दमानं नवतालमानेन ब्रह्माणं चतुर्भुजं द्वाभ्यामक्षमालाकुण्डिकाधरमन्याभ्यां प्राञ्जलीकृतं अभयकट्यवलम्बनकृतं वा जटामकुटयुतं, वामे च तथा वन्दमानमीशं[7] चतुर्भुजं द्वाभ्यामक्षमालापरशुधरमन्याभ्यां प्राञ्जलीकृतं वा अभयकट्यवलम्बनकृतं[8] जटामकुटयुतं, पूजकौ यज्ञतीर्थौ च पूर्ववत्। [9]एवं मार्कण्डेयभृगू वाहनं सामवेदं श्यामवर्णं शैषिकं रक्ताभं भूतीशञ्च तत् स्थाने कारयेत्। एवं गिरिजं नारसिंहं शत्रुदस्युविजयार्थी [10]पराजितत्वसर्वोपद्रवनाशकामो वा पर्वताकृतिके श्रीप्रतिष्ठितके नन्द्यावर्तके सर्वतोभद्रके स्वस्तिके वा विमाने तदुपरितले प्रतिष्ठाप्यार्चयेत्।

[11]जगतामिन्द्रादिदेवानाञ्च पीडाकरहिरण्यवधार्थं[12] भक्तरक्षणार्थञ्च[13] स्थूणादाविरभूत् स्थूणजो नारसिंहः। तत्काले च [14]हिरण्यवधं दृष्ट्वा देवा देवेशस्य 'महाबल'मित्यूचुः। तस्मान्महाबलमित्येनं प्रशंसन्ति। उपधानरहिते सिंहा-

---

1. क. दैत्यवधिनम्. 2. क. गिरिं प्रशंसन्ति. 3. क. दक्षिणोऽप्यादानकरो वामोऽप्यूरुन्यस्तश्च. 4. क. देवं कुन्देन्दुशङ्खधवलं. 5. सुखासनेनेति म. कोशे न दृश्यते. 6. ख. सहितम् वा. 7. क. शङ्करं. 8. अभयकटयवलम्यनकृतमिति क. कोशे नास्ति. 9. क. अथ मार्कण्डेयं भृगुं. 10. क. पराजित. 11. ग. जगदादिदेवानां. 12. क. हिरण्यकशिपुवधार्थं. 13. क. च तथा. 14. क. हिरण्यकशिपुवधं.

SGDF Sri Gargeshwari Digital Foundation

सने [1]समासीनस्य अतितीक्ष्णनखयुतदीर्घपाणियुताः भुजाश्चत्वारः द्वौ चक्रशङ्खधरौ विना वाऽपि तथोद्धृतो दक्षिणोऽन्यो दानकरः [2]वामः प्रबद्धः तद्दूरौ न्यस्तः। मुखमन्यद्रूपञ्च पूर्ववत्। महाकोपयुतं देवं तन्मकुटोपरि छत्रं रक्तवर्णं भित्तिपार्श्वे पूर्ववच्चामरधरौ किष्किन्धसुन्दरौ च कारयित्वा सिंहासनादधस्तात् दक्षिणवामयोश्च [3]'प्रभो! कोपमुपसंहर' रेति देवेशमुद्वीक्ष्य वन्दमानौ [4]ब्रह्मेश्वरौ च पूर्ववत्कारयित्वा दक्षिणे प्राञ्जलीकृतां [5]श्रियं देवीं, वन्दमानं द्विहस्तं प्रह्लादञ्च वामे, पूर्ववत् तत्तत् स्थाने अन्यपरिवारांश्च कारयेत्। अथवा श्रीदेवीं प्रह्लादनारदलोकपालान् भित्तौ समुल्लिखेत्। एवं स्थूणजं नारसिंहमाधिव्याधिभीतिविनाशार्थी[6] जयकीर्त्यायुष्यकामो वा महापद्मे स्वस्तिके [7]पद्मभद्रके वा [8]विमाने तदुपरितले प्रतिष्ठाप्यार्चयेत्। [9]एतयोर्नारसिंहयोः आहवनीये प्रधानाग्नौ हौत्रशंसनं आवाहनादीनि च कुर्यात्। 'अहोबलं सर्वबलं बलातिबलमनन्तबल' मिति गिरिजं पुरा ब्रह्मा समर्चयत। 'सुधृतिं सर्वाधारं कामबलममोघजं नार' मित्येनं रुद्रः। 'कर्मबलं [10]अनाथबलमनन्तबलमचिन्त्यबलमर्दन' मितीन्द्रः, अन्ये मुनयोऽप्यपूजयन्। तस्मादेतैः द्वादशनामभिः गिरिजनारसिंहस्यावाहनादीनि। 'नारसिंहं तपोनाथं महाविष्णुं महाबलमनन्तबल' मिति स्थूणजं सर्वेऽप्यपूजयन्। तस्मादेतैः पञ्चनामभिरेवं स्थूणजनारसिंहस्यावाहनादीनि। ब्रह्मेशानिरुद्धश्रीनारदयज्ञतीर्थलोकपालाद्यन्यपरिवारदेवानां पूर्ववत्। 'प्रह्लादं दैत्यपतिं विष्णुभक्तं महामति' [11]मिति प्रह्लादस्य 'सामवेदं [12]शान्तिसुखं गुरुपूर्वसुदरघिय' मिति सामवेदस्य, 'भूतीशं दिव्यराशिं सर्वलोकसुखावहं सर्वविघ्नविनाशन' मिति भूतीशस्यावाहनादीनि। पारमात्मिकमन्त्रेषु 'यो वा नृसिंह' इत्य-

---

1. क. सुखासीन. 2. क. वामतः प्रबद्धः 3. क. प्रभूतं कोपमुपसंहरन्तौ. 4. क. ब्रह्मेशौ. 5. क. श्रीदेवीं वन्दमानां द्विहस्तां. 6. क. विनाशार्थं. 7. छ. पद्मभर्तृके, म. भर्तृके. 8. विमान इति क कोशे नास्ति. 9. म. एतयोरिति नास्ति. 10. ख. नाथबलमचिन्त्यबलमरिमर्दनम्. 11. म. महाबलं. 12. ख. शान्तमुखं गुरुपर्वं.

SGDF Sri Gargeshwari Digital Foundation

ष्टाधिकशतमावर्त्य[1] जुहुयात । अन्यानि पूर्ववत् । [2]हविर्निवेदने बलिदाने च पायसं श्रेष्ठमिति विशेषः ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
नारसिंहद्वयविधिप्रतिष्ठाक्रमलक्षणं नाम
एकाशीतितमोऽध्यायः ॥

---

## ॥ अथ द्व्यशीतितमोऽध्यायः ॥

### वामनः

त्रैलोक्याधिपान्महाबलेः देवार्थं त्रैलोक्यं छलेनाऽदातुं वामनोऽभवत्[3] । देवस्तदादाय महारूपी त्रिविक्रमणेन त्रिलोकमानं कर्तुं त्रिविक्रमोऽप्यासीत । तौ सहैव स्थापयेत् । वामनं पृथगेवेति केचित् । त्रिविक्रममष्टभुजं चतुर्भुजं द्विभुजं वा कारयेत । भुजेषु दक्षिणेषु चक्रासिगदाशक्तिधरं वामेषु [4]शङ्खशरशार्ङ्गखेटकधरं अन्यवामहस्तमुद्धृतपादेन[5] प्रसार्य [6]तथैव स्थितं वामपादमुद्धृदक्षिणेन सुस्थितं महावेगयुतं किरीटाद्याभरणभूषितमेवमष्टभुजं, अथवा द्विहस्ताभ्यां चक्रशङ्खधरमन्येन दक्षिणेन जलादानपरं वाममुद्धृतपादेन प्रसार्य तथैव स्थितं महाहर्षयुतमेवं चतुर्भुजं, अथवा दक्षिणेन जलादानपरं [7]वामहस्तमुद्धृतपादेन सह प्रसार्य स्थितमेवं द्विभुजम् । त्रिविक्रमं केचिद्द्विभुजं नेच्छन्ति । क्रमात्पादोद्धरणात् त्रयोऽपि त्रिविधा भवन्ति । प्रथमो द्वितीयस्तृतीय इति । भूलोकमानाय वामपादे जानुमात्रमुद्धृते प्रथमः । अन्तरिक्षलोकमानाय नाभिमात्रमुद्धृते द्वितीयः । स्वर्गलोकमानाय [8]ललाटमात्रमुद्धृते तृतीयः । त्रिविक्रममेवं कारयित्वा तदुद्धृतपादतलं प्रगृह्य प्रक्षालनपरं पद्मस्थं ब्रह्माणं ततः [9]संस्रवद्रूपां स्वर्गान्तरिक्षगामूर्ध्वावलम्बिनीं नाभेरूर्ध्वं [10]शरी-

---

1. क. शतमाज्येन. 2. क. हविरिति नास्ति. 3. क. बभूव. स एव तदादाय त्रिविक्रमेण. 4. क. शङ्खमुसलशार्ङ्ग. 5. क. उद्धृत्य पादेन. 6. तथैवेत्यादि सहप्रसार्येत्यन्तं म. कोशे न दृश्यते. 7. म. वाममुद्धृत. 8. क. ललाटान्त. 9. A. सहस्रप्रभामिव. 10. क. शरीरं.

SGDF
Sri Gargeshwari Digital Foundation

रिणीमधः स्रोतोरूपां प्राञ्जलीकृतद्विहस्तां श्वेताभां गङ्गामुद्धृतपादपार्श्वे भ्रममाणं दैत्यं श्यामाभं नमुचिं [1]भेरीताडनपरं कपिमुखं नररूपं नीलाभं जाम्बवन्तं अपरभित्त्यूर्ध्वभागे छत्रधरमाकाशस्थमिन्द्रं[2] पार्श्वयोः चामरधरौ यमवरुणौ च स्थितपादाद्वामे [3]अतिशयेन प्रह्वायमानं शुक्रं तदूर्ध्वे मुष्ट्या प्रहरन्तं गरुडं त्रिविक्रमस्य दक्षिणे श्यामवर्णं वटुरूपं द्विभुजं दक्षिणेनोदकादानपरं वामेन छत्राषाढधरं कौपीनवाससं वामनं दक्षिणे [4]जलदानाय पाणिभ्यां कलशमुद्धृत्य स्थितं सुमुखं सर्वाभरणभूषितं सुवर्णवर्णं महाबलिं पूजकं कनकाभं कनकं शङ्खाभं शङ्खिलञ्च [5]मार्कण्डेयभृगू वा कारयेत् ।

विद्यार्थी वामनं भूलोकविजयार्थी त्रिविक्रमं प्रथममन्तरिक्षजयार्थी, द्वितीयं स्वर्गलोकजयकामः, सर्वलोकजयकामः तृतीयं, अष्टभुजं सार्वभौत्वकामी, चतुर्भुजं राज्यार्थी, ब्रह्मवर्चसकामः द्विभुजमेवं, त्रिविक्रमं सोमच्छन्दे दीर्घशालायां त्रिकूटे [6]गोपुराकारे छत्राकारे चतुःष्कुटे वा विमाने सहैव स्थापयेत् । त्रिविक्रमस्य कौतुकं [7]बिम्बं विष्णुमेव कारयेत् । पृथक् चेत् वामनं हस्तेन दक्षिणेन दण्डधरं वामेन छत्रधरं देवं कारयित्वा पूजकौ कनकशंकिलावेव कारयेत् । द्वयोः प्रतिष्ठायामन्वाहार्ये प्रधानाग्नौ हौत्रशंसनादीनि 'त्रिविक्रमं त्रिलोकेशं सर्वाधारं वैकुण्ठ' मिति त्रिविक्रमस्य, 'वामनं वरदं काश्यपमदितिप्रिय' मिति वामनस्य, 'कनकं मुनिमुख्यं सुतपसं दयापर' मिति कनकस्य 'शङ्खिलं [8]महामुनिवरं धर्मं तपोधिक' मिति शङ्खिलस्य 'असुरेन्द्रं महाबलिं सुखदं वैरभोजन' मिति महाबलेः 'जाम्बवन्तं [9]नीलाभं [10]चिरज्ञं [11]त्रिलोकप्रिय' मिति जाम्बवतः पूर्ववदन्यदेवानां चावाहनादीनि । पारमात्मिकेषु मन्त्रेषु 'यो वा त्रिमूर्ति' रित्येकमष्टाधिकशतमावर्त्य जुहुयात् । विष्णुसूक्तेन

---

1. अत्र भेरीताडन-पर अनयोः पदयोर्मध्ये सर्वेषु मातृकाकोशेषु ग्रन्थपातः सूचितः निमित्तं न दृश्यते. 2. क. आकाशे इन्द्रं. 3. म. शायनं प्रह्वायमानं. 4. क. जलदानायेव राज्ञीभ्यां. 5. क. मार्कण्डेयं भृगुं च. 6. क. गोपुराकारे चतुःस्फुट इत्येव. 7. क. बिम्बं चतुर्भुजं 8. ख. महामतिं वरधर्मं. 9. क. नीलनिभं. 10. क. त्रिकालज्ञं B. चरज्ञं. 11. म. त्रिलोकवरं.

SGDF
Sri Gargeshwari Digital Foundation

प्रतिष्ठामाचरेत् । आकाशस्थदेवानां [1]तानुद्दिश्य अधस्तात् पीठेऽर्चनमिति विशेषः । अन्यानि पूर्ववदिति ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे वामनत्रिविक्रमप्रतिष्ठाविधिर्नाम द्व्यशीतितमोऽध्यायः ।

---

## ॥ अथ त्र्यशीतितमोऽध्यायः ॥

### जामदग्न्यरामः

महाबलबहुक्षत्रियवधात् भूमिभारनिर्हरणार्थं जमदग्नेरुद्भूतो [2]जामदग्न्यरामः । तं देवं द्विभुजं [3]दक्षिणेन परशुधरं वामेनोद्देशकरं नीलाम्बरधरं वीरमार्गेण स्थितमासीनं वा कारयेत् । [4]देवं जमदग्निरामं फेलाकारे अङ्गनाकारे श्रीप्रतिष्ठितके महाशंखे वा विमाने तपोज्ञानजयार्थी स्थापयेत् । अस्यावसथ्ये हौत्रप्रशंसनादीनि । 'रामं जमदग्निसुतं भद्रं परशुपाणि'मिति परशुरामस्य । परिवारदेवानां पूर्ववत् । पारमात्मिकेषु मन्त्रेषु, ''विष्णुर्वरिष्ठ' इत्येकमष्टाधिकसप्तशतं[5] जुहुयादेष विशेषः । अनुक्तं पूर्ववदिति ।

### राघवरामः

इन्द्रादिदेवानामृषीणां हिंसनकरं रावणं हन्तुं रघोरन्वये राघवरामः अभूत् । एष सायुधो निरायुधश्चेति द्विविधो भवति । सार्धनवतालेन मानेन राघवरामं [6]श्यामाभं द्विभुजं दक्षिणेन पाणिना तीक्ष्णशरधरं वामेन धनुर्धरं किरीटमकुटादिसर्वाभरणभूषितं [7]त्रिभंगं सीतां [8]दक्षिणे अष्टतालमानेन देवीं द्विभुजां वामेन पद्मधरां दक्षिणमधः प्रसार्य [9]तथैव स्थितां, देवस्य वामे लक्ष्मणं पीताभं रामवत्तथा शरधनुर्धरं किञ्चिद्वामे [10]स्थितं, प्रमुखे वार्ताविज्ञापनपरं कपिरूपं द्विभुजं दक्षिणेन पिहितास्यं वामेन स्वाम्बरावकुण्ठनपरं हनूमन्तञ्च कारयेत् । एवं सायुधं

---

1. ख. तत्तदुद्दिश्य. 2. क. जामदग्न्यः. 3. छ. दक्षिणं परशुधरं वामं. 4. क. परम्. 5. म. इत्येकं सप्तभिः जुहुयात्. 6. ग. श्यामं. 7. ख. त्रिभङ्गस्थितं. 8. क. तद्दक्षिणे. 9. A. तथैवं. 10. ख. वामाश्रिते स्थितम्.

SGDF
Sri Gargeshwari Digital Foundation

रामं [1]सार्वभौमत्वकामः श्रीकामो वा फेलाकारे अङ्गनाकारे त्रिकूटे स्वस्तिके चतुःष्फुटे विमाने मण्डपे वा प्रतिष्ठाप्यार्चयेत् । सिंहासने [2]वामं पादमाकुञ्चितं दक्षिणं प्रसार्य हस्तं दक्षिणमभयं वामं कट्यवलम्बनपरमासीनं देवं तद्दक्षिणे पार्श्वे देवीं द्विभुजां वामेन पद्मधरां दक्षिणं कट्यां न्यस्य पादं वाममाकुञ्च्य दक्षिणं प्रसार्य देवं किञ्चिदुद्वीक्ष्य सहर्षमासीनां सीताञ्च तत्सिंहासनादधस्ताद्वामतः प्राञ्जलीकृत्य स्थितं लक्ष्मणं दक्षिणे तथा हनूमन्तमेवं निरायुधम् । भरतशत्रुघ्नाभ्यां [3]श्यामपीताभ्यां तथैव स्थितं लक्ष्मणं सिंहासनादधस्तादासीनं वेति केचित् । एवं निरायुधं राघवं देवं सत्पुत्रदयासत्यतपःश्रीकामः स्थापयेत् । रामस्यान्वाहार्ये प्रधानाग्नौ हौत्र[4]शंसनावाहनादीनि । 'रामं दाशरथिं वीरं काकुत्स्थ'मिति रामस्य 'सीतामयोनिजां लक्ष्मीं वैदेही'मिति सीतायाः 'रामानुजं सौमित्रिं लक्ष्मणं लक्ष्मिवर्धन'मिति लक्ष्मणस्य 'भरतं रामप्रियं कैकेयीसुतं सद्वृत्त'मिति भरतस्य 'शत्रुघ्नं सुमनस्कं लक्ष्मणानुजं दशरथोद्भव'मिति शत्रुघ्नस्य 'कपिराजं हनूमन्तं शङ्कराशिं महामति'मिति हनूमतः । परिवारदेवानां पूर्ववत् । पारमात्मिकेषु मन्त्रेषु 'स्वौजसा सर्व'मित्येकाधिक[5]सप्तभिर्जुहुयात् । एष विशेषः । अनुक्तं पूर्ववदिति विज्ञायते ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
जामदग्न्यरामराघवराम प्रतिष्ठाविधिर्नाम
त्र्यशीतितमोऽध्यायः ॥

## ॥ अथ चतुरशीतितमोऽध्यायः ॥

### बलरामकृष्णौ

बलात् दुराचारदैतेयवधार्थं वसुदेवाद्बलरामः, नरकाद्यसुरान् शिशुपालादिनृपान् हन्तुं कृष्णोऽप्यभवत् । तावपि सायुधौ निरायुधौ चेति द्विविधौ भवतः ।

1. क. सार्वभौकामीः त्रिवर्गकामो वा. 2. क. पादं वामं. 3. क. श्यामरक्ताभ्यां, ज. सिताभ्यां. 4. क. प्रशंसन. 5. क. एकाधिकं सप्तति.

SGDF Sri Gargeshwari Digital Foundation

दशतालमानेन बलरामं शङ्खाभं नीलाम्बरधरं द्विभुजं दक्षिणेन मुसलधरं वामेन हलधरमेवं सर्वाभरणभूषितं बलभद्रं सायुधमेकबेरविधिना महाबलकामः सोमच्छन्दे हस्तिपृष्ठे वा विमाने स्थापयेत् । तथा सिंहासने राघवरामवदासीनं बलभद्रं सीतावदासीनां रेवतीमञ्जनाभां, अथवा तत्सिंहासनस्यार्धे सह समासीनं कृष्णं वा कारयेत् । एवं निरायुधं बलभद्रं कामभोगशुभार्थी स्थापयेत् । एतस्याहवनीये प्रधानाग्नौ हौत्रशंसनादीनि । 'बलरामं वीरं यदुवरं हलायुध' मिति बलरामस्य, 'रेवतीमिन्दिरां लक्ष्मीं रामप्रिया' मिति रेवत्याश्चावाहनादीनि । पारमात्मिकेषु 'रायामीश' [1]इत्येकविंशतिमावर्त्य जुहुयात् । अन्यानि पूर्ववदिति । नवतालमानेन कृष्णं श्यामलाङ्गं[2] पीतवाससं द्विभुजं दक्षिणेन क्रीडायष्टिधरं वामेनोत्क्रीडनकरं त्रिभङ्गस्थितं कुन्तलमकुटं सर्वाभरणभूषितं दक्षिणे सीतावत् स्थितां रुक्मिणीं कृष्णाभां वामे सत्यभामां पीताभां दक्षिणेन हस्तेन पद्मधरां प्रसारितवामहस्ताञ्च कारयेत् । अथवा वामपार्श्वे देवहस्ताधारदक्षिण-स्कन्धं द्विभुजं प्राञ्जलीकृतं गरुडं कारयेत् । एवं सायुधं कृष्णमैश्वर्यभोगार्थी गणिकाविहारे कुम्भाकारे गोपुराकारे विमाने वा स्थापयेत् । तथा सिंहासने राघवरामवदासीनं कृष्णं दक्षिणे सीतावदासीनां रुक्मिणीं वामे दक्षिणपादमा-कुञ्च्य वामं प्रसार्य तथाऽऽसीनां सत्यभामाञ्च कारयेत् । एवं निरायुधं कृष्णं महाभोगसुखप्रीतिकामः स्थापयेत् । यद्यद्रूपेण देवो यद्यत्कर्म कृतवान् तत्तद्रूपं [3]यथाभक्ति कारयेत् । पीठे पादेन वामेन कुञ्चितेन स्थित्वा समाकुञ्चितं दक्षिणमुद्धृत्य हस्तं दक्षिणं नवनीतयुतमभयदं[4] वा [5]अन्यमुत्तानं प्रसारितं कृत्वा बहुग्रन्थियुताम्बराधारयुतमम्बरहीनं नवनीतनटं देवमथवा सप्तभिः पञ्चभिर्वा फणैर्युक्तस्य कालीयनागस्य फणोपरि पूर्ववत् नृत्यन्तं प्रसारितवामहस्तेन गृहीतकालीयनागपुच्छमेवं कालीयमर्दनं कारयेत् । कृष्णरूपाण्यनेकानि तेषु यथेष्टरूपं कारयित्वा स्थापयेत् । एतस्य पौण्डरीकाग्नौ[6] हौत्रप्रशंसनादीनि । 'कृष्णं पुण्यं नारायणं वटपत्रशायिनं त्रिदशाधिप' मिति[7] कृष्णस्य 'रुक्मिणीं

1. म. एकविंशतिः. 2. क. श्यामलाभं. 3. B. यथाशक्ति. 4. म. अभयं. 5. म. उत्तानप्रसारितं. 6. अग्निकुण्डे. 7. A. त्रिदशाधिपतिं.



SGDF Sri Gargeshwari Digital Foundation

सुन्दरीं देवीं पद्मा' मिति रुक्मिण्याः 'शतरूपां सतीं [1]सन्नतिं क्षमा' मिति सत्यभामायाश्च, अन्यपरिवारदेवानामावाहनादीनि पूर्ववत् । पारमात्मिकेषु मन्त्रेषु 'यं त्वां सर्वं पालना' येत्येतेनैवाष्टाधिकशतमावर्त्य जुहुयादिति विशेषः ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
बलरामकृष्णप्रतिष्ठाविधिर्नाम
चतुरशीतितमोऽध्यायः ॥

---

## ॥ अथ पञ्चाशीतितमोऽध्यायः ॥

### कल्की

युगान्ते सर्वदुष्टसंहारार्थं[2] कल्की च भविष्यति । तस्य नैव भेदः । पूर्ववदेव रूपं[3] कारयित्वा स्थापयेत् । तस्यापि पौण्डरीकाग्नौ हौत्रशंसनादीनि । 'कल्किनं [4]कामरूपं सर्वेशं सर्वसंहार' मिति कल्किनश्चाऽऽवाहनादीनि । पारमात्मिकमन्त्रेषु 'घूर्णो वहन्ता' मित्येकविंशतिकृत्वो जुहुयात् । एवमवमाननाशार्थी कल्किनं मयूराकारे कूर्माकारे भूताकारे वा विमाने प्रतिष्ठाप्यार्चयेत् ।

अथवा देवेशस्य विष्णोः पार्श्वे दक्षिणतो मुखमण्डपे [5]तदावरणे [6]विनैव परिवारैः सायुधं रामं सीतालक्ष्मणाभ्यां हनूमता च सार्धं वामतः कृष्णञ्च सायुधं देवीभ्यां गरुडेन च युक्तं अन्यप्रादुर्भावरूपं वा यथेष्टमेव स्थापयेदिति ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
कल्किप्रतिष्ठाविधिर्नाम पञ्चाशीतितमोऽध्यायः ॥

---

1. ख. सन्नतीं. 2. B. संहारार्थं. 3. रूपमिति क. कोशे नास्ति. 4. कामरूपिणं. 5. क. अन्तरावरणे 6. क. विमाने परिवारैः

SGDF
Sri Gargeshwari Digital Foundation

## ॥ अथ षडशीतितमोऽध्यायः ॥

### वासुदेवः

अथ वसुदेवादुद्भूतो वासुदेवः । स मनुष्यरूपधारणात्[1] मानुषवासुदेवः, देवरूपधारणात् दैविकवासुदेवश्चेति द्विविधो भवति । मनुष्यवद्विभुजं [2]शङ्ख-चक्रधरं श्यामलाङ्गं किरीटमकुटादिसर्वाभरणभूषितं तस्य दक्षिणे पूर्ववत् रुक्मिणीं तद्दक्षिणे हलमुसलधरं तथा बलभद्रं तद्दक्षिणे प्रद्युम्नं रक्ताभं पीतकौशेय-वस्त्रं द्विभुजं दक्षिणेन क्षुरिकाधरं वामेन कट्यवलम्बनकरं तद्दक्षिणे ब्रह्माणञ्च यथोक्तं वासुदेवस्य वामेऽप्यनिरुद्धं द्विभुजं खड्गखेटकधरं पुष्पाम्बरधरं तस्य वामे नीलाभं श्वेताम्बरधरं [3]द्विभुजं दक्षिणेनोत्तानकरमन्येन दण्डधरं [4]साम्बं तस्य वामे तथा गरुडञ्च कारयित्वा तेषाञ्च पृथक् पृथक् [5]कौतुकबिम्बानि कारयेत् । अथवा ब्रह्मपदमध्ये चतुर्भुजं विष्णुमेकमेव कौतुकबिम्बं स्थापयेत् । एवं मानुषवासुदेवं दीर्घशालायां गोपुराकारे वा विमाने श्रीकीर्तिशौर्यवीर्यादिकामः[6] प्रतिष्ठाप्यार्चयेत् । वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धसाम्बाः पञ्चवीरा इति विज्ञायते ।

अथ वासुदेवं दैविकं चतुर्भुजं तथा श्रीभूमिभ्यां सहितं मध्ये, तद्दक्षिणवामयोः बलभद्राद्यांश्च देवान् सायुधान् निरायुधान्वा पूर्ववत्कारयित्वा बलभद्रदेवीं रक्ताभां रेवतीं प्रद्युम्नदेवीं नीलाभां रोहिणीमनिरुद्धदेवीं श्यामाभां रमां साम्बस्य देवीं पीताभामिन्दुकरीञ्च पद्मधरैकहस्ताः तत्तद्देवीः तत्तत्पार्श्वे च कारयेत । एवं दैविकवासुदेवं स्वदारपुत्रपौत्रभ्रातृपूर्वस्वकुलवर्धनायुरारोग्यैश्वर्य-सुखभोगश्रीकीर्त्यादिकामः सोमच्छन्दे बृहद्वृत्ते वा विमाने प्रतिष्ठाप्यार्चयेत् । द्विविधवासुदेवस्यापि सभ्याग्नौ हौत्रशंसनादीनि कुर्यात् । 'वासुदेवं यदुवरं [7]भूमिहितं पुरुषोत्तम'मिति मानुषवासुदेवस्य । रुक्मिण्याः पूर्ववत् । [8]पूर्व-वद्विष्ण्वादिपञ्चमूर्तिनामभिरेव दैविकवासुदेवस्य तथा देव्योः श्रीभूम्योश्च ।

---

1. म. धरणाच. 2. ख. चक्रधरं. 3. क. द्विहस्तं दक्षिणेनैकेनोद्धृतदण्डधरं. 4. साम्बशब्दस्थाने सर्वत्र साम्बवमिति क. कोशेषु पाठः 5. क. कौतुकबिम्बादीनि कारयेत्. 6. क. मतिवीर्यशौर्यादि. 7. म. भूमिसहितं. 8. म. पूर्ववदिति नास्ति.

SGDF Sri Gangeshwari Digital Foundation

बलभद्रस्य रेवत्याश्च पूर्ववत् । 'प्रद्युम्नं [1]सुरूपाक्षं [2]मदनांशं महाबल'मिति प्रद्युम्नस्य । 'रोहिणीमिन्दुमुखीं प्रद्युम्नप्रियां पद्मा'मिति रोहिण्याः । ब्रह्मानिरुद्धयोश्च पूर्ववदेव । [3]'रमामनिरुद्धप्रियां [4]सुरूपाममृतोद्भवा'मिति रमायाः । 'साम्बं [5]सर्वसुखं समृद्धं [6]सामग'मिति साम्बस्य । 'वराङ्गीमिन्दुकरीं साम्बप्रियां पुण्या'मितीन्दुकरीदेव्याः । गरुडस्यान्यपरिदेवानाञ्च पूर्ववदावाहनादीनि । सभ्याग्नौ महाप्रतिष्ठोक्तवत् सर्वं होमं जुहुयात् । आहवनीये पुरुषसूक्तमन्वाहार्ये विष्णुसूक्तं गार्हपत्यावसथ्ययोः विष्णुगायत्रीमेकविंशतिकृत्वो हुत्वा तथौपासने ब्रह्मणो ब्राह्मं गरुडस्य गारुडञ्चैकविंशतिकृत्वः [7]तत्तद्धामे तत्तन्मन्त्रैः जुहुयात् । स्नपनकुम्भपूजनशयनानि च पृथगेव कुर्यादेष विशेषः । अन्यानि सर्वाणि पूर्ववदेवेति कश्यपः ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे उभयवासुदेवप्रतिष्ठाविधिर्नाम षडशीतितमोऽध्यायः ।

---

## ॥ अथ सप्ताशीतितमोऽध्यायः ॥

### महास्नपनम्–तत्र निमित्तम्

अथ [8]स्नपनं व्याख्यास्यामः । [9]प्रतिष्ठान्तोत्सवान्तविषुवायनेषु सूर्यस्य चन्द्रस्य वा [10]राहुग्रहणे च यत्नतो देवेशं संस्नापयेत् । विभवे सति श्रवणद्वादशीमासनक्षत्रादौ अन्यसंक्रमणेषु च दुर्निमित्तदुःस्वप्नावग्रहदुर्भिक्षव्याध्यादिसर्वोपद्रवशान्त्यर्थं च राज्ञो यजमानस्य वा जन्मनक्षत्रेऽपि [11] देवस्य स्नपनं कारयेत् ।

### स्नपनसम्भाराः–प्राग्द्रव्याणि

यथोक्तमङ्कुरानर्पयित्वा स्नपनद्रव्याणि सम्भरति । नदीसस्यक्षेत्रतटाकदर्भमूल [12]गजदन्तोद्धृत [13]गोशृङ्गोद्धृतकुलीरवासवल्मीकेषु शुद्धां मृदं गृह्णाति ।

---

1. क. स्वरूपाक्षं 2. ग. अदर्शनांशं. 3. A. परमां. 4. म. स्वरूपां. 5. क. सर्वमुखं. 6. म. सोमगं. 7. क. तत्तद्धोमे तत्तद्देवोनाश्च. 8. ख. स्नपनविधिं 9. क. प्रतिष्ठान्त उत्सवान्ते 10. म. राहोः 11. म. जन्मर्क्षेऽपि. 12. क. गजशृङ्गोद्धृत. 13. B. गोशृङ्गोत्करतः.

SGDF
Sri Gargeshwari Digital Foundation

हिमवदूर्ज.विन्ध्यविदूरवेदपर्वतमहेन्द्र [1]हरिश्चन्द्रशतशृङ्गाख्यानिमान् अष्टकुल-पर्वतान् प्रागादिचतुर्दिक्षु क्रमेण श्वेतपीतरक्तकृष्णवर्णयुतान् अष्टाङ्गुलोच्छ्रयान् मूले [2]षडङ्गुलायतविस्तारान् अग्रे त्र्यङ्गुलविस्तृतान् चतुरश्रांश्च कारयति। शालिव्रीहियवमुद्गमाषप्रियङ्गुगोधूमचणकतिलतिल्वमसूरसर्षपाणि धान्यान्याहरेत्। अङ्कुरार्पणोक्तधान्यानामङ्कुरांश्च। रुक्माभं श्रीवत्सं रक्ताभं सोदकं कुम्भं [3]रक्ताभां भेरीं श्वेताभमादर्शं रक्तनेत्रं कृष्णपक्षयुतमूर्ध्वाननं [4]श्वेताभं मत्स्ययुग्मं कृष्णघृणीयुक्तं रक्ताभमङ्कुशं शङ्खाभं शङ्खं रक्ताभमावर्तं, एतान् सप्ताङ्गुलोच्छ्रयपीठयुतान्, अष्टमङ्गलान् तथा पर्वतांश्च कारयेत्। तथैव पर्वतानामपि पीठं कुर्यादिति केचित्।

### प्रधानद्रव्याणि

पञ्चगव्यघृतमधुदधिक्षीरगन्धोदकाक्षतोदकफलोदककुशोदकरत्नोदकजप्यो-दकसर्वौषध्युदकानि इति द्वादशैतानि पृथक् पृथक् आढकादहीनं गृह्णीयात्।

### अनुद्रव्याणि

बिल्वपत्रकरवीरनन्द्यावर्तपद्मकुमुदानि पुण्यपुष्पाणि। जातीफलकर्पूर-श्रीवेष्टकोशीरमसूरदमनकमुद्गचणकानां चूर्णं [5][अश्वत्थवटमधूकखदिरवञ्जुलास-नानां त्वक्चूर्णं काषायं — नदीतटाककूपपल्वलेषु तीर्थोदकानि — सिंहीनकुल-व्याघ्रनन्दादित्यसहपाठासहदेवीदूर्वा वनौषधीः — हरिद्रायाः सुवर्णाभं चूर्णम्] षड्भागतण्डुलचूर्णयुक्तं हरिद्राचूर्णमित्येके। हरेणुस्थौणेयकपत्रव्याघ्रनखागुरु[6] चूर्णश्यामाकचेरुवालमांसीजातीफलैलालवङ्गचन्दनकर्पूरोशीर[7]स्थिरनारदसावन कुस्तु-म्बरुप्रभृति सर्वगन्धद्रव्याणां प्राण्यङ्गपुरीषवर्जितानां[8] चूर्णं — कार्पासकृतं श्वेतं प्रोतवस्त्रं पलाशदूर्वापामार्ग[9]भूर्जकनन्द्यावर्तकरवीरकुशपत्रानिमान् मूलगन्धान् — वस्त्रोत्तरीयाभरणयज्ञोपवीतानि जातिहिङ्गुलिकमनश्शिलाञ्जनगोरोचनान् धातूंश्च समाहरेत्।

---

1. ख. पुरश्चन्द्र. 2. क. षडङ्गुलायतान्. 3. रक्तां. 4. B. श्वेताननं.
5. म. [चिह्नितो] भागः पुस्तके नोपलभ्यते. 6. अत्र क. कोशे किञ्चित् त्रुटितम्.
7. क. स्थिरदनारदपारद, 8. A. वर्जं सञ्चितानां. 9. क. ख. भूपक.

SGDF Sri Gargeshwari Digital Foundation

### कलशादि पात्राणि

आढकपूर्णान् कलशान् प्रस्थपूर्णान् शरावान् द्रोणार्धपूर्णान् करकान् द्रोणपूर्णान् घटान् चतुर्द्रोणपूर्णामुदधानीमन्यानि च भाण्डानि खण्डस्फुटितकालरहितानि समाहरेत्। [1]वेदिपरिस्तरणार्थान् पञ्चदशदर्भैः कलशार्थान् सप्तभिः पञ्चभिर्वा कूर्चान् कुर्यात्।

पूर्वरात्रौ देवेशं विशेषतोऽभ्यर्च्य हविर्निवेद्य आलयाद्दक्षिणे प्रथमावरणे पूर्ववत्पञ्चशयनानि वासांसि वा आस्तीर्य प्रतिसरं बद्ध्वा [2]तथैव शाययेत्।

### स्नपनालयः

अथ देवालयस्याभिमुखे शयनमण्डपमुत्तरस्यामैशान्यां वा सप्तभिः द्वादशभिः षोडशभिः चतुर्विंशतिभिर्वा हस्तैः विस्तृतायतं चतुर्भिः द्वादशाभिः षोडशभिर्वा [3]स्तम्भैश्च सहितमशक्तः, शक्तश्चेदधिकैर्वा मण्डपं प्रपां वा कुर्यात। तत्र चतुर्द्वारेषु [4]तोरणपूर्णकुम्भपताकाभिरन्तरे वितानध्वजदर्भमालास्तम्भवेष्टनाद्यैः यथाशक्त्यलङ्कृत्य तन्मध्ये श्वभ्रं चतुरश्रं परितश्चौपासनवत् द्विवेदिसहितं कृत्वा मध्ये तालमात्रनिम्नयुतं उत्तरतो जलनिर्याणमार्गयुतं श्वभ्रं कुर्यात्। [5]तत्प्रमाणाधिकं बेरपीठे तत्परितश्चतुरङ्गुलायतविस्तारयुतं श्वभ्रं कर्तव्यम्। तन्मध्ये वैल्वफलकां न्यसेत्। [6]वेदिं कदलीपद्मकुमुदोत्पलादिपत्रैराच्छाद्य परिस्तरणकूर्चान् न्यसेत्।

तच्छ्वभ्रस्य परितः तण्डुलैः व्रीहिभिर्वा द्वितालविस्तारादहीनां भागोन्नतां कीलकोन्नतां वा चतुर्दिशं द्वितालविस्तारद्वारयुतां पङ्क्तिं कृत्वा तत्र इन्द्रादि-[7]दिग्देवानां तत्तत्स्थाने, पङ्क्तीशस्य नैर्ऋतवारुणयोर्मध्ये, विष्वक्सेनस्य सोमेशानयोर्मध्ये, द्वादशाङ्गुलविस्तृतानि षडङ्गुलोन्नतानि पीठानि कुर्यात्। तत्पङ्क्तिं गायत्र्या प्रोक्ष्य 'सुमित्रा न' इति स्थलमुल्लिख्य 'हिरण्यपाणि' मिति दर्भानास्तरेत। 'धारा' स्वित्युदकं गृहीत्वा वस्त्रेणोत्पवनं कुर्यात्। रात्रौ चेदग्निसन्निधावेवोदकं ग्राह्यम्।

---

1. B. द्विवेदि. 2. क. तथैवेति नास्ति. 3. A. स्तम्भैर्युक्तं. 4. क. कदलीपूर्णकुम्भ. 5. क. तत्राधिके. 6. क. तद्वेदिं. 7. म. देवानां.

SGDF
Sri Gargeshwari Digital Foundation

कलशानाहृत्य यवान्तरमङ्गुल्यन्तरं वा तन्तुना परिवेष्ट्य अद्भिः प्रक्षाल्य यथोक्तैः पञ्चगव्यादिद्रव्यैः कलशान् सम्पूर्य तान् पिधानाद्यैरपिदधाति । [1]तत्पङ्क्त्यां यथोक्ते स्थाने मृदादिद्रव्याणि सन्न्यसेत् ।

द्रव्यन्यासप्रकारः

नादेयाद्यष्टौ मृदः शरावेषु पृथक् चेत् पृथक् गृहीत्वा [2]'उदुत्यं चित्र' मितीशानेन्द्रयोर्मध्ये सुमन्न्यस्य [3]द्वारेषु वामपार्श्वे कोणेषु च 'इदं विष्णु' रिति हिमवत्पूर्वान्, यमाग्न्योर्मध्ये 'सोम ओषधीना'मित्यङ्कुरान्, ऐन्द्राद्यैशानान्तं द्वारदक्षिणपार्श्वेषु कोणेषु च श्रीवत्सादीन् मङ्गलांश्च तत्तत् स्थाने तथैव [4]'इन्द्राविष्णू' इति द्वादश प्रधानान् कलशान्, ऐशान्ये पञ्चगव्यमीशानेन्द्रयोर्मध्ये घृतमग्नीन्द्रयोर्मध्ये मधु पावके दधि यमाग्न्योर्मध्ये क्षीरं यमनैर्ऋतयोर्मध्ये गन्धोदकं नैर्ऋत्यामक्षतोदकं निर्ऋतिवरुणयोर्मध्ये फलोदकं वरुणवाय्वोरन्तरे कुशोदकं वायव्ये रत्नोदकं वायुसोमयोर्मध्ये जप्योदकं सोमेशानयोर्मध्ये सर्वौषध्युदकं, तेषां वामपार्श्वे 'स्वादिष्ठ' येति तत्तदुपस्नानार्थकलशान् 'इमास्सुमनस' इति यमनालयोर्मध्ये बिल्वपत्रादिपुण्यपुष्पाणि, वारुणनैर्ऋतयोर्मध्ये [5]'वन्ध्या न एष' इति जातीफलादिचूर्णं वरुणोदानयोर्मध्ये 'ये ते शत' मित्यश्वत्थादिकषायचूर्णं 'वारीश्चतस्र' इति नादेयादि तीर्थतोयं [6]सोमोदानयोर्मध्ये 'रुद्रमन्य' मिति सिंह्यादिवनौषधीः नीलपंक्तीशयोर्मध्ये 'सिनीवा'लीति हारिद्रचूर्णं 'इमे गन्धा' इतीशानसोमयोर्मध्ये हरेणुपूर्वं सर्वगन्धं [7]'नारायणाय विद्महे' इत्यैशान्ये प्लोतवस्त्रोत्तरीयाभरणयज्ञोपवीतानि पलाशादिमूलगन्धान् जातिहिङ्गुलिकादिधातूंश्च सन्न्यसेत्। प्रणवपूर्वया गायत्र्यैव मृदादिसर्वद्रव्याणां न्यास केचित् कुर्वन्ति । [8]सर्वाण्येतानि नवैः वस्त्रैः प्रच्छाद्य श्वभ्रस्य द्वितीयवेद्यां प्रागाद्यैशानान्तं जयाद्यप्सरसोऽर्चयेत् ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे

स्नपनसम्भाराहरणं नाम सप्ताशीतितमोऽध्यायः ॥

1. A-B. पङ्क्त्यां यथोक्तस्थाने. 2. अत्र सर्वेषु A. कोशेषु अव्यक्ताक्षरोऽनिर्देश्यः. 3. क. द्वारवामेषु. 4. क. इदं विष्णुरिति. 5. वन्ध्यो न एष इति भाष्यपाठः 6. म. सोमेशानयोर्मध्ये. 7. क. तत्पुरुषायेत्यैशान्ये. 8. पूर्वं तत्र इति क. कोशेषु सर्वाण्येतानि इति म. कोशे च अधिकोऽशस्तत्रादौ परिदृश्यते.

SGDF Sri Gangadharan Digital Foundation

## ॥ अथ अष्टाशीतितमोऽध्यायः ॥

### जयाद्यावाहनम्

'जयां [1]सुखप्रदां समृद्धिनीं [2]भद्रजा'मिति जयां, 'विजयां विशोकां पुण्यां [3]कामनन्दा'मिति विजयां, 'विन्दां लाभां प्रमत्तामजेया'मिति विन्दां, 'पुष्टिकाममोघवर्ती[4] पुण्यां प्रमत्ता'मिति पुष्टिकां 'नन्दकां मधुजननीं सुयुक्तां सुभगा'मिति नन्दकां, 'कुमुद्वतीं [5]सुवहां सुसम्भरां [6]निर्वृति'मिति कुमुद्वतीं, 'उत्पलकां सुगन्धिनीं सर्वमोदां सर्वात्मिका'मित्युत्पलकां, 'विशोकां धनराशिमक्षताममिता[7]'मिति विशोकाञ्च क्रमेणाष्टावप्सरसः वेद्यां, पङ्क्तौ 'पङ्क्तीशं मित्रं वरदं भूतनायक'मिति पङ्क्तीशं, विष्वक्सेनमिन्द्रादिदिग्देवताश्च तत्तत् स्थाने पूर्वोक्तैर्मूर्तिमन्त्रैरभ्यर्च्य देवेशं [8]शयनादादाय श्वभ्रे प्रतिष्ठाप्य मृदादिद्रव्येषु तत्तत् द्रव्यधरान तदधिदेवांश्च [9]चतुर्भिर्मूर्तिमन्त्रैरर्चयेत् ।

मृत्स्वष्टासु तद्दैवतं हरिणीं पर्वतेष्वग्निं धान्येषु वायुञ्च पूर्वोक्तैर्मूर्तिमन्त्रैः, अङ्कुरेषु 'तार्क्ष्यं पक्षिरूपं सुपर्णमङ्कुराधिप'मिति तार्क्ष्यं, [10]अष्टमङ्गलेष्विन्द्रं पूर्ववत् । पञ्चगव्ये 'शिवमीशमव्यक्तं पञ्चगव्य'मिति शिवमेतस्योपस्नाने 'विश्वान् देवान् सर्वान्देवान् [11]विश्वपुत्रान धर्मसूनुका'निति [12]विश्वेदेवान्, घृते 'घृतं सामवेदं वज्रं यज्ञ'मिति सामवेदं, तदुपस्नाने 'वत्सरान् वसुसुतान् निधीन् धर्मसूनुका'मिति वत्सरान्, मधुनि 'मधु ऋचं साम क्रतु'मिति ऋग्वेदं उपस्नाने 'प्राणमपानं व्यानमुदानं समान'मिति प्राणं, दध्नि 'यजुः दधि मिश्रमिष्टि'मिति यजुर्वेदं, उपस्नाने 'रुद्रानेकादशाधिपान् [13]हरान् कपर्दिन'इति रुद्रान्, क्षीरे अथर्वाणं पवित्रं क्षीरं पुण्य'मित्यथर्ववेदं, उपस्नाने 'अश्विनौ मरुतौ युग्मौ त्वाष्ट्रीपुत्रा'वित्यश्विनौ, गन्धोदके 'ऋतून् सहराशीन् गन्धान् तीर्था'निति षड्ऋतून्, उपस्नाने 'मरुतो लोकधरान् सप्तसप्तगणान् मरुद्वतीसुता'

---

1. म. सुखप्रजां. 2. भद्रां 3. म. आनन्दां 4. म. मोघवर्ती. 5. म. सुसहां 6. क. निभृतिं. 7. क. अर्थमितां 8. क.शनैरादाय. 9. क. मूर्तिमन्त्रैरर्चयेत् 10. क. मङ्गलेषु. 11. विश्वपुण्यान्. 12. म. विश्वान् देवान्. 13. क. भवान्.

SGDF Sri Gargeshwari Digital Foundation

निति मरुतः, अक्षतोदके 'काश्यपं विश्वमूर्तिं [1]अक्षतमनन्त' मिति काश्यपं उपस्थाने पीतवर्णं पूर्ववत्, फलोदके 'सोमं फलोदकं पुण्यममित' मिति सोमं उपस्थाने 'नागराजं सहस्रशीर्षमनन्त वासुकि' मिति वासुकिं, कुशोदके 'मुनीन् तपोधिपान् कुशान् [2]पापविनाशना' निति मुनीन्, उपस्थाने 'तक्षकं सर्पराजं क्षितिजं [3]धराधर' मिति तक्षकं, रत्नोदके 'विष्णुं [4]सर्वव्यापिनं [5]रत्नं विश्व' मिति विष्णुं, उपस्थाने 'गन्धर्वान् रम्यान् स्वरजान् सोमजा' निति गन्धर्वान, जप्योदके 'पवित्रं मन्त्रं जप्य क्षुद्र' मिति सर्वमन्त्रं, उपस्थाने 'विद्याधरान् मन्त्रबलान् पुष्पजान् भोगजा' निति विद्याधरान्, सर्वौषध्युदके 'आदित्यमण्डजं सूर्यं सर्वौषध' मित्यादित्यं, उपस्थाने 'अप्सरसः [6]मुदावहाः भोगवहाः [7]स्वरजा' इत्यप्सरसः, पुण्यपुष्पेषु धातारं चूर्णेषु चक्रं, कषायेषु वरुणं, तीर्थोदकेषु सुब्रह्मण्यश्च पूर्ववदेव, ओषधीषु 'शतरुद्रान् ओषधीशान् त्र्यम्बकान् [8]कपालिन' इति रुद्रान्, हारिद्रचूर्णे 'सिनीवालीं सुपाणिं पृथुष्टुकां [9]देवेशानी' मिति सिनीवालीं, गन्धद्रव्येषु 'इन्द्रं भोगं गन्धं शतक्रतु' मितीन्द्रं, स्रोते 'त्वष्टारं रूपजातं निधिजं स्रोताधिप' मिति त्वष्टारं, मूलगन्धे ब्रह्माणं, धातुषु [10]दुर्गाञ्च, पूर्वोक्तमूर्तिमन्त्रैरेव तत्तद्द्रव्येषु तत्तदधिदेवं त्रयोदशविग्रहैरर्चयति। उत्तममध्यमत्रिकेषु श्वभ्रस्य पूर्वे पश्चिमेऽप्यौपासनाग्निं साधयित्वा पौरुषं दौर्गं वैष्णवं तत्तद्द्रव्याधिपमूर्तीर्हुत्वा देवस्य स्नपनमारभेत।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे

स्नपननिमित्तादिकथनं नाम

अष्टाशीतितमोऽध्यायः।

---

1. क. अक्षतं तक्षकं. 2. छ. पापविनाशान्. 3. छ. धरं ख. धरणिनं 4. क. व्यापिनं. 5. ख. रक्तं. 6. मुदावहा इति स्थाने B. कोशेषु अमृतजा इति क. कोशेषु मुदजा इति च दृश्यते. 7. ख. सुरजान् छ. सामजान् B. सस्यजान्. 8. म. कपालपान् क. कपिलान्. 9. म. देवनाभिं. 10. म. रौद्रीं.



SGDF
Sri Gurgeshwari Digital Foundation

## ॥ अथ एकोननवतितमोऽध्यायः ॥

### स्नपनप्रकारः

अथातः स्नपनं भवति । यजमानो वस्त्रकुण्डलाद्याभरणैः सशिष्यमाचार्यमलङ्कृत्य पूजयेत् । सर्वे 'दधि क्रावृण्ण' इति दधिप्राशनं कृत्वा अप आचम्य सोष्णीषोत्तरीयाभरणा भवेयुः । आचार्यो भगवन्तं [1]पूर्ववत् त्रयोदशविग्रहैः पश्चादष्टविग्रहैरर्चयति । श्वभ्रस्य वामे अर्चनार्थं पुष्पादीन् [2]संभृत्य द्रव्यप्रोक्षणार्थमद्भिः पूर्णं सकूर्चं करकं निधाय तज्जलेन तत्तद्द्रव्याणि प्रणवेन प्रोक्ष्य आदाय ललाटान्तमुद्धृत्य तद्द्रव्येण देवं त्रिः सकृद्वा प्रदक्षिणं कारयित्वा तत्तन्मन्त्रान्ते च तत्तद्द्रव्यनाम योजयित्वा विष्ण्वादिपञ्चमूर्तिमन्त्रैः स्नापयेत् । पुनः सकृत् प्रदक्षिणं कारयित्वा तद्द्रव्यपात्रं पूर्वस्थाने न्यसेत् । द्रव्यं प्रति निर्माल्यमपोह्याभ्यर्च्य घण्टां ताडयित्वा 'एकाक्षर'मिति मृदा स्नापयेत् । 'विश्वे निमग्न' इति पर्वतेन प्रदक्षिणं कारयित्वा 'प्राणप्रसूति'रिति [3]धान्यैः स्नापयेत् । 'वितत्य बाण'मित्यङ्कुरैरभ्यर्च्य 'त्वं वज्रभृ'दिति मङ्गलैश्च प्रदक्षिणं कारयेत् ।

'वसोः पवित्र'मिति [4]पञ्चगव्येन स्नापयित्वा, 'वारीश्चतस्र' इत्युपस्नानेन, 'अग्न आया'हीति घृतेन, 'अग्निमील' इति मधुना, 'इषे त्वोर्जे' त्वेति दध्ना, 'शन्नो देवी'रिति क्षीरेण, 'अभित्वा शूर' इति गन्धोदकेन, 'इमा ओषधय' इत्यक्षतोदकेन, 'जपन् दत्वा नुम'दिति फलोदकेन, 'चत्वारि वा'गिति कुशोदकेन, [5]'नारायणा'येति रत्नोदकेन, 'पूतस्त'स्येति जप्योदकेन, 'चत्वारि शृङ्गा' इति सर्वौषध्युदकेन, च संस्नाप्य 'धाता विधा'तेति पुण्यपुष्पैरर्चयेत् ।

'ऋचो यजूं'षीति चूर्णैः संस्नाप्य, 'स एष देव' इति कषायेनोद्वर्तयेत् । 'स सर्ववे'त्तेति तीर्थोदकैः संस्नाप्य 'सामैश्च साङ्ग'मिति वनौषधिभिः सम्मार्जयेत् । 'अतो देवा' इति हरिद्राचूर्णेन स्नापयेत् । 'त्वं स्त्री'ति सर्वगन्धेन 'आपो हि ष्ठा' इत्युष्णोदकेन संस्नाप्य शुद्धोदकैः संस्नापयेत् ।

---

1. क. पूर्वं. 2. B. संगृह्य. 3. म. धान्येन. 4. म. पञ्चगव्यैः स्नापयित्वा.
5. क. तत्पुरुषायेति रत्नोदकेन.

SGDF
Sri Gargeshwari Digital Foundation

'मित्रः सुपर्ण' इति प्लोतेन विमृज्य पूर्ववद्वस्त्राद्यैरलङ्कृत्य 'त्वं भूर्भुव' इति मूलगन्धैः संस्पृश्य 'बुद्धिमता' मिति धातुभिरलङ्कृत्य पूर्ववत्पाद्यादिभिरभ्यर्च्य कनिक्रदादिना आलयं प्रदक्षिणीकृत्य [1] अर्चास्थाने वा संस्थाप्याभ्यर्च्य [2] पायसादिभिः प्रभूतं महाहविर्वा यथाशक्ति [3] निवेदयेत् ।

ध्रुवार्चनायां मण्डपे प्रपायां वा मृदादि द्रव्याणि सन्न्यस्यादाय अभ्यन्तरं प्रविश्य तत्रैव [4] देवेशं स्नापयेत् । अथवा औत्सवं बिम्बं तत्पार्श्वे प्रतिष्ठाप्य तत्रैव स्नपनोत्सवादीन् कुर्यात् । ध्रुवार्चायामुत्सवं न कुर्यादित्यन्ये वदन्ति ।

देवेशस्य स्नपनेनावग्रहदुर्भिक्षव्याध्याधिनाशाद्यशुभानि सर्वोपद्रवाश्च नश्यन्ति । तस्माद्भक्त्यैव कुर्यात् ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
महास्नानक्रमो नाम एकोननवतितमोऽध्यायः ॥

---

## ॥ अथ नवतितमोऽध्यायः ॥

### स्नपनभेदाः–द्रव्यलक्षणप्रमाणादिः

अथ स्नपनं नवविधम् । मृत्पर्वतधान्याङ्कुराष्टमङ्गलानीति पञ्च प्राक् द्रव्याणि । षोडशांशं कृत्वा तदेकांशं घृतं द्व्यंशं दधि त्र्यंशं क्षीरं [5] चतुरंशं गोमयं षडंशं गोमूत्रमेवमेतैः पञ्चभिः गव्यैर्युक्तं पञ्चगव्यम् । शुद्धं नवनीतं सद्यः समपक्वं सुवर्णाभं घृतं श्रेष्ठं, अनतीतपञ्चदशाहं वा । [6] पुष्पद्रावणकं फलद्रावणकं वा मधु, तदलाभे नालिकेराम्भो ग्राह्यम् । माक्षिकं वेति केचित् । न शुक्तं दधि । सद्यो दुग्धं क्षीरम् । चन्दनकोष्ठुशीरैलालवङ्गादिगन्धैः [7] मिश्रं गन्धोदकम् । यवसर्षपमाषैर्युक्तं [8] व्रीहिभिस्तण्डुलैर्वा युक्तं अक्षतोदकम् । कदलीचूतपनसनालिकेरनारङ्गमातुलुङ्गो[9]त्तममौञ्जकामरभव्यकुन्दादीनां फलैः यथालाभैर्युक्तं

1. ख. आस्थाने वा. 2. छ. पायसाद्यं 3. A. हविर्निवेदयेत्. 4. क. देवदेवं. 5. A. चतुर्थांशं. 6. म. पुष्पद्राविणकं फलद्राविणकं वा. 7. क. मिश्रितं 8. म. माषैर्युक्तो व्रीहिस्तण्डुलो वा अक्षतं. 9. क. उत्तमकुञ्चिकामरकुरुन्दादीनां (?)

SGDF Sri Gargeshwari Digital Foundation

फलोदकम् । कुशैः सहितं कुशोदकम् । पद्मरागपुष्यकान्तवज्रवैदूर्यमौक्तिक-प्रवालमरतक[1]गोमेदेन्द्रनीलानीति नवैतानि रत्नानि । पूर्वाणि पञ्चरत्नानि । नवभिः पञ्चभिर्वा रत्नैर्युक्तं रत्नोदकम् । दर्भैः जलं स्पृष्ट्वा आपो हिष्ठामयादीन् [2]मन्त्रानावर्त्य अष्टोत्तरशतं जप्त्वा अभिमन्त्रितं जप्योदकम् । ओषध्यः फल-पाकान्ताः प्रियङ्गुसर्षपमुद्गाद्याः, ताभिः सर्वाभिः मिश्रितं सर्वौषध्युदकम् । इत्येतानि प्रधानद्रव्याणि । एतैः प्रधानद्रव्यैः सम्पूर्णाः कलशाः प्रधानाः । तत्प्रधानानन्तरं स्नपनार्थं शुद्धोदकपूर्णाः तथोपस्नानाः । पुण्यपुष्पजातीफलादि-चूर्णकषायचूर्णतीर्थोदकवनौषधिहारिद्रचूर्णसर्वगन्धचूर्णमूलगन्धधौतवस्त्रोत्तरीयाभरण-यज्ञोपवीतधातव इति द्वादशैतान्यनुद्रव्याणि ।

प्राग्द्रव्यैरनुद्रव्यैरपि विना द्वादशप्रधानैः द्वादशोपस्नानैः चतुर्विंशतिकलशैः स्नपनमधमाधमम् । नाद्यादिमृदोऽष्टौ सौवर्णे पृथगेकस्मिन्नेकस्मिञ्छरावे गृह्णीयात् । तथा धान्यान्यङ्कुरांश्च पूर्ववत् । द्वादशप्रधानाः कलशाः षट्त्रिंश-दुपस्नानाः । पुण्यपुष्पाण्यपि शरावे, तथा जातीफलादिचूर्णमश्वत्थादिकषायचूर्णं शरावे गृह्णीयात् । तीर्थोदकानि चतुर्षु शङ्खेषु गोशृङ्गेषु शरावेषु वा । तथा श्रीवेष्टकादि [3]चूर्णानि शरावेषु पृथक् पृथगेव ग्राह्याणि[4] । तथैवं प्राग्द्रव्यैश्च सहितमष्टचत्वारिंशत्कलशैः स्नपनमधममध्यमम् । [एतद्विगुणानि प्राग्द्रव्याणि पञ्चगव्यादभिः द्रव्यैः पूर्णाः प्रधानाः कलशाः प्रत्येकं चत्वारश्चत्वारः तथैव तदुपस्नानाश्चेत्युत्तमम् । त्रयस्त्रयः प्रधानाः पञ्चपञ्चोपस्नाश्चेति मध्यमम् । द्वौ द्वौ प्रधानौ षट्षडुपस्नानाश्चेत्यधमम् । एकैकप्रधानाः सप्तसप्तोपस्नानाश्चेति केचि-दिच्छन्तिती] र्थोदकपूर्णाश्चत्वारः हरिद्राचूर्णार्थास्तदुपस्नानार्थाः अष्टौ कलशाः प्राग्द्रव्यैरनुद्रव्यैश्च सहितमेवं शताष्टकलशैः स्नपनमधमोत्तमं, शताष्टकाद्विगुणं मध्यमाधमं, त्रिगुणं मध्यममध्यमं, पञ्चगुणं मध्यमोत्तमं, षड्गुणमुत्तमाधमं, अष्टगुणमुत्तममध्यमं दशगुणमुत्तमोत्तमम् । सहस्रकलशैः स्नपनमुत्तमोत्तममिति भृगुः ।

---

1. क. गोमेधिक. 2. ख. त्रीन् मन्त्रान्. 3. क. चूर्णाद्यानि. 4. क. सर्व-गन्धचूर्णं शरावे गृह्णीयात्.

SGDF
Sri Gargeshwari Digital Foundation

कलशानां न्यासो यावत्तावद्विस्तारायतां पङ्क्तिं तथैव परितः कुर्यात् । शताष्टकद्वयाधिके द्वे तिस्रो वा पङ्क्तीः[1] तथैव परितः कुर्यादित्येके । तत्तत्पङ्क्तौ पूर्ववद्यथोक्तस्थाने सन्न्यस्य मृदादिद्रव्याणि तत्क्रमेणाऽदाय तत्तन्मन्त्रैः स्नापयेत् ॥

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
नवविधस्नपननिर्णयो नाम नवतितमोऽध्यायः ॥

---

## ॥ अथ एकनवतितमोऽध्यायः ॥

—: ❀ :—

### त्रिविधः उत्सवः

अथोत्सवं व्याख्यास्यामः । कालोत्सवः श्रद्धोत्सवो निमित्तोत्सव इति स त्रिविधो भवति । प्रतिसंवत्सरं [2]तत्तन्मासे तत्तद्दिने [3]नित्यं संकल्पनेन यः क्रियते स कालोत्सवः । श्रद्धायामुत्पन्नायां यथेष्टमासे यः क्रियते सोऽयं श्रद्धोत्सवः । अवग्रहदुर्भिक्षाद्यशुभशान्त्यर्थं कृतो निमित्तोत्सवः । तेषु कालोत्सवो मुख्यः । तस्मादयनविषुवश्रवणपर्वद्वादशीमासर्क्षप्रतिष्ठादिनयजमानजन्मर्क्षाणामेकस्मिन् राज्ञो जन्मर्क्षे वा अवभृथं सङ्कल्प्योत्सवमारभेत ।

त्रिंशद्दिनमुत्तमोत्तमं पञ्चविंशतिदिनमुत्तममध्यममेकविंशतिदिनमुत्तमाधमं [4]पञ्चदशाहं मध्यमोत्तमं[5] द्वादशाहं मध्यममध्यमं नवाहं मध्यमाधमं सप्ताहमधमोत्तमं पञ्चाहमधममध्यमं त्र्यहमेकाहं वा अधमाधममिति नवधा भवति ।

### ध्वजः-ध्वजपटः

एषु एकाहं विना तदुत्सवाहानि द्विगुणीकृत्य तत्पूर्वेऽह्नि ध्वजारोहणं कुर्यात् । तत्पूर्वे अङ्कुरानर्पयित्वा ब्राह्मणो यजमानश्चेत् वेणुं क्षत्रियो जातिं वैश्यः चम्पकं शूद्रः क्रमुकं सर्वेषां क्रमुकमेव वा । दण्डमशनिहतं वातपतितं स्वयंशीर्णं

---

1. छ. पङ्क्तीः कुर्यादित्येव. 2. ख. तत्तन्मासे तत्तहिने. 3. ग. नित्यत्वसंकल्पनेन
4. इत आरभ्य. घ. कोशे महान् ग्रन्थपातो दृश्यते. 5. म. दशाहं.

SGDF
Sri Gargeshwari Digital Foundation

सुषिरकीटकोटरवक्रवर्जितं सङ्गृह्य विमानस्य समं पादहीनमर्धं वा आयतं [1]नातिस्थूलं नातिकृशं तस्याग्रादधो द्वियमे ततः पञ्चयमे वाऽष्टयमे[2] च यष्ट्याधारं [3]यमायामं अर्धविस्तारं मध्यच्छिद्रयुतं यज्ञीयैः वृक्षैः कृत्वा सुदृढं योजयित्वा खण्डस्फुटितवर्जितं कार्पासकं चतुस्तालविस्तृतं द्वादशदशाष्टसप्ततालान्यतमायतं विमानद्वारसममायतमर्धविस्तृतं वा नवं ध्वजपटं सङ्गृह्य तत्पटं चतुर्धा कृत्वा एकांशं द्वितालायामं वा अग्रं[4] अग्रांशात्पार्श्वयोः क्षीणं रज्ज्वाधारयुतं कृत्वा अधः पुच्छौ द्वौ द्वितालायतौ मध्ये क्रमादग्रान्तं क्षीणौ च कृत्वा अग्रेणाग्रं पुच्छेन पुच्छं योजयित्वा अग्रादधः [5]पुच्छयोरूर्ध्वे च यष्टिं तिर्यक् संयोज्य 'स्वस्ति दा' इति ध्वजपटं कारयेत्। तन्मध्ये स्वस्तिकासनेन वीरासनेन वा आसीनं पादं वाममाकुञ्च्य दक्षिणं प्रसार्य आकाशमारोहन्तं वा पक्षसंयुतं द्विभुजं प्राञ्जलिं सुमुखाख्योरगारूढदक्षिणस्कन्धं नवतालमानेन गरुडं पञ्चवर्णैः समालेख्य दक्षिणवामयोः चक्रशङ्खौ द्वौ चामरावुपरि छत्रं........तं ध्वजमद्भिः प्रोक्ष्य एकविंशतियमायततालपरीणाहमूले वेणुयुतं वेणुं (?) सङ्गृह्य तद्यष्ट्यामग्रादधः त्रियमे 'स्वस्ति दा' इति ध्वजे बध्नीयात्।

## भेरीपूजा-बलिः

देवालयाभिमुखे मण्डपं कूटं वा कृत्वा आलिप्य तण्डुलैः व्रीहिभिर्वा त्रिवेदिसहितानि पीठानि कृत्वा प्राच्यां पीठे ध्वजं पश्चिमे चक्रमुत्तरे विष्वक्सेनं संस्थाप्य ध्वजे गरुडमावाह्य सप्तविंशतिविग्रहैरभ्यर्च्य मौद्गिकं हविर्निवेद्य तथा चक्रशान्तावभ्यर्च्य हविर्निवेद्य पुण्याहं वाचयित्वा दक्षिणे धान्यराशौ न्यस्तभेर्यां 'नन्दीशं महाभुजं रुद्रप्रियं भूतेश'मिति नन्दीशमावाह्याभ्यर्चयेत्[6]। ततो यजमानो गुरुं वस्त्रोत्तरीयाभरणाद्यैः पूजयेत्।

स गुरुः कटाहे बलिद्रव्यैः युक्तमन्नं प्रक्षिप्य अग्रतो ध्वजपताके ततोऽनु भेरीपटहादीनि वाद्यानि धूपदीपादीन् बलिद्रव्यं ततोऽनु छत्रपिञ्छ-

1. इदं पदं म. कोशे नास्ति. 2. क. ततोऽष्टयमे. 3. क. यमायाममर्धविस्तारं. 4. ऊर्ध्वाग्रं इति तत्र क. कोशपाठः 5. क. त्रियमे स्वस्तिदा इति. 6. घ. कोशः पुनः आरभ्यते.

SGDF
Sri Gargeshwari Digital Foundation

चामरबर्हिणाद्यैः परिवृतः चक्रं ध्वजं शान्तञ्च विमानं ग्रामञ्च प्रदक्षिणं नयेत्। द्वारपालविमानपाललोकपालानपायिभ्यश्च तत्तद्देशे बलिं निर्वाप्य[1] ग्रामे सन्धौ सन्धौ यथोक्तं बलिं निर्वाप्य प्राञ्जलिः देवं ध्यायन् एवं ब्रूयात्।

'प्रीयतां सर्वलोकेशः श्रीवत्सकृतलक्षणः[2]।
भृत्यैश्च[3] परिवारैश्चाऽप्यन्यैर्देवगणैः सह'॥

'देवेश भक्तवत्सल भक्तैरस्माभिः कृतमुत्सवं प्रतिगृह्णीष्व। अज्ञानात् न्यूनानपचारांश्च क्षमस्व' इति देवेशं प्रार्थयेत्।

देवताऽऽह्वानम्

'अष्टौ लोकपालाः त्रयस्त्रिंशद्देवाः नवद्वयगणाः सर्वेऽन्यदेवाः तद्देवपत्न्यश्च स्कन्दो विघ्नज्येष्ठारोहिणीगणाः[4] मातृगणाः सर्वेऽप्यृषयः तत्पत्न्यश्च विष्णुभूतान्ताश्चान्ये विष्णुलोकगताः ब्रह्मलोकरुद्रलोकलोकान्तरस्थाः देवाः सिद्धविद्याधरगरुडगन्धर्वकिन्नरकिंपुरुषाः चारणा भूता यक्षा नागा राक्षसा बलिर्वैरोचनिः पूता शृङ्गी पूतना चरकी देवतारिः पिशाचाः पिशाच्यश्चेति सर्वेऽपि स्वैर्गणैः भृत्यैः परिवारैश्च सहैव विष्णुयागार्थमागच्छन्तु। देवेशप्रियकाम्यया समागताः सर्वेऽप्यर्पितं बलिं समादाय भुञ्जन्तु। ते यूयं तद्भुक्त्वा परं हर्षमवाप्स्यथ' इति [5]मध्यादि परितश्चाष्टदिक्षु चोच्चार्योद्घोष्य भेर्यादि वाद्यैश्च घोषयेत्।

ध्वजारोहणम्

अथवा दिग्देवतासूक्तान्युच्चार्य सर्वागमनार्थं वाद्यघोषणमेव कारयेत्। एवं बलिं निर्वाऽप्याऽघोष्य ग्रामं प्रदक्षिणं कारयित्वा यूथाधिपपृष्ठे चतुस्तालं व्यपोह्य[6] सप्ततालं वा यथार्हमवनतं खनित्वा मध्ये प्राग्दक्षिणपश्चिमोत्तरेषु मणिवज्रवैदूर्यमौक्तिकप्रवालांस्तत्तन्मन्त्रैः सन्न्यस्य ध्वजदण्डं प्रक्षाल्य ध्वजयष्टिं [7]यष्ट्याधारेषु योजयित्वा दर्भमालया दण्डं वाद्यघोषणयुतं ध्वजाग्रयष्टिं यत्न

1. क. ग्रामेऽपि दिक्ष्वष्टसु. 2. छ. संबुध्यन्तः. 3. म. भृत्यैः परिवारैश्चान्यदेवैः सह. 4. इदं पदं म. कोशे न दृश्यते. 5. तत्सन्धिषूच्चार्याघोष्य. 6. A. व्यपोह्यावटं खनित्वा. 7. क. यष्ट्याधारे अवटे.

SGDF
Sri Gargeshwari Digital Foundation

विमानं तद्दिगन्तमेतन्मन्त्रेण स्थापयेत् । तन्मूले प्रतिदिक् पादविस्तारोन्नतं त्रिवेदिसहितं पीठं कृत्वा पुण्याहान्ते ध्वजदेवमभ्यर्च्य मौद्गिकं हविर्निवेदयेत् । ध्वजावरोहणं यावत्तावद्देवं सप्तविंशतिविग्रहैः नित्यमभ्यर्च्यं हविर्निवेदयेत् ।

अथवा [1]आप्द्युत्सवे प्रथमेऽहनि सायं ध्वजमारोप्याऽघोष्य [2]सद्य एवोत्सवमारभेत । एकाहोत्सवे ध्वजारोहणं न विधीयते । ध्वजे समारोपिते तद्ग्रामस्थाः तदुत्सवावभृथात्पूर्वं ग्रामान्तरं न गच्छेयुः । [3]गतानां महाव्यधिर्भविष्यति ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
उत्सवघोषणं नाम एकनवतितमोऽध्यायः ॥

---

## ॥ अथ द्विनवतितमोऽध्यायः ॥

### वीथीभ्रमणम

अथोर्ध्वं शिबिका [4]रथयन्त्रडोलादीनानाविधयन्त्ररङ्गान् मालादीपशूलदीपहस्तदीपान् बहु सङ्गृह्य भेरीपटहकाहल[5]प्रदुरवमर्दलगोमुखतालझर्झरीवल्लरीवञ्जुलजयघण्डिका शङ्खवीणावेणुमृदङ्गपणवभाण्डादिवाद्यानि सङ्गृह्य तद्वादकांश्च नर्तकगायकांश्च भक्तान् परिचारकांश्चाहूय छत्रचामरबर्हिणतालवृन्तध्वजपताकादीनलङ्कारान् सर्वानपि, अशक्तश्चेत् परिच्छदान् हविर्द्रव्याणि सम्भारानपि सम्भृत्य उत्सवादिदिने देवालयं संमार्ज्य गोमयेनोपलिप्य छत्रचामरपद्मोत्पलादिकुसुमानि पूर्णकुम्भपालिकादीनि गजाश्वसिंहचक्रवाकहंसध्वजपताककदलीक्रमुकादिरूपाणि पैष्टिकादिपञ्चवर्णैः कारयित्वा आलयं सर्वत्र धूपदीपैश्च वितानध्वजदर्भमालास्तम्भवेष्टनपुष्पदामाद्यलङ्कारैरलङ्कृत्य द्वारेषु क्रमकपूर्णकुम्भाङ्कुरान् सन्न्यस्य ग्रामवीथीः संशोध्याभ्युक्ष्य कदलीक्रमुकपूर्णकुम्भाङ्कुरध्वजादिभिरलङ्कृत्य तद्ग्रामवासिनो जना अप्याभरणगन्धमाल्यैरलङ्कुर्युः ।

---

1. क. ययुत्सव. 2. सद्य इति B. कोशेषु न दृश्यते. 3. च. गतवतां नाम.
4. क. रत्नगरुड. 5. क. प्रदमर्दरटकर. B. टक्कर.

SCDF
Sri Gargeshwari Digital Foundation

अवभृथाङ्कुरः

उत्सवे प्रथमेऽहनि सायं विष्वक्सेनं चक्रञ्च सप्तविंशत्युपचारैरभ्यर्च्य अलङ्कृत्य यानं वाहनं वा समारोप्य छत्रपिञ्छचामरादियुतं वस्त्रमाल्यैरलङ्कृतं खनित्रञ्च पालिकाछिद्रकुम्भशरावान् ध्वजपताकादींश्च पुरस्कृत्य वाद्यघोषसहितं गत्वा अवभृथाङ्कुरार्पणार्थं मृदं गृह्णीयात् । [1]ग्रामादालयाद्वा प्राच्यां चेत्सर्वसमृद्धिः आग्नेय्यां धान्यनाशः याम्यां प्राणिनाशः नैर्ऋत्यां महाव्याधिः वारुण्यामनावृष्टिः वायव्यां राजकोपः सौम्यायां पुत्रसमृद्धिः ऐशान्यां सर्वसुखावाप्तिः[2] । [3]तस्मादैशान्यां सौम्यायां वा देशं गत्वा शुद्धे मनोरमे गोचर्ममात्रमुपलिप्य चतुरङ्गुलमात्रमपोह्य ऊर्ध्ववक्त्रामैशान्ये न्यस्तमौलिकां भूदेवीं नवार्धतालमानेनोपकल्प्य[4] मूर्तिमन्त्रैरभ्यर्च्य पुण्याहं वाचयित्वा अनुज्ञाप्य ललाटे बाह्वोः वक्षसि स्तनयोर्वा [5]उदङ्मुखः प्राङ्मुखो वा 'त्वां खना' मीति मृदं सौवर्णे राजते ताम्रे कांस्ये मृण्मये वा पात्रे गृहीत्वा प्रदक्षिणं आलयं प्रविश्योत्तरे पूर्वस्मिन् वा सन्न्यस्य तीर्थदिनात्पूर्वं नवमे सप्तमे पञ्चमे त्र्यहे वा रात्रौ सुमुहूर्ते पूर्वोक्तेन विधिनाऽङ्कुरानर्पयेत् ।

विशेषपूजा

अथ प्रदोषे यजमानो गुरुमभिपूज्य देवेशस्य विशेषपूजामुत्सवञ्च कारयेत् । देवेशं संस्नाप्य प्रभूतं हविः निवेद्य देवीभ्यामर्चकमुनिभ्यां ब्रह्मेशानाभ्यां गरुडचक्रविष्वक्सेनानां अन्यपरिवारदेवानाञ्च [7]शक्तश्चेद्धविर्निवेदयेत् । तद्दक्षिणेऽग्निकुण्डे अग्निं परिषिच्य वैष्णवं विष्णुसूक्तं मूर्तिमन्त्रानाज्येन देवेशाय हुत्वा तद्दिनाधिपमन्त्रपूर्वं तदालयगतपरिषद्देवेभ्यः सर्वेभ्यश्च [6]मूर्तिमन्त्रैः हुत्वा आज्यमिश्रेण चरुणा च तथैव जुहुयात् ।

---

1. क. ग्रामादित्येव. 2. B. सर्वदुःखनिवृत्तिः. 3. क. तस्मादैन्द्र्यामैशान्यां वा. 4. क. उपलिप्य. 5. क. उदङ्मुखः प्राङ्मुखो वेति नास्ति. स्तनयोर्वोदरे वा इत्येव. 6. ग. शक्तिश्चेत्. 7. ग. चतुर्मूर्तिमन्त्रैः



SGDF
Sri Gargeshwari Digital Foundation

**बलिः**

द्रोणैः द्रोणार्धैः आढकैर्वा तण्डुलैः पक्वमन्नं कटाहे [1]प्रक्षिप्य मुद्गनिष्पावकुलुत्थतिलतिलैः पक्वैः अपूपैः लाजैश्च युक्तं कृत्वा तद्बलिद्रव्यं तोयपुष्पगन्धधूपदीपाक्षतांश्च सङ्गृह्य चक्रशान्तगरुडान् बलिश्च क्रमेण नीत्वा एतेषां बिम्बाभावे दारुणा पीठानि कृत्वा तदालये तत्तन्मूर्तिमन्त्रैः पात्रेष्वाराध्य नयेत् । द्वारपालादितदालयगतदेवेभ्यो बलिं निर्वाप्य ग्रामेऽप्यष्टदिक्सन्धिषु तद्दिग्देवलोकपालेभ्यो देवेभ्यो भूतेभ्यो [2]नागेभ्यो राक्षसेभ्यो वैरोचनगणेभ्यश्च मध्ये प्रागाद्यष्टदिक्षु च तत्तन्नाम्ना नमोऽन्तेन तोयपुष्पगन्धधूपदीपाक्षततोयादि दत्वा बलिं निर्वाप्य तोयं दद्यात् । पूर्वं तोयं ततः पुष्पं बलिमन्ते तोयं दद्यादिति । एतद्बलिं दत्वा '[3]देवालये अत्राऽगताः सर्वे वैष्णवं बलिं [4]भुञ्जन्ताम् । [5]तदमृतं यथेष्टं सगणाः भवन्तो भुञ्जन्ताम्' । इत्युक्त्वा प्रदक्षिणं गच्छेत् । भूतेभ्यो यक्षेभ्यो राक्षसेभ्यो नागेभ्यः पिशाचेभ्यः सर्वभूतेभ्य' इत्युक्त्वा प्राग्दक्षिणमध्यमोत्तरावकाशेषु यथाक्रमं [6]बलिं दद्यादित्यन्ये । ग्रामसन्धिषु सर्वत्रैवं बलिं निर्वाप्य आलयं प्रविश्य भूतपीठे बलिशेषं निर्वपेत् ।

**वीथीभ्रमणम्**

अथोत्सवं बिम्बं तदभावे कौतुकं वा कौशेयाद्यैः श्वेतपीतकृष्णवर्णैः वस्त्रैः किरीटकेयूरहारप्रलम्बयज्ञोपवीतकटकाङ्गुलीयकमकरकुण्डलकटिसूत्रोदरबन्धनाद्यैः सौवर्णैः मुक्तामणिमयैराभरणैः सुगन्धैः पुष्पमाल्यैः गन्धैरप्यलङ्कृत्य 'वेदाह'मिति देवमुद्धृत्य शकुनसूक्तेन हस्ताभ्यां नीत्वा यानमारोप्य प्रभामण्डलमप्यलङ्कृत्य योजयेत् । देवेशेन देव्यावपि समारोपयेदिति केचित् । तत्रैव पाद्याद्यैरभ्यर्च्य मुखवासं दत्वा अग्रतो ध्वजपताकादीन् ततो यन्त्ररङ्गान् सर्ववाद्यानि गायकान् धूपदीपानपि क्रमेणैव गमयेत् । ततो दवेशं [7]रथे छत्रैः पिञ्छैः चामरैः बर्हिणैस्तालवृन्तैः अन्यैरलङ्कारैः सौवर्णैः नानाविधाकारैः परिच्छदैश्च परिवृतं

---

1. क. निक्षिप्य. 2. B. म. नागमुख्येभ्यः यक्षेभ्यः पिशाचेभ्यः सर्वभूतेभ्यः. 3. क. देवयात्रागताः । घ. देवयात्रास्थाः तैः B. ते. 4. भूतान्तं. 5. क. अमृतं. क. तदग्रतः. 6. म. सलिलं. 7. क. शिबिकायां.

SGDF
Sri Gargeshwari Digital Foundation

नीत्वा आलयं प्रदक्षिणीकृत्य शनैः ग्रामञ्च सर्ववाद्यघोषनृत्तगेयजयशब्दैः स्तोत्रध्वनियुतं प्रदक्षिणं कारयेत् । यानस्थदेवाय मुखवासफलादीन्यपक्वानि भक्ष्याणि च अमन्त्रकं निवेदयेद्ब्राह्मणादीनाम्[1] ।

ग्रामादीनेवं प्रदक्षिणीकृत्य आलयं प्रविश्य आस्थानमण्डपे संस्थाप्य नृत्तगेयाद्यैश्च राजवदुपचारैः सम्पूज्य अर्चनोक्तेन स्नपनोक्तेन वा क्रमेण संस्नाप्य प्रभूतं हविः निवेदयेत् । यावदवभृथं तावदन्यदिनेषु नित्यमेवं सायं प्रातरुत्सवमाचरेत् । तदर्थमागतान् सर्वानपि भोजयेत् ।

### उत्सवदेवत्यानि

प्रथमं ब्राह्मं द्वीतीयमार्षं तृतीयं रौद्रं चतुर्थं वासवं पञ्चमं सौम्यं षष्ठं वैष्णवं सप्तमं सर्वदेवत्यमष्टमं याम्यं नवमं वारुणं दिनम् । तस्मात् तद्दिनतद्दिनाधिपदैवत्यमन्त्रपूर्वं सन्ध्याधिपदैवत्यञ्च । प्रातः सन्ध्याधिपा इन्द्राणी सायमीशाना वारुणी । एवं सन्ध्याधिपदैवत्ययुक्तं परिषद्देवानां मूर्तिहोमं जुहुयात् । दशमादि[2]त्रिंशद्दिनान्तानां सूर्याग्निकुबेरकुमारवायुविष्णुप्रजापतिबृहस्पतिगरुडदुर्गाचक्रनिर्ऋतिश्रीमहीविष्वक्सेनपाञ्चजन्या[3]श्विनीविश्वेदेवाग्नीषोम[4]पितृसर्वदेवा इत्येताः यथाक्रमेण दिनानामधिदेवाः । तस्माद्दिनदेवत्यपूर्वमेव होतव्यमिति । एतेषु अवभृथदिने सर्वदेवत्यं होतव्यमिति केचित् ।[5]

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
उत्सवसम्भाराहरणाद्युत्सवदेवत्यनिर्णयो नाम
द्विनवतितमोऽध्यायः ॥

---

1. क. अन्यस्मादन्यानि च म. अन्नादन्यानि पक्वानि च इत्यधिकं परिदृश्यते. 2. क. द्वात्रिंशत्. 3. क. भूत. B. भूताश्वि. 4. क. पितरः. 5. B. कोशमात्रे तीर्थदिनात्पूर्वदिने मध्याह्ने पूजान्ते देवं प्रणम्य कक्ष्याक्षुरिकायुतनानाविधोपायनैरलङ्कृत्य अथवा प्रथमप्रादुर्भावार्चितं बिम्बं वा अलङ्कृत्य यानमारोप्य मृगयोचितसम्भरान् सम्भृत्याजवानरशार्दूलादिभिरन्यैः विलोकितवनानि परिवृत्य शीघ्रं श्रीदेवीं वा अलंकृत्यार्चनान्ते शिबिकायामारोप्य श्रीभूपरिवृतदेवं अनुनयेत् । प्रदक्षिणक्रमेण यथा तथैवानयित्वा आलयं प्रविश्य तद्रात्रौ पूर्ववद्बल्युत्सवादीन् कारयेत् मृगयोत्सवः ।

SGDF
Sri Gargeshwari Digital Foundation

## ॥ अथ त्रिणवतितमोऽध्यायः ॥

—: ❀ :—

### शयनाधिवासः

तीर्थदिनात्पूर्वरात्रावुत्सवान्ते देवेशमभ्यर्च्य हविर्निवेद्य चक्रञ्च ग्राममालयं वा प्रदक्षिणं कारयित्वा चक्रं तीर्थजले संस्नाप्य आलयं प्रविश्य दक्षिणपार्श्वे [1]भगवतः संस्थाप्य पुण्याहं वाचयित्वा प्रतिसरं बद्ध्वा पूर्ववच्छयने देवेशं शाययित्वा नृत्तगेयाभ्यां रात्रिशेषं नयेत् । प्रभाते स्नात्वा देवमुत्थाप्य त्रयोदशोपचारैरर्चयेत्[2] । यस्य देवस्य यदर्थं प्रतिसरबन्धनं कृतं तत्समाप्त्यन्तं तावत्तस्य हविर्निवेदनं प्रतिषिद्धम् । तदालयगतदेवानां सर्वेषामित्येके ।

### चूर्णोत्सवः

देवेशं तथैवालङ्कृत्य प्रातः पूर्ववत्प्रदक्षिणं कारयित्वा आलयं प्रविश्य संस्थाप्य विमानाङ्कणे गोमयेनोपलिप्य तत्र उलूखलमुसलौ सन्न्यस्य तयोः ब्रह्मेशानावभ्यर्च्य [3]हरिद्रामादाय प्रोक्ष्य तस्यां लक्ष्मीमावाह्य 'श्रिये जात' इत्युलूखले हरिद्रां प्रक्षिप्य आचार्यः अतोदेवादिना पेषयित्वा तच्चूर्णैः द्वादशाष्टौ चतुरो द्वावेकं वा कलशानापूर्य अग्रे निधाय सिनीवालीं तस्मिन्नाराध्य तच्चूर्णेन देवेशं संस्नापयेत् । तच्चूर्णं यश्शिरसि विन्यसेत् तस्याशुभानि नश्यन्ति ।

### अवभृथः

मध्याह्ने ततो देवेशं चक्रञ्च ग्रामं प्रदक्षिणं कारयित्वा समुद्रं नदीं तटाकं वा शुद्धजलं गच्छेत् । [4]योजनादर्वाक् न गच्छेत् । अथवा विष्ण्वालयसमीपस्थं तोयम् । तस्य पादावसेचनात् गङ्गाजलसमं तस्मात्तत्र वा तीरे देवेशं तत्प्रमुखे चक्रञ्च संस्थाप्य अग्रे पञ्चकलशान् जलैरापूर्य मध्यप्राग्दक्षिणपश्चिमोत्तरेषु सन्न्यस्य तेषु मृत्कुशपुष्पगन्धाक्षतानि क्रमेण प्रक्षिप्य देवेशमभ्यर्च्य स्नपनोक्तमन्त्रैरेव तत्तत्कलशाम्भोभिः देवेशमभ्युक्ष्य तच्छेषजलेन[5] चक्रञ्च संस्नापयेत् । ततो

---

1. B. भगवन्तं. 2. क. अभ्यर्चयेत्. 3. इत आरभ्य पेषयित्वेत्यन्तं B, कोशेषु नास्ति. 4. क. कोशादर्वाक् गच्छेत्. 5. क. भवेन.

SGDF Sri Gargeshwari Digital Foundation

देवेशं चक्रञ्च जलेऽपि मज्जयेत् । चक्रमेव वा । तत्तीर्थतोये ये स्नाताः ते सर्वेऽपि सर्वपापैः प्रमुच्यन्ते । अथ देवेशं पूर्ववद्यानमारोप्य देवालयं प्रवेशयेत् । अवभृथं दिवैव कुर्यात् । रात्रावुदकस्याशुचिभावात् महान् दोषो भवेत् ।

### ऐकाहिकोत्सवः

ऐकाहिकोत्सवे च पूर्वरात्रौ विशेषपूजान्ते प्रतिसरं बद्ध्वा पुनस्तदहि मध्याह्ने विना हविर्निवेदनं होमञ्च आज्येनैव हुत्वा पूर्ववद्बलिं निर्वाप्य देवं यानमारोप्य तदा सकृदेव ग्रामं प्रदक्षिणं कारयित्वा पूर्ववच्चूर्णं संस्कृत्य संस्नाप्य तीर्थे निमज्ज्य अवभृथं कुर्यात् । ध्वजारोहणाङ्कुरार्पणहविर्निवेदनहोमबलिप्रदानैश्च विना वा कारयेदिति केचित् । तदुत्सवान्ते स्नपनोक्तक्रमेण स्नपनं कृत्वा यथाशक्ति महाहविर्निवेद्य एलातक्कोलादिमुखवासञ्च निवेदयेत् ।

### दक्षिणादानम्

ततो यजमानो गुरवे सुवर्णपशुभूम्यादि दक्षिणां दत्वा परिचारकादीनां सर्वेषां यथाशक्ति दक्षिणाञ्च दद्यात् ।

देवेशं स्वस्थाने संस्थाप्य विशेषपूजां कृत्वा अष्टाक्षरेण पुष्पाञ्जलिं [1] दत्वा प्रणम्य वैष्णवैः ऋग्यजुःसामाथर्वभिः मन्त्रैः संस्तूय 'स्वामिन् । देवेश! उत्सवाध्वरे प्रमादादप्रमादाद्वा प्रच्युतं न्यूनं [2] तत्संपूर्णमित्यनुगृहाण प्रसीदे' ति दण्डप्रणामं कुर्यात् ।

### ध्वजावरोहणम्

अथ ध्वजदेवमभ्यर्च्य [3] हविर्निवेद्य चक्रादीन् विना बलिद्रव्याणि गृहीत्वा आलये ग्रामे तत्सन्धिषु शून्यालये चैत्यवृक्षे जलाशयसभास्थान[4]गोष्ठान्यदेवागारादिषु बलिं निर्वाप्य स्नात्वा आलयं प्रविश्य ध्वजमासाद्य,

'उत्सवेऽस्मिन् [5] समायाताः सर्वे यान्तु यथाऽऽगताः ।
समाप्त उत्सवोऽद्यात्र ध्वजोऽयमवरोप्यते' ॥

1. क. दद्यादानम्य. 2. क. यत्तत्संपूर्णं. ट. तत्सर्वं संपूर्णं. 3. क. बलिं. 4. क. गोष्ठागार. 5. क. समाहूताः B. समाहूयन्ते. छ. उत्सवेऽस्मिन् ये समाहूताः A. ते सर्वे यान्तु यथागतम्. समाप्तोऽप्युत्सर्वोद्यात्र.

SGDF
Sri Gargeshwari Digital Foundation

इत्यानम्य ध्वजदेवं विसर्जयित्वा ध्वजमवरोपयेत्। अथवा तद्दिनादूर्ध्वं त्र्यहे रात्रौ वा ध्वजमवरोपयेत्। ([1]पौराणिकेषु पर्वतवनाश्रयवापीवेलासागरतीरस्थे च वास्तुरहिते देशे चालये देवस्योत्सवमिच्छतां बल्युत्सवादींस्तदालयं परितः कुर्यात्)।

### उत्सवफलश्रुतिः

एतदुत्सवेन देवेशः सुप्रीतो भवेत्। अनेनैव गोब्राह्मणादिचातुर्वर्ण्यसमृद्धिः सस्यविवर्धनं मङ्गल्यं सर्वसम्पत्करमशुभनाशनं ग्रामादिशान्तिः सर्वकामावाप्तिश्च भवन्ति। [2]एतेन सर्वे देवाश्च प्रीता भवेयुः। तस्माद्विष्णोरुत्सवं भक्त्या यः कुर्यात् सोऽयं रहस्यानि प्रकाशानि च पापानि पूर्वजन्मसु इहजन्मनि च कृतानि सर्वाणि मोचयित्वा सर्वकामानवाप्नुयात्। एवं यस्य विष्णोरालयार्चनम ग्रहोत्रं शाश्वतं तिष्ठेत् स तद्विष्णोः परमं पदं गच्छतीति ब्रह्मवादिनो वदन्ति।

[3]एतस्मिन् नित्याग्निहोत्रे [4]यजने चातुर्वर्ण्येषु ब्राह्मणाद्याः त्रैवर्णिकाः शस्ताः। चतुर्थः शूद्रोऽनुलोमोऽपि सर्वस्य नेतारं राजानं यजमानं सङ्कल्प्यैव कारयेत्। प्रतिलोमानामन्तरालानां व्रात्यानाञ्च नैवाधिकार इति कश्यपः।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे अवभृथपुष्पाञ्जलि-प्रदानयाजनाधिकारिनिर्णयो नाम त्रिणवतितमोऽध्यायः।

---

## ॥ अथ चतुर्णवतितमोऽध्यायः ॥

### पञ्चधा जातिः

अथ [5]चातुर्वर्णिकाः अनुलोमाः प्रतिलोमा अन्तराला व्रात्याश्चेति [6]जातयः पञ्चधा भवन्ति। तत्र ब्राह्मणादिचतुर्वर्णेषु जाताः चातुर्वर्णिकाः, उत्कृष्टान्निकृष्टायामनुलोमाः, निकृष्टादुत्कृष्टायां प्रतिलोमाः, तथा अनुलोमात्प्राति-

---

1. चिह्नितभागः क. कोशे. 2. ख. एतेनोत्सवेन B, सवेन. 3. क. तस्मिन्. 4. क, यजमानाः चातुर्वर्ण्येषु. 5. इदं समस्तं पदं दृश्यते सर्वत्र चातुर्वर्णिकानुलोमे-त्यादि. 6. क. जातिः पञ्चधा. इति.

SGDF Sri Gargeshwari Digital Foundation

लोम्येन व्रात्याः । तत्र चातुर्वर्णिकाः सवर्णादनन्यपूर्वायां सवर्णायां यथाविधि जाताः शुद्धाः । तस्मादेवान्यथा जातास्त्वशुद्धाः । तेष्वनन्यपूर्वायां तु ब्राह्मणात् कुण्डो गोलश्च, क्षत्रियात्पट्टचिह्नो भोजश्च, वैश्यान्मणिवेधवलयकर्तनवृत्तिः मणिकारः वलयकारश्च, शूद्रादश्वपालो मालवकः।

अनुलोमाः

एते अनुलोमाः । शूद्रायां ब्राह्मणात् भद्रकालीपूजनचित्रमर्दलवृत्तिः[1] पारशवः मृगघाती निषादश्च, वैश्यायां कक्ष्याजीव्याग्नेयनर्तको[2] ध्वजविश्रावकवृत्तिरम्बष्ठः कुलालवृत्तिः कुम्भकारः नाभेरूर्ध्ववप्ता नापितश्च। क्षत्रियायामाथर्वणकर्मवाहनारोहणसेनाधिपत्यकृत् ब्राह्मणसमः सवर्णः अभिषेकाद्राज्यार्हः ज्योतिरायुर्वेदवृत्तिरभिषिक्तश्च । शूद्रायां क्षत्रियाद्दण्डेषुदण्डधारणवृत्तिः उग्रः शूलारोहणादियातनावृत्तिः शूलिकश्च । वैश्यायां वैश्यवृत्तिः श्रेष्ठित्वभाक् मद्गुः अश्वपण्यः आश्विकश्च । वैश्याच्छूद्रायां काष्ठादिविक्रयकः चूचुकः कटकर्मा कटकारश्चेति । प्रथमे अन्यायाच्चौर्याच्चरमे ।

प्रतिलोमाः

[3]शूद्राद्ब्राह्मण्यादिभ्यो जायन्ते प्रतिलोमाः । शूद्राद्ब्राह्मण्यां मलापहारी झल्लरीकक्षो नैर्ऋत्यवासी कालायससीमाभरणः पूर्वाह्णे ग्रामप्रवेशी वार्ध्राणकण्ठः[4] चण्डालः। राजन्यायां सुरासवादिपण्यः पुल्कसः गाननर्तनजृम्भकवृत्तिः ऐलकश्च[5] । वैश्यायां गवाजमहिषपालनवृत्तिस्तद्रसविक्रयी वैदेहकः तैललवणादिजीवी शूद्रैरप्यभोज्यान्नः अस्पृश्यः चाक्रिकश्च । ब्राह्मण्यां वैश्यात् बन्दी जङ्गारिकवृत्तिः मागधः । क्षत्रियायां तन्तुवायः कांस्यवृत्तिः आयोगवः दुष्टसत्त्वघाती[6] आरण्यकवृत्तिः पुलिन्दश्च ।

राज्ञा विप्रायां प्रतिलोमेषु मुख्यः वेदानर्हः धर्मानुबोधकः सूतः शूद्रवृत्तिः रथवाहनपरिचर्याजीवी [7]रथकारश्चेति । सूतो द्विजधर्महीनो द्विजैरस्पृश्यः ।

---

1. मर्दनवृत्तिः. 2. अध्वजीवी वार्ताश्रावकवृत्तिः. 3. क. शूद्रात् द्विजभाजः. 4. B. वार्ध्राकण्ठः. 5. B. मेलकश्श्च. 6. 1.. क. खादी. 7. च. बोधकारश्चेति.

SGDF
Sri Gargeshwari Digital Foundation

**व्रात्याः**

अन्तरालात्तथाम्बष्ठादग्रजायां समुद्रलङ्घनजीवी[1] नाविकः राजन्यायामघो-नापितः मद्गु, तथा वेणुकः [2]चर्मकारश्च। चूचुकात् क्षत्रियायां मत्स्य-बन्धश्च वैश्यायां चास्मात् समुद्रपण्यजीवः सामुद्रश्च। व्रात्याद्वैदेहकात्प्रथमयो-चर्मकार सूचीजीविनौ[3]। आयोगवात्ताम्रजीविखनकौ। खनकान्नृपायां वस्त्रनिर्णे-जकः[4] शूद्रैरस्पृश्यः उद्बन्धकश्च। पुल्कसाद्विप्रायां रजोनिर्णेजकः। तस्यां चण्डालात् श्वमांसभोजी श्मशानवासी च श्वपचश्चेत्युच्छिष्टाः प्रोक्ताः तृणान्तर-सम्भाष्याश्चेति समासः। व्यासस्तु विकल्प्यमानः सङ्ख्यां नावगाहते। ततो विमृश्यास्ता जातयः तासु तासु वृत्तिषु राज्ञा विनेतव्या इत्युपन्यस्यतीत्युपन्यस्यति।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे जातिपञ्चक-सङ्करजातिविवरणं नाम चतुर्णवतितमोऽध्यायः॥

---

## ॥ अथ पञ्चनवतितमोऽध्यायः ॥

**प्रायश्चित्तम्**

अथातो निष्कृतिं व्याख्यास्यामः। [5]'शान्त्या शान्तो भवेद्दोषो व्याधित-स्यौषधैर्य' थेति ब्रह्मवेत्तारो वदन्ति। तस्मान्न्यूनातिरिक्तेषु सर्वत्र तत् क्षणादेव शान्तिं कुर्यात्। न कुर्याच्चेत् राजा राष्ट्रं च विनश्यति। तस्माद्वैदिकेषु सर्वेषु [6]क्रियाविपर्यासे द्रव्यहीने संस्कारादिदोषोपशमनार्थं प्रायश्चित्तमिति प्रायश्चित्त-निमित्तम्। द्रव्यहीने द्रव्यहानिः [7]क्रियाहीने क्रियाहानिः मन्त्रहीने तत्सर्वं नश्यति।

**भूपरीक्षादौ**

भूपरीक्षामकृत्वा अज्ञानादर्थलोभाद्वा विष्णुयज्ञ आरब्धश्चेत् महत्तरो दोषो भवति। तदुपशान्त्यर्थं तत् स्थाने गोमयेनोपलिप्य श्रामणकाग्निं

---

1. B. लंघनौजीवी. 2. ख. कर्मकारश्च. 3. B. वल्लिकाजीविनौ. 4. B. निस्तेजकः. 5. छ. सा शान्तिः. शास्त्रोद्भवो दोषः. तस्याः शान्तिः निष्कृतिः. 6. ग. क्रियातन्त्र. 7. ग. पुण्यक्रियाहीने.

SGDF
Sri Gargeshwari Digital Foundation

साधयित्वा भगवन्तमग्नेर्दक्षिणतोऽभ्यर्च्य सप्तविंशतिभेदैराज्येनाहुतिसहस्रं हुत्वा भूमियज्ञं कृत्वा अतो देवा इत्यार्षं भूतदैवत्यं च हुत्वा आशीर्भिराघोष्य अग्निं विसृज्य वृषभचतुष्कं दक्षिणां दद्यात् ।

युगलाङ्गलादीनामुक्तवृक्षालाभे भगवन्तमभ्यर्च्य [1] सुवर्णभारैरलङ्कृत्य शक्तितो दक्षिणां दद्यात् । युगे प्रमाणहीने वैष्णवं सीरे प्राजापत्यमायसे (?) याम्यं लाङ्गले रौद्रं भौतिकं, हले वैष्णवम् । एतेषां भेदने [2] शीर्णे रज्जुछेदने अग्निं साधयित्वा अतो देवादि ब्राह्मं प्राजापत्यं गारुडं भौतिकं महाव्याहृतिमाज्येन हुत्वा देवमभ्यर्च्य रूप्यदानं कुर्यात् । हीनाङ्गे बलीवर्दे प्राजापत्यं रौद्रमार्षं वैष्णवमाज्येन जुहुयात् । कर्षणकाले व्रणयुक्ते वृषे सहस्रशीर्षादीन् विष्णोर्नुकादींश्च शान्तिं हुत्वा निष्काधिकं दक्षिणां दद्यात् । बलीवर्देषु सुषुप्तिभ्रमणपतनेषु पौण्डरीकाग्निं साधयित्वा आज्येनाहुतिसहस्रं विष्णुगायत्र्या हुत्वा [3] पुनः कर्म प्रवर्तयेत् ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
भूपरीक्षाहीनप्रायश्चित्तादिविधिर्नाम
पञ्चनवतितमोऽध्यायः ॥

---

## ॥ अथ षण्णवतितमोऽध्यायः ॥

### कर्षणादौ निष्कृतिः

कर्षणकाले कपालास्थि[4]रोमनखदन्ततुषभस्मपाषाणादिदर्शने तत्तदपोह्य पञ्चगव्येन आपो हि ष्ठेति तिसृभिः प्रोक्ष्य भूमियज्ञं कुर्यात् । भूमिदानं [5] कृत्वा गवां पश्चात् निवेदयेत् । मन्त्रहीने सारस्वतं वैष्णवं रौद्रं हुत्वा कपिलाचतुष्कं दद्यात् । क्रियासङ्करे महाव्याहृतिं सहस्राहुतिं च जुहुयात् । गवां सस्यनिवेदने

1. B. सुवर्णभाण्डैः. 2. ग. जीर्णे. 3. B. हुत्वोष्य. 4. ग. लोह.
5. ग. कुर्यात्.



SGDF
Sri Gargeshwari Digital Foundation

हीने गोदानसूक्तं शान्तिं च हुत्वा कृष्णवृषभं शुक्ललिङ्गं विप्रेभ्यो दत्वा गोष्ठे पलालभारमुत्सृजेत् । विष्वक्सेनपूजाहीने तत्तन्मन्त्रैः तिलसर्षपमिश्रचरुणा हुत्वा त्रिनिष्कं वा दक्षिणां दद्यात् ।

लोहबेरहीने दारुणा कृत्वा अतो देवादिना आज्येन [1]शताष्टवारं जुहुयात् । शान्तिहीने विप्रशतं भोजयित्वा ऋत्विजां च दक्षिणां दद्यात् ।

## तरुणालयविहीने

तरुणालयविहीने सर्वनाशः। तस्मात् पौडरीकाग्निं साधयित्वा अब्जहोमं हुत्वा वृषभैकादशं दक्षिणां दद्यात् । यथोक्तं कारयेत् ।

## ब्रह्मपद्मावटे

ब्रह्मपद्मावटे कपालास्थिशिलादिदर्शने वैष्णवं भूमिदैवत्यं हुत्वा कृच्छ्रं चरेत् । तत्र प्रक्षिप्तपद्मभङ्गे तत्काले प्राजापत्यं वैष्णवं जुहुयात् ।

जलस्य विपरीते ब्राह्मं वारुणं घटे भिन्ने यज्ञोपस्करनाशे यागसङ्कुले कलहे रुधिरस्रावे च वैष्वक्सेनं गारुडं वैष्णवं जुहुयात् । वामावर्ते जले तस्मिन् ब्रह्मपद्मावटे वारुणं वायव्यं भूमिदैवत्यं यजेत् । [2]सङ्कुलं चेत् अतो देवादि ब्राह्मं भौमं वारुणं गारुडं यजेत् । पांसुच्छन्ने जले अधरोत्तरे पार्श्वस्थे सति ब्राह्मं वारुणं [3]सहस्रशीर्षाद्याज्येन जुहुयात् ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
कर्षणादिहीनप्रायश्चित्तविधिर्नाम
षण्णवतितमोऽध्यायः ॥

---

1: क. शताष्टावरं. 2. सङ्कुलं चेत् दौवारिकं. 3. ग. सहस्रशीर्षाद्येन

SGDF
Sri Gargeshwari Digital Foundation

## ॥ अथ सप्तनवतितमोऽध्यायः ॥

### प्राचीसाधने

शङ्कुः स्थापनकाले भग्नश्चेत् वैष्णवं ब्राह्मं जुहुयात् । रज्जुछेदने याम्यं वायव्यं वैष्णवं जुहुयात् । इष्टकाग्रविपर्यासे गर्भन्यासहीने प्रस्तरे सङ्कुले हीनाङ्गे प्रमाणे हीने दोषयुक्ते विहीने द्वारगृहर्भित्त्यादीनां हीनाधिक्ये अङ्गहीने विमाने यजमानाचार्यविपर्यासे पौण्डरीकाग्निं समाहरेत् ।

### विमानाङ्गवैकल्ये

[1]अथोत्पाताशनिपातधूमादिभिः मन्दिरे [2]स्पन्दिते महाशान्तिं हुत्वा विप्रशतं भोजयित्वा दक्षिणां दद्यात् । भुवङ्गपतङ्गकवाटबोधिकोत्तरस्थूणादीनामालये दोषयुक्ते जीर्णे शीर्णे वा तत्तदपहायान्यं संयोज्य प्रोक्षणैः प्रोक्ष्य तत्तद्दैवत्यं हुत्वा भोजयेत् ।

सम्यक् संहिते विमाने त्वनारब्धे ध्रुवरूपे अब्दातीते महाशान्तिं हुत्वा सहस्रभोजनं च कृत्वा शक्तितो दक्षिणां दद्यात् । शून्ये तथाऽब्दे द्विगुणं द्विगुणमारभेत । द्वादशाब्देषु विष्णुयागं कृत्वा हरिशाङ्करबेरं वा [3]दशाब्दे द्वादशाब्दे वा समारभेतेति विज्ञायते ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे जलादिविपरीतप्रायश्चित्तविधिर्नाम सप्तनवतितमोऽध्यायः

---

## ॥ अथ अष्टनवतितमोऽध्यायः ॥

### दारुसङ्ग्रहणादौ

दारुसङ्ग्रहणकाले [4]निमित्तेषु विपरीतेषु दृष्टेषु स्नात्वा महाशान्तिं हुत्वा अष्टाक्षरमष्टसहस्रमावर्त्य सौदर्शनेनात्मानमभिमृश्य दक्षिणां दत्वा कर्मारभेत ।

1. ख. अभ्युत्पात. 2. B. स्कन्दे A स्पन्दे. 3. B. दशांशाद्द्वादशायुतं.
4. ग. निमित्तानि.

SGDF
Sri Gargeshwari Digital Foundation

उक्तवृक्षालाभे अन्यं वृक्षं सारवन्तमादाय शान्तिं हुत्वा निष्काधिकदक्षिणां दत्वा आहरेत । अनिष्टदिक्पतने अन्यालाभे महाशान्तिं हुत्वा आहरेत । शूल-कल्पनाहीने विपर्यासे सहस्राहुतिं हुत्वा शान्तिं संवाच्य आशीर्भिराघोष्य देवमनुमान्य दक्षिणां दत्वा आरभेत । उक्तरत्नालभे अग्निं परिस्तीर्य अग्नेर्दक्षिणतो रत्नत्रयमभ्यर्च्य तेभ्यो हुत्वा सङ्गृह्य तत्तद्रत्नमिति मनसा ध्यात्वा तत्तन्मन्त्रेण स्थापयेत । धातोरपि पारदमादायैवं समाचरेत् । बीजानां यवं सोममभ्यर्च्य हुत्वा न्यसेत् । रत्नानां सङ्कुले मन्त्रहीने वैष्णवं जुहुयात् । काष्ठमृद्रज्जु-शर्करामबरवर्णादीनां योगकाले क्रियाहीने विपर्यासे शान्तिं हुत्वा देवमनुज्ञाप्य दक्षिणां दत्वा आरभेत । [1]अक्षमोचनकाले अतिक्रान्ते षण्मण्डलाधिपमन्त्रान् शान्तिं हुत्वा पश्चादक्षिमोचनं कुर्यात । मन्त्रद्रव्यक्रियाहीने अक्षिमोचनान्ते शान्तिं विधानेन हुत्वा दक्षिणां दद्यात् ।

### सामान्यप्रायश्चित्तम्

भूपरीक्षाद्यक्षिमोचनान्तं यद्यत्क्रियाविहीनं तस्य शान्तये तद्दिने पौण्डरीकाग्नौ महाशान्तिं हुत्वा आरभेत । उक्तशिलालाभे अंजननिभामदाय हिरण्ये दिग्देवताभ्यो हुत्वा अष्टाक्षरमष्टसहस्रं जप्त्वा विष्णुमभ्यर्च्याहरेत । शिलायां गर्भदर्शने तदपहाय दोषशान्तिं हुत्वा अन्यत् शिलाग्रहणमारभेतेति विज्ञायते ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्त ज्ञानकाण्डे दुर्निमित्त-दर्शनप्रायश्चित्तविधिर्नाम अष्टनवतितमोऽध्यायः ॥

---

## ॥ अथ एकोनशततमोऽध्यायः ॥

---

### ध्रुवकौतुकयोरनानुरूप्ये

अथ [2]ध्रुवस्यानुरूप्यविपर्यासे कौतुके प्रमाणहीने अन्यालयकृते नृपराष्ट्र-विनाशाय भवति । तस्मादपनीय महाशान्तिं त्रिरात्रं हुत्वा देवं स्थापयेत् । स्थापिते नवे कौतुके [3]अन्यस्मिन् पश्चात् अन्यसंवेशनं नाचरेत । लोहगौरवं

---

1. A. अक्षिमोक्षण. 2. छ. ध्रुवानुरूपस्य विपर्यासे. 3. अन्यस्मिन्निति स्थाने निवेश्य इति ग. कोशे दृश्यते.

SGDF
Sri Gargeshwari Digital Foundation

कुर्यात् चेत् शान्तिं हुत्वा पूर्ववदाचरेत् । जातरूपं विना अन्यलोहमिश्रितं बिम्बं न स्थापयेत् । स्थापिते तदपनीय पूर्ववद्धुत्वा अन्यं संस्थापयेत् ।

### जीर्णाङ्गसन्धानादिषु

पीठप्रभावनतान्यलोहकृते च शङ्खचक्रादिहीने दुर्भिक्षव्याधिपीडाकरं तस्मादवश्यं सन्दध्यात् । मन्त्रहीने मधूच्छिष्टे विधानेन अब्जाग्नौ ब्राह्मं प्राजापत्यं सौरं सौम्यं वैष्णवान्तं हुत्वा ब्राह्मणानन्नेन परिवेष्य शक्तितो दक्षिणां दत्वाऽऽरभेत । अङ्गोपाङ्गहीने अवकुण्ठिते शीर्णे बिम्बे अर्चनं [1]यदि चेत् महत्तरो दोषो भवति । तस्माज्जीर्णकौतुकमार्गेणापहायान्यं स्थापयेत् । [2]सौवर्णं बिम्बं जीर्णं न त्याज्यम् । लोहवत्कृत्वा नवीकृत्य स्थापयेत् । उपाङ्गे दोषयुक्ते तत्तत्प्रतिसन्धाय[3] पूर्ववद्धुत्वा बिम्बशुद्धिं कृत्वा स्थापयेत् । अनधिवासिते बिम्बे स्थापिते राजराष्ट्रविनाशाय भवति । अज्ञानादर्थलोभाद्वा स्थापितं चेत् महाशान्तिं हुत्वा पश्चादधिवास्य स्थापनं सम्यगाचरेत् । स्थापनात्पूर्वमङ्गवैकल्ये तत्तत् प्रतिसन्धाय स्थापयित्वा शान्तिं हुत्वाऽऽरभेत । नयनमोक्षक्रियां हित्वा स्थापितं चेदब्जाग्नौ त्रिशतं वैष्णवं हुत्वा तदालयगतदेवानां चतुर्भिर्मूर्तिमन्त्रैश्च हुत्वा सहस्राहुतिं हुत्वा सहस्रभोजनं कृत्वा स्थापयेत् । संवत्सरेऽतीते लोहमयं भवतीति कश्यपः ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
कौतुकप्रायश्चित्तविधिर्नाम एकोनशततमोऽध्यायः ॥

---

## ॥ अथ शततमोऽध्यायः ॥

### अनुक्तमुहूर्ते स्थापिते

अथ स्थापनानुक्तनक्षत्रे मुहूर्ते स्थापिते अब्जाग्नौ धात्रादिभूतान्तं च हुत्वा ब्राह्मणान् भोजयित्वा पुनः स्थापनं कुर्यात् । स्थापकैः दोषयुक्तैः अन्यै-

---

1. छ. यदि कृतं चेत् B. बिम्बार्चना यद्यर्चितं चेत् 2. छ. सौवर्णं जातरूपमयं. 3. क. प्रतिसंधाप्य बिम्बशुद्धि.

SGDF
Sri Gangeshwari Digital Foundation

रनुक्तैश्च स्थापिते पूर्ववद्धुत्वा विप्रशतं भोजयित्वा हिरण्यभूगवादिदक्षिणां दत्वा पुनः स्थापनं कुर्यात् ।

### पदार्थिनां भर्त्सनादौ

यजमानाचार्यर्त्विगादिविरोधे [1]येन केनचित् भर्त्सनशापनहननतर्जनादयः तेषां यदि वर्तन्ते तत्र ब्राह्मं पाञ्चभौतिकं वैष्णवं श्रीभूदैवत्यं रौद्रं सारस्वतं बार्हस्पत्यं हुत्वा आशीर्भिरभिनन्द्याऽऽरभेत । तत्रान्यविरुद्धे तु ब्राह्मं प्राजपत्यं वैष्णवं जुहुयात् । तत्तत्कर्मकरविद्वेषेऽपि वैष्वक्सेनं जुहुयात् । रोदने रुधिरस्रावणे पतने च शान्तिं हुत्वा दक्षिणां दद्यात् ।

### मरणादौ

मरणे अन्त्यजप्रवेशे च महाशान्तिं हुत्वा ब्राह्मणान् भोजयित्वा शान्तिं प्रवाच्य समाचरेत् । श्वकाकाद्यु हतौ प्रवेशे च अग्निशालायां तद्द्रव्यार्हकं शौचं कृत्वा वास्तुहोमान्ते वैष्णवं हुत्वा शक्तितो दक्षिणां दत्वा पुण्याहान्ते समारभेत। श्वकाकसूकरादिभिः बिम्बस्पर्शने पञ्चगव्यैः प्रोक्ष्य पुण्याहं वाचयित्वा हेमरूप्यं स्वशक्तितो दक्षिणां दद्यात् । उच्छिष्टादिभिः स्पृश्यते यदि बिम्बं कुशोदकैः प्रोक्ष्य पुण्याहान्ते दक्षिणां दत्वाऽऽरभेत ।

### शयनादीनामलाभे

शयनालाभे अम्बराण्यत्र कल्पयेत । शयनस्थो देव उत्थापितश्चेत् वैष्णवं श्रीभूमिदैवत्यं हुत्वा अन्यत् शयनमाकल्प्य पुनः शाययेत् । शयनस्थानविपर्यासे [2]सौरं वैघ्नं सौदर्शनं वैष्वक्सेनं जुहुयात् ।

ऐन्द्रे वास्त्वग्निसंस्थापनं कुर्याच्चेत् ऐन्द्रं वैष्णवं हुत्वा विप्रशतं भोजयेत् । एवमेवान्यदिक्स्थापने तत्तद्दिग्दैवत्यं वैष्णवयुतं हुत्वा भोजनमारभेत । गर्भालयं विमाने वा [3]विलीने निम्ने वाऽकाले छुल्ल्यां वास्तुहोमं यदि कुर्यादाग्नेयं वारुणं वैष्णवं प्राजापत्यं व्याहृत्यन्तं हुत्वा पुनः सम्यगाचरेत् ।

---

1. छ. ऋत्विगादीनां. 2. छ. सौरं सौदर्शनमित्येव. 3. B. लीले निम्ने वाकाले (?)

SGDF
Sri Gargeshwari Digital Foundation

अग्निकुण्डादौ

हीनाधिक्येनाग्निकुण्डं कृतं चेत ब्राह्मं सौम्यमाग्नेयं सौरं जुहुयात् । स्थापिताग्निविनाशे मथिताग्नावाग्नेयं चरुणा हुत्वा आरभेत । मथिताग्न्यलाभे आचार्यगृहाच्छ्रोत्रियगृहाद्वा आहृत्य तस्मै वित्तं दत्वा आग्नेयेन चरुणा हुत्वा आरभेत । वामावर्ते केशे धूमे गन्धेऽपि विस्फुलिङ्गे कान्त्यां न्यूनायां अतीव विज्वलिते ज्वालावलीढके ब्राह्मं वैष्णवं व्याहृत्यन्तं हुत्वा ब्राह्मणान् भोजयेत् ।

क्रियामन्त्रविपर्यासे

क्रियामन्त्रविपर्यासे वैष्णवमाग्नेयं व्याहृत्यन्तं हुत्वा 'अहमिन्द्र' इत्यग्निं प्रणमेत् । आहुतीनां विपर्यासे ब्राह्मं वैष्णवं हुत्वा यजेत । होमद्रव्यविहीने पूर्णाहुतिं व्याहृतिं त्रिराज्येन जुहुयात् , तेन सर्वं पूर्णं भवति । अन्तहोमक्रियाहीने सङ्कुले वा पूर्ववद्धुत्वा सूक्तं वैश्वानरं जपेत्, सर्वकर्मसमृद्धिर्भवति । यज्ञोपस्करवस्तूनां[1] विपर्यासे ब्राह्मं वैष्णवं हुत्वा दक्षिणां दद्यात् । चरूणां विपर्यासे अतीते च शान्तिं हुत्वा ब्राह्मणान् भोजयेत् । वैपरीत्येऽथ गोत्रस्य विहीने वा आज्येनार्षं वैष्णवं ब्राह्मं [2]प्राजापत्यमैन्द्रं सारस्वतं चरुणा हुत्वा पुनरारभेत । हीननिष्कृतिमारभ्यैतदन्तं सार्वत्रिकमिति विज्ञायते ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
प्रतिष्ठाप्रायश्चित्तविधिर्नाम शततमोऽध्यायः ॥

---

## ॥ अथ एकोत्तरशततमोऽध्यायः ॥

कुम्भे

प्रमाणहीने कुम्भस्य महान् दोषो भवति । मानहीने महाव्याधिः कृष्णमण्डलेऽर्थहानिः स्फुटिते पुत्रहानिः खण्डिते जातिभ्रंशः वर्णहीने मरणं भवति,

---

1. ख. मन्त्रणां A. शस्त्राणां 2. ग. रौद्रं सारस्वतं.

SGDF
Sri Gurgeshwari Digital Foundation

तस्मात्सलक्षणमेवाचरेत् । [1]अलक्षणे आहृते [2]तमपहाय वैष्णवं वास्तुदैवत्यं हुत्वा समारभेत । [3]कुम्भपूजनकाले च आचार्यादीनां भ्रमणचरुनिद्रालस्यमोह-क्रोधलोभाद्यनर्थदर्शने महाशान्तिं हुत्वा विप्रशतं भोजयित्वा गवादिदक्षिणां दत्वा अन्यगुरुं सङ्गृह्य यागमारभेत । वस्त्रालाभेऽथ कुम्भस्य वैष्णवं वारुणं हुत्वा हिरण्यं दक्षिणां दद्यात् । उच्छिष्टाशुचिकाकादिदर्शने तं त्यक्त्वा अन्यमादाय महाशान्तिं हुत्वा आचार्यमनुज्ञाप्याराध्यारभेत । कुम्भे यदि प्रभिन्ने सर्वप्रजामरणं भवति, तस्मात् भ्रंशे [4]दुःखान्तं विज्ञाय विष्णुयागं तथा कृत्वा हिरण्यभूग-वाश्वादीन् दत्वा पुनः समारभेत । विष्णुगायत्र्या प्रणवाद्यया समिदाज्यचरुभिः[5] आहुतिसहस्रमब्जाग्नौ हुत्वा पुण्याहं प्रवाच्य आशीर्भिरभिनन्द्य द्वादशनिष्कं तदर्धं वा दक्षिणां दत्वा आरभेतेति भृगुः । महाशान्तिं हुत्वा आरभेतेत्यङ्गिराः ।

### रात्रौ प्रतिष्ठायाम्

रात्रौ प्रतिष्ठा चेत् सर्वदोषकरं तस्मादाग्नेयं [6]वैष्णवं सौरं च पृथक् पृथगष्टसहस्रं हुत्वा पुनः दिवैव[7] स्थापनं कुर्यात् ।

### दक्षिणाप्रशंसा

ऋत्विगाचार्यादीनां दक्षिणाहीने तत्सर्वं भस्मसात् भवति । तत्फलमसुराः स्वस्थाः गृह्णन्ति । तस्मात्तेभ्यो दक्षिणां न हापयेत् । यदि [8]हापयति शक्तो भावः काकोऽपि भूत्वा पुनः [9]तत्तत्प्रेष्यजन्मशतं [10]प्राप्नुयादिति । तस्मात्ते दैववत्पूज्या भवन्तीति विज्ञायते ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
कुम्भपूजाविपर्यासादिप्रायश्चित्तविधिर्नाम
एकोत्तरशततमोऽध्यायः ॥

---

1. क. अलक्षणेष्वाहृतेषु. 2. क. तदपहाय. 3. कुंभपूजनाकालेऽपि शान्तिं जुहुयादिति B. कोशेष्वत्राधिकं दृश्यते. 4. छ. दुःखं तं B. दुःखं समास्थाय. 5. छ. आज्याहुतिभिः. 6. B. सौरं वैष्णवं. 7. B. निर्मन्थ्येऽप्यग्रे इत्यधिकं (?) 8. B. गूहति. 9. B. तत्तत् जन्मशतं. 10. A. प्रायादिति.

SGDF
Sri Gargeshwari Digital Foundation

## ।। अथ द्व्युत्तरशततमोऽध्यायः ।।



### अर्चनाहीननिष्कृतिः

अथैककालार्चने हीने अग्निं समाधाय वैष्णवं भूमिदैवत्यं हुत्वा द्विगुणमर्चयेत् । द्विकाले तत द्विगुणं त्रिकाले त्रिगुणम् । एकाहमर्चने हीने अग्निं परिस्तीर्य शान्तिं हुत्वा सप्तभिः कलशैः संस्नाप्य ब्राह्मणान् भोजयेत् । द्वितीये द्विगुणं तृतीये त्रिगुणम् । एवं मासान्तं वर्धयति । मासेऽतीते वास्तुशुद्धिं कृत्वा पञ्चाग्नीन् परिस्तीर्य दिग्दैवत्यं हुत्वा अब्जाग्नौ वास्तुहोमं हुत्वा अष्टशतैः कलशैः भगवन्तं संस्नाप्य हौत्रं प्रशंस्य विप्रशतं भोजयेत् । द्वितीये द्विगुणं तृतीये त्रिगुणम् । एवं संवत्सरान्तं वर्धयति । संवत्सरेऽतीते स्थापनं सम्यगाचरेत् । [1] द्वादशाब्दातिक्रमे भगवान् न रमेत । तत्र पिशाचब्रह्मराक्षसादयो वसन्ति ।

तस्मात्तस्मिन् यदीच्छेच्चेत् देवेशं स्थापयितुं सुवर्णहलेन कर्षणादीन् मन्त्रेण कृत्वा अगारे पलालभारमुत्सृज्य [2] गोगणाय निवेद्य त्रयोदशाहं सप्ताहं पञ्चाहं त्र्यहं वा विप्रान् भोजयित्वा अगारं नवीकृत्य शुभर्क्षे वास्तुशुद्धिं कृत्वा मध्ये अब्जाग्नावब्जहोमं कुर्यात् ।

### विष्णुयागः

सर्वत्रारभेत अनियमेषु यागम् । अत्रैवार्षिकं बीजमब्जं ब्रह्मवादिनो वदन्ति । तस्मात् शालिपिष्टमयं किष्कायतमृत्विगुच्छ्रयमङ्गोपाङ्गयुतं पशुं कृत्वा अग्नेः दक्षिणतः संस्थाप्यालङ्कृत्य रात्रिसूक्तेनाभिमृश्य 'प्रजापते न त्व' दिति दक्षिणे कर्णे वामे 'त्वघोरचक्षु'रित्युपांशुनैव जप्त्वा 'चत्वारि शृङ्गे' त्युदरमभिमृश्य ब्राह्ममासनमास्थाय स्रुवजुह्वादीन् 'सप्त त्वे जग्मु'रिति प्रोक्षयति । अध्वर्युर्वदति 'होतरे' हीति । अत्रैव 'अध्वर्यो देवता' इति 'ओं नमः प्रवक्त्र' इति होता हौत्रक्रमेणैव [3] स्थापनाधिपानामावाहनक्रमेण जुष्टाकारस्वाहाकारौ कृत्वा अध्वर्युः

1. B. द्वाद्शाब्देऽतीते. 2. B. उत्सृज्येति न दृश्यते. 3. ग. स्थापनाधिपतीनाम्.



SGDF
Sri Gurgakumar Digital Foundation

'ब्रह्मन् वयमिदं त्वया सृष्टस्य जगतः सर्वशान्तिदं देवयजनं करिष्याम' इति ब्रह्माणं वदति । 'होतरे' हीत्यत्रैवाध्वर्युः । '[1]अध्वर्यो देवता' इत्यारभ्य होता 'हिं भूर्भुवस्सुवरो' मित्यन्ते 'जगद्रक्षणार्थं देवयजनं कुरु' ष्वेति ब्रह्माणं वदति । पश्चात् पशुमभिमन्त्र्य 'सहस्रशीर्षा पुरुषः, पुरुष एवे' ति शृङ्गौ 'एतावान्, त्रिपादूर्ध्व' इत्यक्षिणी 'तस्माद्विराट्, यत्पुरुषे' णेति शीर्षं 'सप्तास्यासन्, तं यज्ञ' मिति [2]कर्णौ 'तस्माद्यज्ञात् तस्माद्यज्ञा' दित्युदरं, 'तस्मादश्वा' इति पुच्छं 'यत्पुरुषं व्यदधु' रिति वृषणौ 'ब्राह्मणो' स्येति लिङ्गं 'चन्द्रमा मनस' इति नाभिं 'नाभ्या आसी' दिति पूर्वपादौ 'वेदाहमेतं, धाता पुरस्तात्, यज्ञेन यज्ञ' मित्यपरपादौ च क्रमेण छित्वा जुहोति । पश्चान्महाशान्तिं व्याहृत्यन्तं हुत्वा आशीर्भिराघोष्य अध्वर्युप्रभृतीनां पृथक् पृथक् दक्षिणां दद्यात् । स एष विष्णुयागः । इत्येवं कृत्वा पश्चात् [3]शिलास्थापनादि कर्मारभेत । [4]लोकधर्मविगर्हितानां च निवेदने शान्तिं हुत्वा सप्तभिः कलशैः संस्नाप्य आचार्यः कृच्छ्रं चरतीति विज्ञायते ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
अर्चनाहीनप्रायश्चित्तविष्णुयागविधानं
नाम द्व्युत्तरशततमोऽध्यायः ॥

---

## अथ त्र्युत्तरशततमोऽध्यायः

---

### स्नपननिष्कृतिः

अथातः स्नपननिष्कृतिं व्याख्यास्यामः । दिवा निशि सन्धिषु यत्र यत्र निमित्तं स्यात् तत्तत् स्नपनकालः । कालातीते नित्यार्चनायां न दोषो भवति । प्रमुखे चोत्तरे वापि स्नपनं करोति । [5]अन्ययोः नाचरेत् । न मूलागारे तथाऽचरेत् । विदिक्ष्वैशान्ये वा कुर्यात् । आग्नेये नैर्ऋते वायव्ये न समाचरेत् ।

---

1. B. अध्वर्यो हनुमन्ते जगस्तृणान्नं देवयजनं कुरुष्वेतीति पाठोऽत्र कोशेषु दृश्यते. 2. कण्ठं 3. B. ख. शूल 4. लोकधर्मविरुद्धव्यापारचतुष्कं. 5, B. अन्ययोः यदिवा लोकमूलागारे.

SGDF
Sri Gargeshwari Digital Foundation

यदि कुर्यात् शान्तिं हुत्वा पुनरन्यत्र स्नपनमारभेत। शयनस्थे तथा देवे प्रभाते सौरं सौम्यं वैष्णवं व्याहृत्यन्तं हुत्वा बेरमुत्थाप्य प्रोक्षणैः प्रोक्ष्याभ्यर्च्य-आचरेत। वेद्याः प्रमाणहीने भूमिमध्यान्तमभ्यर्च्य [1]प्रपायामथवा भूम्यां कूर्चं वासो-वा न्यस्य कुर्यात्। स्नपनार्थं प्रकल्पित द्रव्यमग्निदग्धं चेत् आग्नेयं वारुणं सौम्यं वैष्णवं च हुत्वा पुनरादायाऽचरेत। प्रमादात्साधितं पूर्णं कलशं भिद्यते यदि अन्यं कलशमादाय पूर्ववन्मन्त्रेणापूर्याधिदेवमाराध्य द्वादशाक्षरमष्टाक्षरं वा अष्टसहस्रमावर्तयेत्। [2]द्रव्याणामेवम्। कलशादीनां विपर्यासे तत्तत्स्थाने निवेश्याभ्यर्च्य विष्णुगायत्रीमष्टशतं जपेत्। एतेषां श्वकाकाद्यन्त्याशुचिस्पर्शे तदपनीयान्यमादाय अष्टाक्षरं शतमावर्त्य देवमनुज्ञाप्य तत्तत्स्थानेऽभ्यर्च्य स्नापयेत। संस्पृष्टं चैवमपनीयाऽचरेत्। द्रव्याणां हीनता स्याच्चेत् जलेन पूरयेत्। उक्तद्रव्यालाभे तत्तत् प्रतिनिधिं [3]स्मृत्वा तत्तद्द्रव्याधिपं वैष्णवान्तं जुहुयात्। मधु(?) अजाविकमहिषीक्षीरदधिस्नापिते शान्तिं हुत्वा पञ्चगव्यैः संस्नाप्य शान्तिं वाच्याऽरभेत। प्रमादान्निद्राद्यैः[4] पतिते बिम्बे तदा संभ्रान्तमानसो भूत्वा उत्थाप्य पञ्चगव्यैः संस्नाप्य प्रोक्षणैः प्रोक्ष्य श्वभ्रे स्थापयित्वा 'सुवर्भुवर्भू' रिति बिम्बस्य मूर्ध्नि नाभौ पादे च स्पृष्ट्वा 'भगवतो बले' नेति भगवन्तं प्रणम्या-भ्यर्च्य वैष्णवं हुत्वा स्थापयेत्। तोरणादिविपर्यासे तत्तदधिदैवत्यं, केवलं विहीने सौरं सौम्यं प्राजापत्यं वैघ्नं सौदर्शनं हुत्वा असङ्कुलमारभेत।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे स्नपन-प्रायश्चित्तविधिर्नाम त्र्युत्तरशततमोऽध्यायः॥

## ॥ अथ चतुरुत्तरशततमोऽध्यायः॥

### नित्यबलिनिस्कृतिः

सुरर्षिमनुष्याणां बलं यस्मात् प्रवर्धते तस्माद्बलिरिति प्रोक्तम्। बलि-मुत्थाप्य विघ्नश्चेत् येन[5] केनचित् ब्राह्मं सौम्यं सौरं गारुडं [6]वैष्वक्सेनं हुत्वा

1. प्रपां वा दर्भकूर्चं वासो वा. 2. A. द्रव्यमेवं कलशादीनां. 3. ग. जप्त्वा. 4. B. निर्माल्ये. 5. B. अन्येन. 6. B. वैष्णवमिति तत्र.

SGDF
Sri Gargeshwari Digital Foundation

पुनरारभेत। एककाले हीने सप्तभिः कलशैः भगवन्तं संस्नाप्य सौरं सौम्यं गारुडं वैष्णवमौपासनाग्नौ हुत्वा बलिमारभेत। द्विकाले द्विगुणमेवं सप्तरात्रं वर्धयेत्। सप्तरात्रेऽतीते तदालयगतानां तत्तन्मन्त्रैः हुत्वा पुनश्शान्तिं समारभेत। द्वादशाहेऽतीते महाशान्तिं हुत्वा देवेशं संस्नाप्यारभेत। स्त्रीशूद्रानुपेताशुचिपतितान्त्यजादिस्पर्शने [1]च तदपहाय ब्राह्मं प्राजापत्यं [2]सौम्यं सौरं गारुडं वैष्णवं हुत्वा आरभेत। बिम्बे प्रमाणहीने भिन्ने [3]शीर्णे वैष्णवं जुहुयाच्छतम्। बलिधारकपतने गारुडं वारुणं वायव्यं बलिदैवत्यं व्याहृत्यन्तं हुत्वा कुर्यात्। उक्तलक्षणयुतपात्रालाभे हविःपात्रं सङ्गृह्य तद्रूपं ध्यात्वा तदधिदैवं वैष्णवं हुत्वा बलिमुद्धरेत्। केशकीटादिदूषिते अयोग्याशुच्यन्नकल्पिते तत्त्यक्त्वा बलिं सौरं सौम्यमाग्नेयं गारुडं वैष्णवमार्षमाज्येन व्याहृत्यन्तं हुत्वा आरभेत। [4]एवमेव हविर्निवेदने चोक्तमिति विज्ञायते।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे बलिहीनप्रायश्चित्तविधिर्नाम चतुरुत्तरशततमोऽध्यायः।

---

## ॥ अथ पञ्चोत्तरशततमोऽध्यायः ॥

### उत्सवनिष्कृतिः

अथोत्सवप्रायश्चित्तम्। ध्वजपतनभग्नभेदहीनेषु ध्वाजं वैष्णवं व्याहृत्यन्तं हुत्वोत्सवमारभेत। घोषणे हीने ब्राह्मं प्राजापत्यं सौदर्शनमीङ्कारादीन् दक्षिणाग्नौ जुहुयात्। चक्रामितगरुडादिपतने गारुडं वैष्णवं सौदर्शनं वैष्वक्सेनं सौरं सौम्यं वैष्णवं जुहुयात्। देवदेवस्य पतने लोकानां च महद्भयम्। तस्मादुद्विग्नमानसो भूत्वोद्धृत्य बिम्बं प्रक्षाल्य सप्तभिः कलशैः संस्नाप्य शान्तिं हुत्वा आचार्यं संपूज्योत्सवमारभेत। अङ्गहीनं यदि भवेत् तद्विसृज्य अन्यदादाय तदर्चास्थितां [5]शक्तिं तत्रावाह्य संस्नाप्य पूर्ववत्प्रायश्चित्तं [6]हुत्वोत्सवं कुर्यात्।

1. क. पतने च. 2. क. सौम्यमिति न दृश्यते. 3. क. जीर्णे. 4. B. अनेनैव.
5. छ. यां शक्तिं. 6. B. यजित्वा.

SGDF Sri Gargeshwari Digital Foundation

यानाद्यदि पतिते बिम्बे पीठात् प्रभेदे पुनः संयोज्य संशोध्य भूमियज्ञं कृत्वोत्सवं कुर्यात् । प्रभायुधाभरणादीनां भेदे चैवं कृत्वा सप्तभिः कलशैः संस्नाप्य शान्तिं हुत्वाऽरभेत ।

इति श्रीवैखानसे भगवच्छास्त्रे काश्यपप्रोक्ते ज्ञानकाण्डे ध्वजपतनादि-प्रायश्चित्तविधिर्नाम पञ्चोत्तरशततमोऽध्यायः ॥

---

## ॥ अथ षडुत्तरशततमोऽध्यायः ॥

### उत्सवनिष्कृतिः–(अनुवृत्ता)

बलिपतने बलिरक्षकमभ्यर्च्य ध्वाजं वैष्णवं हुत्वा बलिमुद्धरेत् । सन्धौ बलिहीने तत्सन्ध्याधिपमूर्तिभिः वैष्णवं व्याहृत्यन्तं हुत्वा पुनर्बलिं क्षिपेत् ।

वादकगायकनर्तकाप्सरसां पतने भर्त्सने क्रोधे ब्राह्मं गारुडं वैष्णवं हुत्वोत्सवमारभेत । ध्वजपिञ्छचामराम्बरादीनां दहने पतने गारुडमाग्नेयं वैष्णवान्तं जुहुयात । दीपहीने अग्निसूक्तं हुत्वा आग्नेयं धूपहीने बार्हस्पत्यम् ।

ऋत्विगाचार्यादीनां संक्षोभे सप्तर्षिदैवत्यं वैष्णवान्तं जुहुयात् । कालातीते ब्राह्मं वैष्णवम् । एककालोत्सवे हीने तद्दिनाधिपमभ्यर्च्य शान्तिं हुत्वा आरभेत । द्विकाले हीने द्विगुणमुत्सवमाचरेत[1] । नृत्तगेयवाद्यालङ्कार-यानाद्यन्यतमहीने[2] ब्राह्मं प्राजापत्यं गारुडं वैष्वक्सेनं वैष्णवान्तं हुत्वा सम्यक् कुर्यात् । कलहे रुधिरस्रावे अन्युत्पाते शान्तिं हुत्वा ब्राह्मणान् भोजयित्वा पुनरारभेत ।

अवभृथात्पश्चात् सप्ताहान्नवाहाद्वा अन्तरे यदि ध्वजावरोहणं न स्यात् अनावृष्टिर्भवति । अतो ध्वाजं गारुडं ब्राह्मं वैष्णवं हुत्वा देवमनुज्ञाप्य अवरोह-येत् । भृत्यवर्गसंक्षोभे भौतिकं वैष्णवान्तं जुहुयात् । तत्कालातीते ब्राह्मं वैष्णवान्तं जुहुयात । अतः समानीयाराधयति । सूरिषु ब्राह्मं वैष्णवं

---

1. B. पुनरुत्सवमारभेत. 2. B. वाद्याद्यलंकारहीनान्यतमहीने.

SGDF
Sri Gargeshwari Digital Foundation

बार्हस्पत्यं सारस्वतं हुत्वा अभिपूजयेत् । यद्द्रव्यं विहीनं तद्दैवत्यमन्त्रान् वैष्णवान्तं जुहुयात् । प्रतिसरबन्धहीने सौम्यं नागाधिपदैवत्यं वैष्णवान्तं हुत्वा बध्नीयात् । अङ्कुरार्पणहीने सौम्यं भूमिदैवत्यं वैष्णवान्तं हुत्वा आरभेत ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
उत्सवबलिपतनादिप्रायश्चित्तविधिर्नाम
षड्डुत्तरशततमोऽध्यायः ॥

---

## ॥ अथ सप्तोत्तरशततमोऽध्यायः ॥

### द्वितीयतरुणालयनिमित्तम्, निष्कृतिश्च

स्वेदरुधिरपुलक[1] निम्नोषज्वलनचलनक्षेपानतवर्णस्फुटितजल्पनहसनवल्मीकतृणकवकादिसम्भवे अङ्गहीने महाबेरे गर्भागारे अन्त्यप्रवेशने शीर्णे तलभ्रंशे गर्भे भिन्ने, सुधावर्णानुलेपने मन्दिरे [2]दुष्टे, सद्यस्तरुणालयमारभेत । अज्ञानादर्थलोभाद्वा न कुर्याच्चेद् कर्त्राराधकयोः ग्रामादीनां च महद्भयम् । तस्मात् द्वादशाहाभ्यन्तरे अनुकूलर्क्षे वा कारयेत् । द्वादशाहेऽतीते महाशान्तिं हुत्वा वैष्णवान् संपूज्य शुक्तितो दक्षिणां दत्वा आरभेत । मासेऽतीते महाशान्तिं च हुत्वा विप्रशतं भोजयित्वा देवमनुज्ञाप्य कुर्यात । षण्मासेऽतीते भगवान् न रमेत । तस्मात् तरुणालये पूर्ववत् संस्थाप्यार्चयेत् । संवत्सरेऽतीते प्रेतावासो भवति । तस्मात्तरुणलाये देवं संस्थाप्य जीर्णबेरं विसर्जयेत् ।

### जीर्णबेरत्यागप्रकारः

गोवालरज्जुभिः कुशरज्जुभिः ऊर्णाभिः तान्तवैः सूत्रैः वासोभिः बेरमाच्छाद्य 'पूषा ते ग्रन्थि'मिति सुदृढमाबद्ध्य गजगोवृषस्यन्दनरथरङ्गशिबिकाब्राह्मणानामन्यतममारोप्य आघोष्यालङ्कृत्य [3]समुद्रं समुद्रगां नदीं ह्रदं वा अशोष्यजलाशयमन्यं वा आश्रित्य तत्तीरे पञ्चाग्नीन् साधयित्वा दिग्देवताभ्यः

---

1. B. निम्नेषु. 2. क. दृष्टे. 3. B. समुद्रं वा.

SGDF
Sri Gurgeshwari Digital Foundation

पृथक् पृथक् हुत्वा सभ्ये शान्तिं हुत्वा यानस्थं [1] बिम्बं प्रणम्य 'परं रंह' इत्यादाय नावमारोप्य प्राङ्मुख उदङ्मुखो वा भूत्वा विष्णुसूक्तं जप्त्वा [2] अगाधे क्षिप्त्वा वैष्णवं हुत्वा आचार्येभ्यो धेनुचतुष्कं दद्यात् ।

दारुशैलजबेराणां पतनोत्पाटनादिषु यदि न स्युः [3] व्रणादयः, तानि शुचौ भूमौ खनित्वा कुशदर्भाङ्कुराण्यास्तीर्य तत्र प्रक्षिप्य त्रिरात्रेऽतीते शिलाग्रहणवद्धुत्वा महाशान्तिं हुत्वा आरभेत । प्राणाङ्गहीने चेत् अपनीयान्यदाहरेत्[4] ।

तरुणालयमकृत्वा नवकर्मणि कृते महत्तरो दोषो भवति । कर्तारो रौरवं यान्ति । अतः सहस्रभोजनं कृत्वा सहस्राहुतीः हुत्वा महाशान्तिं हुत्वा [5] पुनर्बालागारे संस्थाप्यारभेत । बालागारे अयथावत्कृते भूमियज्ञं पुनः पुण्याहं शान्तिं च हुत्वा यथास्थानं निवेश्यारभेत । [6] आरब्धविधिप्रमाणेनैव सर्वं कारयेत् । विधिसङ्करदोषो वर्णाश्रमसङ्कराय भवति ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे
जीर्णबेरपरित्यागविधिर्नाम सप्तोत्तरशततमोऽध्यायः ॥

---

## ॥ अथ अष्टोत्तरशततमोऽध्यायः ॥

### वैष्णवशास्त्रद्वैविध्यम्

वैखानसं पाञ्चरात्रमिति विधानद्वयं विष्णोस्तन्त्रम् । वैखानसं सौम्यमाग्नेयं पाञ्चरात्रम् । तस्मात् ग्रामनगरपत्तनादिषु गृहेषु च वैखानसविधानेन भगवन्तं पूजयेत् । भुक्तिमुक्तिफलप्रदत्वात् सौम्यत्वात्तस्य । नदीतीराद्रिवनप्रदेशे विविक्तेऽपि जनेभ्योऽत्यत्र पाञ्चरात्रेणैवार्चयेत् । तान्त्रिकत्वादाग्नेयत्वात्तस्य । न कदाचिज्जनाकीर्णे समृद्धिकामः कारयेत् । कुर्याच्चेद्विनाशाय भवति ।

---

1. ग. देवं. 2. क. अखाते छ. अघाते. 3. छ. व्रणाः अधस्ताच्छुचौ.
4. B. आरभेत. 5. ग. तत्स्थाने बालागारे. घ. अथ बालागारे. 6. क. आरब्धं.

SGDF
Sri-Gargeshwari Digital Foundation

वैखानसविधानेन चिते स्थाने आग्नेयं नाचरेत । यदि कुर्यात् भस्मसात् भवति । तद्दोषशमनार्थं महाशान्तिं हुत्वा ब्राह्मणान् परिवेष्य वास्तुशुद्धिं कृत्वा पूर्ववत् स्थापयेत् । तदाग्नेये सौम्यसंवेशः समृद्धिकरणाय भवति । तस्मात् सम्यक् समाचरेत् ।

### सर्वशान्तिहोमः

अनुक्तानामरिष्टानां मूलमन्त्रद्वयजपहोमैः शान्तिं कारयेत । [1]सर्ववेदमयं सर्वार्थसाधकं परात्परतरं गुह्यात गुह्यतरम । तस्मात्सम्यक् समाचरेत् । वरं लक्षयुक्तं मध्यममष्टसहस्रमधमं पञ्चसहस्रं तद्धोमः । तस्मात्कर्मगौरवं विदित्वा तदर्हमाचरेत् । शुचौ देशे भगवन्तं सप्तविंशतिविग्रहैराराध्य आचार्यं देववत्पूज्याऽरभेत । आज्येनाश्वत्थसमिद्भिः चरुणा दूर्वाङ्कुरैर्वा हृत्पद्मसुषिरे जाज्वल्यमानमकुटं देवं दिव्यभूषणं श्यामाम्बरधरं तप्तहाटकसङ्काशं रक्तास्य-पाणिपादाक्षं प्रणवात्मकं शङ्खचक्रधरं परात्परं देवं विष्णुं मनसा ध्यात्वा जुहुयात् । तिलगन्धपुष्पाक्षतरत्नसंपूर्णमश्वत्थप्लक्षवटापामार्गपल्लवयुतं [2] रक्तवस्त्र-वेष्टितं कलशं धान्योपरि स्थाप्य तन्मध्ये वारुणं मण्डलं [3]वारिबीजयुतं ध्यात्वा [4]प्रणवैरावेष्ट्य अनेन मन्त्रेणाभिमृश्य तज्जलेन शिष्यं सहस्रशः प्रोक्ष्य स्नानं वा कारयेत् । एतेन ग्रहदोषव्याधिपीडोपद्रवरक्तस्त्रीवल्मीकाद्युत्पाताः दुस्स्वप्नदर्शन-शत्रुचोरराजभयबन्धपिशाचापस्माराद्युपद्रवा अज्ञानदोषाः दैवकृताश्चान्ये शान्तिं यान्ति । अतः सम्यगष्टाक्षरेण द्वादशाक्षरेण वा जपेन होमेन वा कर्मगौरव-वशादुत्तममध्यमाधमप्रकारैरनुक्तानामाचरेत् । इदं धन्यं पुण्यवर्धनं नाभक्ताय नाशुश्रूषवे नापुत्राय नाशिष्याय [5]नासंसक्ताय दद्यादित्याह कश्यपः ।

इति श्रीवैखानसे भगवच्छास्त्रे कश्यपप्रोक्ते ज्ञानकाण्डे

अष्टोत्तरशततमोऽध्यायः ॥

ग्रन्थश्च समाप्तः

---

1. B. सर्वदेव. 2. B. पल्लवेति नास्ति. 3. ग. वारुण. 4. प्रणवेन.
5. B. समाज्ञाय सक्ताय.

SGDF
Sri Gargeshwari Digital Foundation

श्रीः

## अत्र परामृष्टमातृकाकोशेषु आद्यन्तयोः धृतपाठविशेषसूचिका.

क. कोशे— ‘शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥
इत्येक एव श्लोकः ग्रन्थादौ दृश्यते । तत्र तत्र पत्रेषु प्रायः शीर्षिका लिखिताः ।

क. कोशे, आदौ— शिष्या हि भृग्वत्रिमरीचिमुख्याः शुश्रूषया यस्य सदागमेषु ।
विशारदा वंशकरा बभूवुः तमद्य वन्दे विखनोमुनीन्द्रम् ॥
(इत्येक एव श्लोकः)

अन्ते च— श्रीहयग्रीवपरब्रह्मणे नमः, श्रीरामचन्द्रार्पणमस्तु, श्रीरामाय नमो नमः, श्रीकोदण्डरामाचार्यपाकयाजिस्वहस्तलिखितम् ।

ग. कोशे — श्रीविखनसपरब्रह्मणे नमः, रुधिरोद्गारिनामसंवत्सरे मिथुनमासे कृष्णपक्षे गुरुवासरे अष्टाविंशद्दिने दिनान्ते काश्यपग्रन्थज्ञानकाण्डं रामानुजभट्टाचार्येण लिखितं सम्पूर्णम् । श्रीमदनन्तभट्टाचार्यगुरवे नमः । श्रीमहालक्ष्म्यै नमः ।

घ. कोशे आदौ — प्रथमभागे
श्रौतस्मार्तादिकं कर्म निखिलं येन सूत्रितम् ।
तस्मै समस्तवेदार्थविदे विखनसे नमः ॥
यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम् ।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥

अन्ते च द्वितीयभागे—‘हरिः ओम् । हयवदनपरब्रह्मणे नमः । श्रीविखनसगुरवे नमः । शुभमस्तु । हेविलम्बिवर्षं पङ्गुनिमासं २१-तेदि शनिक्किळमै ४-मणिक्कु येलुदि मुडिन्ददु । रङ्गन्’ इति दृश्यते । तत्र तत्राध्यायान्ते बळवनूर् रङ्गन् इत्यपि बहुशो दृश्यते । अन्त्यपत्रे सन्तानगोपालमन्त्रश्च लिखितः ।

SGDF
Sri Gurgeshwari Digital Foundation

छ. कोशे आदौ – शुक्लाम्बरधरं । यस्य द्विरदवक्त्राद्याः । विष्वक्सेनः स्मृतो रजा । श्रौतस्मार्तादिकं कर्म । श्रीनृसिंहाय परब्रह्मणे नमः । श्रीविखनसमहागुरवे नमः । शार्वरिनामसंवत्सरे उत्तरायणे वसन्तऋतौ वृषभमासे कृष्णपक्षे मूलानक्षत्रे गुरुवासरे चतुर्थदिने काश्यपप्रोक्तज्ञानकाण्डे शताष्टमाध्यायं सम्पूर्णमाह येळुदि मुडिन्ददु । यादृशं पुस्तकं चैव तादृशं लिखितं मया । अबद्धं वा सुबद्धं वा मम दोषो न विद्यते । करकृतमपराधं क्षन्तुमर्हन्ति सन्तः । पोणूविळै कळत्तूरिलिरुक्कम् वैखानसं आगस्त्यगोत्रं वेङ्कटशर्मदासन् स्वहस्तलिखितम् ।

ज. पुस्तके – अन्ते आहत्य ग्रन्थसङ्ख्या ३७५० उत्तरमेरूर् विजयराघवभट्टाचार्यर् कुमारर् तिरुवेङ्कडभट्टाचार्यरुडैय काश्यपप्रोक्तं ज्ञानकाण्डं कल्याणपुरं कृष्णमाचारियाराल् येळुदप्पट्टदु ।

झ. पुस्तके – शुक्लाम्बरधरं । यस्य द्विरदवक्त्राद्याः । विष्वक्सेनस्स्मृतः । श्रौतस्मार्तादिकं । श्रीरामाय नमः । श्रीवाग्देविने नमः । श्रियै नमः ।

ट. कोशे – आदौ, श्रीभूसमेतश्रीवरदराजपरब्रह्मणे नमः । श्रीमते विखनसे नमः । श्रीवैखानसीयकाश्यपसंहिता ।

ख. च. ट.–कोशेषु नास्ति विशेषः

---

SGDF
Sri Gargeshwari Digital Foundation

# अत्र परामृष्टमातृकाकोशानां विवरणम्

1. क तालपत्रं आंध्रीलिपिः 219 प. 6. पंक्तयः $14\frac{7}{8} \times 1\frac{1}{4}$. 108 अ. सहायदः श्रीवैंखानसविद्यानिलयम्, आकुलमन्नाडु. अक्षराणि स्पष्टानि लिखितं च विशदम् ।

2. $क_1$. ताल. आंध्री. 85 प. 8. $16 \times 1\frac{1}{2}$. 108 अ. श्रीवैंखानसविद्यानिलयम् आकुलमन्नाडु. अक्षराणि स्पष्टानि. लिखितं च विशदम् । नातिशुद्धः कोशः ।

3. ख. काग. ज. देवनागरी 362 पु. 17. Fc.$\frac{1}{2}$ 108 अ. श्रीवेङ्कटेश्वरप्राच्यपुस्तकभाण्डागारः तिरुपति अडयार् पुस्तकभाण्डागारात् उपलब्धः (३०-११-४३) दिने रामचन्द्रभट्टेन लिखितः । तत्रत्य मातृकासङ्केतः Shelf No. 8. E. 4.

4. ग. ताल. ग्रन्थ. 67 पु. 9. $16 \times 1\frac{5}{8}$ 194. खण्डा: विल्लिवाक्कम्-अर्चकम् श्री. रामानुजभट्टाचार्याः अक्षराणि लेखनं च सुगमम् । नाति शुद्धः । खण्डात्मकः.

5. घ. ताल. ग्रन्थ. 190 पु. to 206 पु. 7. $16\frac{7}{4} \times 1\frac{1}{4}$ 60 to 108 अ. श्री. नरसिंह भट्टाचार्याः वलवनूर्. भागद्वयात्मकग्रन्थः शिथिलप्रायः । अक्षराणि लिखितं च न सुगमम् ।

6. च. काग. देवना. 250 पु. 15. Fc. $\frac{1}{4}$. 108 अ. श्रीवेङ्कटेश्वरप्राच्यपुस्तकभाण्डागारः तिरुपति । मातृका चास्य - सिङ्गपेरुमालुकोविल् श्रीवेङ्कटनरसिंहभट्टाचार्यात् श्रीमद्भिः पण्डित रघुनाथचक्रवर्तिभट्टाचार्यैः सम्पादिताः ।

7. छ. ताल. ग्रन्थ. 103 प. 9. $15\frac{1}{2} \times 1\frac{1}{2}$. 108 अ. श्री. अर्चकं नरसिंहभट्टाचार्याः तिरुमुक्कुडल् । २४ आरभ्य ४३ अन्तानि पत्राणि नष्टानि, तथा ग्रन्थश्च २२ अध्यायमारभ्य ४९ पर्यन्तंलुप्तः ।

8. ज. काग. ग्रन्थ. 477 पु. 20. रायल् $\frac{1}{4}$. 108 अ. श्री. अर्चकं तिरुवेङ्गड-भट्टाचार्याः उत्तरमेरूर् । अक्षराणि लेखनं च सुगमम् ।

9. झ. ताल. ग्रन्थ. 115 प. 9. $14\frac{3}{8} \times 1\frac{1}{2}$. 108 अ. श्री. अर्चकं तिरुवेङ्गड-भट्टाचार्याः उत्तरमेरूर् । विशदतरं स्पष्टैरक्षरैः लिखितः

10. ट. काग. ग्रन्थ. 143 पु. 23 Fc.$\frac{1}{4}$. 71 अ. मीमांसाशिरोमणि श्री. टि. आर्. नारायणभट्टाचार्याः तिरुविशलूर् । अधुनातनलेखनम् - अध्यायान्तगद्यादि न लभ्यते । अस्य मातृकैव $ट^{-1}$ संकेतितः ।

11. $ट^{-1}$ ताल. ग्रन्थ. 148 प. 6. $16\frac{1}{2} \times 1\frac{2}{5}$. 91 अ. अक्षराण्यतीव दुर्निरूपाणि, नातिशुद्धः, मातृकाकोशेषु सर्वेष्वपि विषमस्थलेषु प्रायः शुद्धपाठयुतः ।

---

अत्र परामर्शसौकर्याय पूर्वोक्तमातृकाकोशानां पाठसाम्यात् A. B. इति वर्गद्वये निवेशः तत्र, क. $क^{-1}$ घ, च कोशाः A. वर्गे, ख, ग, छ, ज, झ कोशाः B. वर्गे च निवेशिताः । $ट^{-1}$, ट, कोशौ च पूर्वोदितवर्गद्वयाद्भिन्नौ. तत्र A. वर्गीयाः कावेरी-परिसरेषु, B. वर्गीयाः तुण्डीरान्ध्रमण्डलयोः ट कोशौ च महीशूरसंस्थानेचप्रचुराः ।

SGFF
Sri Gangadharan Digital Foundation

